# महाभारत - उद्योग पर्व

# ॥ महाभारत उद्योगपर्व ॥

## उद्योगपर्व

### अध्याय ००१

वैशंपायन उवाच ॥

कृत्वा विवाहं तु कुरुप्रवीरा ;स्तदाभिमन्योर्मुदितस्वपक्षाः ।
विश्रम्य चत्वार्युषसः प्रतीताः ; सभां विराटस्य ततोऽभिजग्मुः ॥ ००१ ॥

सभा तु सा मत्स्यपतेः समृद्धा ; मणिप्रवेकोत्तमरत्नचित्रा ।
न्यस्तासना माल्यवती सुगन्धा ; तामभ्ययुस्ते नरराजवर्याः ॥ ००२ ॥

अथासनान्याविशतां पुरस्ता ;दुभौ विराटद्रुपदौ नरेन्द्रौ ।
वृद्धश्च मान्यः पृथिवीपतीनां ; पितामहो रामजनार्दनाभ्याम् ॥ ००३ ॥

पाञ्चालराजस्य समीपतस्तु ; शिनिप्रवीरः सहरौहिणेयः ।
मत्स्यस्य राज्ञस्तु सुसंनिकृष्टौ ; जनार्दनश्चैव युधिष्ठिरश्च ॥ ००४ ॥

सुताश्च सर्वे द्रुपदस्य राज्ञो ; भीमार्जुनौ माद्रवतीसुतौ च ।
प्रद्युम्नसाम्बौ च युधि प्रवीरौ ; विराटपुत्रश्च सहाभिमन्युः ॥ ००५ ॥

सर्वे च शूराः पितृभिः समाना ; वीर्येण रूपेण बलेन चैव ।
उपाविशन्द्रौपदेयाः कुमाराः ; सुवर्णचित्रेषु वरासनेषु ॥ ००६ ॥

तथोपविष्टेषु महारथेषु ; विभ्राजमानाम्बरभूषणेषु ।
रराज सा राजवती समृद्धा ; ग्रहैरिव द्यौर्विमलैरुपेता ॥ ००७ ॥

ततः कथास्ते समवाययुक्ताः ; कृत्वा विचित्राः पुरुषप्रवीराः ।
तस्थुर्मुहूर्तं परिचिन्तयन्तः ; कृष्णं नृपास्ते समुदीक्षमाणाः ॥ ००८ ॥

कथान्तमासाद्य च माधवेन ; संघट्टिताः पाण्डवकार्यहेतोः ।
ते राजसिंहाः सहिता ह्यश्रृण्व ;न्वाक्यं महार्थं च महोदयं च ॥ ००९ ॥

कृष्ण उवाच ॥

सर्वैर्भवद्भिर्विदितं यथायं ; युधिष्ठिरः सौबलेनाक्षवत्याम् ।
जितो निकृत्यापहृतं च राज्यं ; पुनः प्रवासे समयः कृतश्च ॥ ०१० ॥

शक्तैर्विजेतुं तरसा महीं च ; सत्ये स्थितैस्तच्चरितं यथावत् ।
पाण्डोः सुतैस्तद्व्रतमुग्ररूपं ; वर्षाणि षड्सप्त च भारताग्र्यैः ॥ ०११ ॥

त्रयोदशश्चैव सुदुस्तरोऽय ;मज्ञायमानैर्भवतां समीपे ।
क्लेशानसह्यांश्च तितिक्षमाणै ;र्यथोषितं तद्विदितं च सर्वम् ॥ ०१२ ॥

एवं गते धर्मसुतस्य राज्ञो ; दुर्योधनस्यापि च यद्धितं स्यात् ।
तच्चिन्तयध्वं कुरुपाण्डवानां ; धर्म्यं च युक्तं च यशस्करं च ॥ ०१३ ॥

अधर्मयुक्तं च न कामयेत ; राज्यं सुराणामपि धर्मराजः ।
धर्मार्थयुक्तं च महीपतित्वं ; ग्रामेऽपि कस्मिंश्चिदयं बुभूषेत् ॥ ०१४ ॥

पित्र्यं हि राज्यं विदितं नृपाणां ; यथापकृष्टं धृतराष्ट्रपुत्रैः ।
मिथ्योपचारेण तथाप्यनेन ; कृच्छ्रं महत्प्राप्तमसह्यरूपम् ॥ ०१५ ॥

न चापि पार्थो विजितो रणे तैः ; स्वतेजसा धृतराष्ट्रस्य पुत्रैः ।
तथापि राजा सहितः सुहृद्भि ;रभीप्सतेऽनामयमेव तेषाम् ॥ ०१६ ॥

यत्तत्स्वयं पाण्डुसुतैर्विजित्य ; समाहृतं भूमिपतीन्निपीड्य ।
तत्प्रार्थयन्ते पुरुषप्रवीराः ; कुन्तीसुता माद्रवतीसुतौ च ॥ ०१७ ॥

बालास्त्विमे तैर्विविधैरुपायैः ; संप्रार्थिता हन्तुममित्रसाहाः ।
राज्यं जिहीर्षद्भिरसद्भिरुग्रैः ; सर्वं च तद्वो विदितं यथावत् ॥ ०१८ ॥

तेषां च लोभं प्रसमीक्ष्य वृद्धं ; धर्मात्मतां चापि युधिष्ठिरस्य ।
संबन्धितां चापि समीक्ष्य तेषां ; मतिं कुरुध्वं सहिताः पृथक्क ॥ ०१९ ॥

इमे च सत्येऽभिरताः सदैव ; तं पारयित्वा समयं यथावत् ।
अतोऽन्यथा तैरुपचर्यमाणा ; हन्युः समेतान्धृतराष्ट्रपुत्रान् ॥ ०२० ॥

तैर्विप्रकारं च निशम्य राज्ञः ; सुहृज्जनास्तान्परिवारयेयुः ।
युद्धेन बाधेयुरिमांस्तथैव ; तैर्वध्यमाना युधि तांश्च हन्युः ॥ ०२१ ॥

तथापि नेमेऽल्पतया समर्था ;स्तेषां जयायेति भवेन्मतं वः ।
समेत्य सर्वे सहिताः सुहृद्भि ;स्तेषां विनाशाय यतेयुरेव ॥ ०२२ ॥

दुर्योधनस्यापि मतं यथाव ;न्न ज्ञायते किं नु करिष्यतीति ।
अज्ञायमाने च मते परस्य ; किं स्यात्समारभ्यतमं मतं वः ॥ ०२३ ॥

तस्मादितो गच्छतु धर्मशीलः ; शुचिः कुलीनः पुरुषोऽप्रमत्तः ।
दूतः समर्थः प्रशमाय तेषां ; राज्यार्धदानाय युधिष्ठिरस्य ॥ ०२४ ॥

निशम्य वाक्यं तु जनार्दनस्य ; धर्मार्थयुक्तं मधुरं समं च ।
समाददे वाक्यमथाग्रजोऽस्य ; संपूज्य वाक्यं तदतीव राजन् ॥ ०२५ ॥

# अध्याय ००२

बलदेव उवाच ॥

श्रुतं भवद्भिर्गदपूर्वजस्य ; वाक्यं यथा धर्मवदर्थवच्च ।
अजातशत्रोश्च हितं हितं च ; दुर्योधनस्यापि तथैव राज्ञः ॥ ००१ ॥

अर्धं हि राज्यस्य विसृज्य वीराः ; कुन्तीसुतास्तस्य कृते यतन्ते ।
प्रदाय चार्धं धृतराष्ट्रपुत्रः ; सुखी सहास्माभिरतीव मोदेत् ॥ ००२ ॥

लब्ध्वा हि राज्यं पुरुषप्रवीराः ; सम्यक्प्रवृत्तेषु परेषु चैव ।
ध्रुवं प्रशान्ताः सुखमाविशेयु ;स्तेषां प्रशान्तिश्च हितं प्रजानाम् ॥ ००३ ॥

दुर्योधनस्यापि मतं च वेत्तुं ; वक्तुं च वाक्यानि युधिष्ठिरस्य ।
प्रियं मम स्याद्यदि तत्र कश्चि ;द्व्रजेच्छमार्थं कुरुपाण्डवानाम् ॥ ००४ ॥

स भीष्ममामन्त्र्य कुरुप्रवीरं ; वैचित्रवीर्यं च महानुभावम् ।
द्रोणं सपुत्रं विदुरं कृपं च ; गान्धारराजं च ससूतपुत्रम् ॥ ००५ ॥

सर्वे च येऽन्ये धृतराष्ट्रपुत्रा ; बलप्रधाना निगमप्रधानाः ।
स्थिताश्च धर्मेषु यथा स्वकेषु ; लोकप्रवीराः श्रुतकालवृद्धाः ॥ ००६ ॥

एतेषु सर्वेषु समागतेषु ; पौरेषु वृद्धेषु च सङ्गतेषु ।
ब्रवीतु वाक्यं प्रणिपातयुक्तं ; कुन्तीसुतस्यार्थकरं यथा स्यात् ॥ ००७ ॥

सर्वास्ववस्थासु च ते न कौट्या ;द्ग्रस्तो हि सोऽर्थो बलमाश्रितैस्तैः ।
प्रियाभ्युपेतस्य युधिष्ठिरस्य ; द्यूते प्रमत्तस्य हृतं च राज्यम् ॥ ००८ ॥

निवार्यमाणश्च कुरुप्रवीरैः ; सर्वैः सुहृद्भिर्ह्ययमप्यतज्ज्ञः ।
गान्धारराजस्य सुतं मताक्षं ; समाह्वयेद्देवितुमाजमीढः ॥ ००९ ॥

दुरोदरास्तत्र सहस्रशोऽन्ये ; युधिष्ठिरो यान्विषहेत जेतुम् ।
उत्सृज्य तान्सौबलमेव चायं ; समाह्वयत्तेन जितोऽक्षवत्याम् ॥ ०१० ॥

स दीव्यमानः प्रतिदेवनेन ; अक्षेषु नित्यं सुपराङ्मुखेषु ।
संरम्भमाणो विजितः प्रसह्य ; तत्रापराधः शकुनेर्न कश्चित् ॥ ०११ ॥

तस्मात्प्रणम्यैव वचो ब्रवीतु ; वैचित्रवीर्यं बहुसामयुक्तम् ।
तथा हि शक्यो धृतराष्ट्रपुत्रः ; स्वार्थे नियोक्तुं पुरुषेण तेन ॥ ०१२ ॥

वैशंपायन उवाच ॥

एवं ब्रुवत्येव मधुप्रवीरे ; शिनिप्रवीरः सहसोत्पपात ।
तच्चापि वाक्यं परिनिन्द्य तस्य ; समाददे वाक्यमिदं समन्युः ॥ ०१३ ॥

---

# अध्याय ००३

सात्यकिरुवाच ॥

यादृशः पुरुषस्यात्मा तादृशं संप्रभाषते ।
यथारूपोऽन्तरात्मा ते तथारूपं प्रभाषसे ॥ ००१ ॥

सन्ति वै पुरुषाः शूराः सन्ति कापुरुषास्तथा ।
उभावेतौ दृढौ पक्षौ दृश्येते पुरुषान्प्रति ॥ ००२ ॥

एकस्मिन्नेव जायेते कुले क्लीबमहारथौ ।
फलाफलवती शाखे यथैकस्मिन्वनस्पतौ ॥ ००३ ॥

नाभ्यसूयामि ते वाक्यं ब्रुवतो लाङ्गलध्वज ।
ये तु शृण्वन्ति ते वाक्यं तानसूयामि माधव ॥ ००४ ॥

कथं हि धर्मराजस्य दोषमल्पमपि ब्रुवन् ।
लभते परिषन्मध्ये व्याहर्तुमकुतोभयः ॥ ००५ ॥

समाहूय महात्मानं जितवन्तोऽक्षकोविदाः ।
अनक्षज्ञं यथाश्रद्धं तेषु धर्मजयः कुतः ॥ ००६ ॥

यदि कुन्तीसुतं गेहे क्रीडन्तं भ्रातृभिः सह ।
अभिगम्य जयेयुस्ते तत्तेषां धर्मतो भवेत् ॥ ००७ ॥

समाहूय तु राजानं क्षत्रधर्मरतं सदा ।
निकृत्या जितवन्तस्ते किं नु तेषां परं शुभम् ॥ ००८ ॥

कथं प्रणिपतेच्चायमिह कृत्वा पणं परम् ।
वनवासाद्विमुक्तस्तु प्राप्तः पैतामहं पदम् ॥ ००९ ॥

यद्ययं परवित्तानि कामयेत युधिष्ठिरः ।
एवमप्ययमत्यन्तं परान्नार्हति याचितुम् ॥ ०१० ॥

कथं च धर्मयुक्तास्ते न च राज्यं जिहीर्षवः ।
निवृत्तवासान्कौन्तेयान्य आहुर्विदिता इति ॥ ०११ ॥

अनुनीता हि भीष्मेण द्रोणेन च महात्मना ।
न व्यवस्यन्ति पाण्डूनां प्रदातुं पैतृकं वसु ॥ ०१२ ॥

अहं तु ताञ्शितैर्बाणैरनुनीय रणे बलात् ।

पादयोः पातयिष्यामि कौन्तेयस्य महात्मनः ॥ ०१३ ॥

अथ ते न व्यवस्यन्ति प्रणिपाताय धीमतः ।
गमिष्यन्ति सहामात्या यमस्य सदनं प्रति ॥ ०१४ ॥

न हि ते युयुधानस्य संरब्धस्य युयुत्सतः ।
वेगं समर्थाः संसोढुं वज्रस्येव महीधराः ॥ ०१५ ॥

को हि गाण्डीवधन्वानं कश्च चक्रायुधं युधि ।
मां चापि विषहेत्को नु कश्च भीमं दुरासदम् ॥ ०१६ ॥

यमौ च दृढधन्वानौ यमकल्पौ महाद्युती ।
को जिजीविषुरासीदेद्धृष्टद्युम्नं च पार्षतम् ॥ ०१७ ॥

पञ्चेमान्पाण्डवेयांश्च द्रौपद्याः कीर्तिवर्धनान् ।
समप्रमाणान्पाण्डूनां समवीर्यान्मदोत्कटान् ॥ ०१८ ॥

सौभद्रं च महेष्वासममरैरपि दुःसहम् ।
गदप्रद्युम्नसाम्बांश्च कालवज्रानलोपमान् ॥ ०१९ ॥

ते वयं धृतराष्ट्रस्य पुत्रं शकुनिना सह ।
कर्णेन च निहत्याजावभिषेक्ष्याम पाण्डवम् ॥ ०२० ॥

नाधर्मो विद्यते कश्चिच्छत्रून्हत्वाततायिनः ।
अधर्म्यमयशस्यं च शात्रवाणां प्रयाचनम् ॥ ०२१ ॥

हृद्गतस्तस्य यः कामस्तं कुरुध्वमतन्द्रिताः ।
निसृष्टं धृतराष्ट्रेण राज्यं प्राप्नोतु पाण्डवः ॥ ०२२ ॥

अद्य पाण्डुसुतो राज्यं लभतां वा युधिष्ठिरः ।
निहता वा रणे सर्वे स्वप्स्यन्ति वसुधातले ॥ ०२३ ॥

# अध्याय ००४

द्रुपद उवाच ॥

एवमेतन्महाबाहो भविष्यति न संशयः ।
न हि दुर्योधनो राज्यं मधुरेण प्रदास्यति ॥ ००१ ॥

अनुवर्त्स्यति तं चापि धृतराष्ट्रः सुतप्रियः ।
भीष्मद्रोणौ च कार्पण्यान्मौर्ख्याद्राधेयसौबलौ ॥ ००२ ॥

बलदेवस्य वाक्यं तु मम ज्ञाने न युज्यते ।
एतद्धि पुरुषेणाग्रे कार्यं सुनयमिच्छता ॥ ००३ ॥

न तु वाच्यो मृदु वचो धार्तराष्ट्रः कथञ्चन ।
न हि मार्दवसाध्योऽसौ पापबुद्धिर्मतो मम ॥ ००४ ॥

गर्दभे मार्दवं कुर्याद्गोषु तीक्ष्णं समाचरेत् ।
मृदु दुर्योधने वाक्यं यो ब्रूयात्पापचेतसि ॥ ००५ ॥

मृदु वै मन्यते पापो भाष्यमाणमशक्तिजम् ।
जितमर्थं विजानीयादबुधो मार्दवे सति ॥ ००६ ॥

एतच्चैव करिष्यामो यत्नश्च क्रियतामिह ।
प्रस्थापयाम मित्रेभ्यो बलान्युद्योजयन्तु नः ॥ ००७ ॥

शल्यस्य धृष्टकेतोश्च जयत्सेनस्य चाभिभोः ।

केकयानां च सर्वेषां दूता गच्छन्तु शीघ्रगाः ॥ ००८ ॥

स तु दुर्योधनो नूनं प्रेषयिष्यति सर्वशः ।
पूर्वाभिपन्नाः सन्तश्च भजन्ते पूर्वचोदकम् ॥ ००९ ॥

तत्त्वरध्वं नरेन्द्राणां पूर्वमेव प्रचोदने ।
महद्धि कार्यं वोढव्यमिति मे वर्तते मतिः ॥ ०१० ॥

शल्यस्य प्रेष्यतां शीघ्रं ये च तस्यानुगा नृपाः ।
भगदत्ताय राज्ञे च पूर्वसागरवासिने ॥ ०११ ॥

अमितौजसे तथोग्राय हार्दिक्यायाहुकाय च ।
दीर्घप्रज्ञाय मल्लाय रोचमानाय चाभिभो ॥ ०१२ ॥

आनीयतां बृहन्तश्च सेनाबिन्दुश्च पार्थिवः ।
पापजित्प्रतिविन्ध्यश्च चित्रवर्मा सुवास्तुकः ॥ ०१३ ॥

बाह्लीको मुञ्जकेशश्च चैद्याधिपतिरेव च ।
सुपार्श्वश्च सुबाहुश्च पौरवश्च महारथः ॥ ०१४ ॥

शकानां पह्लवानां च दरदानां च ये नृपाः ।
काम्बोजा ऋषिका ये च पश्चिमानूपकाश्च ये ॥ ०१५ ॥

जयत्सेनश्च काश्यश्च तथा पञ्चनदा नृपाः ।
क्राथपुत्रश्च दुर्धर्षः पार्वतीयाश्च ये नृपाः ॥ ०१६ ॥

जानकिश्च सुशर्मा च मणिमान्पौतिमत्स्यकः ।
पांसुराष्ट्राधिपश्चैव धृष्टकेतुश्च वीर्यवान् ॥ ०१७ ॥

औड्रश्च दण्डधारश्च बृहत्सेनश्च वीर्यवान् ।
अपराजितो निषादश्च श्रेणिमान्वसुमानपि ॥ ०१८ ॥

बृहद्बलो महौजाश्च बाहुः परपुरञ्जयः ।
समुद्रसेनो राजा च सह पुत्रेण वीर्यवान् ॥ ०१९ ॥

अदारिश्च नदीजश्च कर्णवेष्टश्च पार्थिवः ।
समर्थश्च सुवीरश्च मार्जारः कन्यकस्तथा ॥ ०२० ॥

महावीरश्च कद्रुश्च निकरस्तुमुलः क्रथः ।
नीलश्च वीरधर्मा च भूमिपालश्च वीर्यवान् ॥ ०२१ ॥

दुर्जयो दन्तवक्रश्च रुक्मी च जनमेजयः ।
आषाढो वायुवेगश्च पूर्वपाली च पार्थिवः ॥ ०२२ ॥

भूरितेजा देवकश्च एकलव्यस्य चात्मजः ।
कारूषकाश्च राजानः क्षेमधूर्तिश्च वीर्यवान् ॥ ०२३ ॥

उद्भवः क्षेमकश्चैव वाटधानश्च पार्थिवः ।
श्रुतायुश्च दृढायुश्च शाल्वपुत्रश्च वीर्यवान् ॥ ०२४ ॥

कुमारश्च कलिङ्गानामीश्वरो युद्धदुर्मदः ।
एतेषां प्रेष्यतां शीघ्रमेतद्धि मम रोचते ॥ ०२५ ॥

अयं च ब्राह्मणः शीघ्रं मम राजन्पुरोहितः ।
प्रेष्यतां धृतराष्ट्राय वाक्यमस्मिन्समर्प्यताम् ॥ ०२६ ॥

यथा दुर्योधनो वाच्यो यथा शांतनवो नृपः ।
धृतराष्ट्रो यथा वाच्यो द्रोणश्च विदुषां वरः ॥ ०२७ ॥

# अध्याय ००५

वासुदेव उवाच ॥

उपपन्नमिदं वाक्यं सोमकानां धुरंधरे ।
अर्थसिद्धिकरं राज्ञः पाण्डवस्य महौजसः ॥ ००१ ॥

एतच्च पूर्वकार्यं नः सुनीतमभिकाङ्क्षताम् ।
अन्यथा ह्याचरन्कर्म पुरुषः स्यात्सुबालिशः ॥ ००२ ॥

किं तु संबन्धकं तुल्यमस्माकं कुरुपाण्डुषु ।
यथेष्टं वर्तमानेषु पाण्डवेषु च तेषु च ॥ ००३ ॥

ते विवाहार्थमानीता वयं सर्वे यथा भवान् ।
कृते विवाहे मुदिता गमिष्यामो गृहान्प्रति ॥ ००४ ॥

भवान्वृद्धतमो राज्ञां वयसा च श्रुतेन च ।
शिष्यवत्ते वयं सर्वे भवामेह न संशयः ॥ ००५ ॥

भवन्तं धृतराष्ट्रश्च सततं बहु मन्यते ।
आचार्ययोः सखा चासि द्रोणस्य च कृपस्य च ॥ ००६ ॥

स भवान्प्रेषयत्वद्य पाण्डवार्थकरं वचः ।
सर्वेषां निश्चितं तन्नः प्रेषयिष्यति यद्भवान् ॥ ००७ ॥

यदि तावच्छमं कुर्यान्न्यायेन कुरुपुङ्गवः ।
न भवेत्कुरुपाण्डूनां सौभ्रात्रेण महान्क्षयः ॥ ००८ ॥

अथ दर्पान्वितो मोहान्न कुर्याद्धृतराष्ट्रजः ।
अन्येषां प्रेषयित्वा च पश्चादस्मान्समाह्वयेः ॥ ००९ ॥

ततो दुर्योधनो मन्दः सहामात्यः सबान्धवः ।
निष्ठामापत्स्यते मूढः क्रुद्धे गाण्डीवधन्वनि ॥ ०१० ॥

वैशंपायन उवाच ॥

ततः सत्कृत्य वार्ष्णेयं विराटः पृथिवीपतिः ।
गृहान्प्रस्थापयामास सगणं सहबान्धवम् ॥ ०११ ॥

द्वारकां तु गते कृष्णे युधिष्ठिरपुरोगमाः ।
चक्रुः साङ्ग्रामिकं सर्वं विराटश्च महीपतिः ॥ ०१२ ॥

ततः संप्रेषयामास विराटः सह बान्धवैः ।
सर्वेषां भूमिपालानां द्रुपदश्च महीपतिः ॥ ०१३ ॥

वचनात्कुरुसिंहानां मत्स्यपाञ्चालयोश्च ते ।
समाजग्मुर्महीपालाः संप्रहृष्टा महाबलाः ॥ ०१४ ॥

तच्छ्रुत्वा पाण्डुपुत्राणां समागच्छन्महद्बलम् ।
धृतराष्ट्रसुतश्चापि समानिन्ये महीपतीन् ॥ ०१५ ॥

समाकुला मही राजन्कुरुपाण्डवकारणात् ।
तदा समभवत्कृत्स्ना संप्रयाणे महीक्षिताम् ॥ ०१६ ॥

बलानि तेषां वीराणामागच्छन्ति ततस्ततः ।
चालयन्तीव गां देवीं सपर्वतवनामिमाम् ॥ ०१७ ॥

ततः प्रज्ञावयोवृद्धं पाञ्चाल्यः स्वपुरोहितम् ।
कुरुभ्यः प्रेषयामास युधिष्ठिरमते तदा ॥ ०१८ ॥

# अध्याय ००६

द्रुपद उवाच ॥

भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठा नराणां तु द्विजातयः ॥ ००१ ॥

द्विजेषु वैद्याः श्रेयांसो वैद्येषु कृतबुद्धयः ।
स भवान्कृतबुद्धीनां प्रधान इति मे मतिः ॥ ००२ ॥

कुलेन च विशिष्टोऽसि वयसा च श्रुतेन च ।
प्रज्ञयानवमश्चासि शुक्रेणाङ्गिरसेन च ॥ ००३ ॥

विदितं चापि ते सर्वं यथावृत्तः स कौरवः ।
पाण्डवश्च यथावृत्तः कुन्तीपुत्रो युधिष्ठिरः ॥ ००४ ॥

धृतराष्ट्रस्य विदिते वञ्चिताः पाण्डवाः परैः ।
विदुरेणानुनीतोऽपि पुत्रमेवानुवर्तते ॥ ००५ ॥

शकुनिर्बुद्धिपूर्वं हि कुन्तीपुत्रं समाह्वयत् ।
अनक्षज्ञं मताक्षः सन्क्षत्रवृत्ते स्थितं शुचिम् ॥ ००६ ॥

ते तथा वञ्चयित्वा तु धर्मपुत्रं युधिष्ठिरम् ।
न कस्यांचिदवस्थायां राज्यं दास्यन्ति वै स्वयम् ॥ ००७ ॥

भवांस्तु धर्मसंयुक्तं धृतराष्ट्रं ब्रुवन्वचः ।
मनांसि तस्य योधानां ध्रुवमावर्तयिष्यति ॥ ००८ ॥

विदुरश्चापि तद्वाक्यं साधयिष्यति तावकम् ।
भीष्मद्रोणकृपाणां च भेदं सञ्जनयिष्यति ॥ ००९ ॥

अमात्येषु च भिन्नेषु योधेषु विमुखेषु च ।
पुनरेकाग्रकरणं तेषां कर्म भविष्यति ॥ ०१० ॥

एतस्मिन्नन्तरे पार्थाः सुखमेकाग्रबुद्धयः ।
सेनाकर्म करिष्यन्ति द्रव्याणां चैव सञ्चयम् ॥ ०११ ॥

भिद्यमानेषु च स्वेषु लम्बमाने च वै त्वयि ।
न तथा ते करिष्यन्ति सेनाकर्म न संशयः ॥ ०१२ ॥

एतत्प्रयोजनं चात्र प्राधान्येनोपलभ्यते ।
सङ्गत्या धृतराष्ट्रश्च कुर्याद्धर्म्यं वचस्तव ॥ ०१३ ॥

स भवान्धर्मयुक्तश्च धर्म्यं तेषु समाचरन् ।
कृपालुषु परिक्लेशान्पाण्डवानां प्रकीर्तयन् ॥ ०१४ ॥

वृद्धेषु कुलधर्मं च ब्रुवन्पूर्वैरनुष्ठितम् ।
विभेत्स्यति मनांस्येषामिति मे नात्र संशयः ॥ ०१५ ॥

न च तेभ्यो भयं तेऽस्ति ब्राह्मणो ह्यसि वेदवित् ।
दूतकर्मणि युक्तश्च स्थविरश्च विशेषतः ॥ ०१६ ॥

स भवान्पुष्ययोगेन मुहूर्तेन जयेन च ।
कौरवेयान्प्रयात्वाशु कौन्तेयस्यार्थसिद्धये ॥ ०१७ ॥

वैशंपायन उवाच ॥

तथानुशिष्टः प्रययौ द्रुपदेन महात्मना ।
पुरोधा वृत्तसंपन्नो नगरं नागसाह्वयम् ॥ ०१८ ॥

# अध्याय ००७

वैशंपायन उवाच ॥

गते द्वारवतीं कृष्णे बलदेवे च माधवे ।
सह वृष्ण्यन्धकैः सर्वैर्भोजैश्च शतशस्तथा ॥ ००१ ॥

सर्वमागमयामास पाण्डवानां विचेष्टितम् ।
धृतराष्ट्रात्मजो राजा दूतैः प्रणिहितैश्चरैः ॥ ००२ ॥

स श्रुत्वा माधवं यातं सदश्वैरनिलोपमैः ।
बलेन नातिमहता द्वारकामभ्ययात्पुरीम् ॥ ००३ ॥

तमेव दिवसं चापि कौन्तेयः पाण्डुनन्दनः ।
आनर्तनगरीं रम्यां जगामाशु धनञ्जयः ॥ ००४ ॥

तौ यात्वा पुरुषव्याघ्रौ द्वारकां कुरुनन्दनौ ।
सुप्तं ददृशतुः कृष्णं शयानं चोपजग्मतुः ॥ ००५ ॥

ततः शयाने गोविन्दे प्रविवेश सुयोधनः ।
उच्छीर्षतश्च कृष्णस्य निषसाद वरासने ॥ ००६ ॥

ततः किरीटी तस्यानु प्रविवेश महामनाः ।
पश्चार्धे च स कृष्णस्य प्रह्वोऽतिष्ठत्कृताञ्जलिः ॥ ००७ ॥

प्रतिबुद्धः स वार्ष्णेयो ददर्शाग्रे किरीटिनम् ।
स तयोः स्वागतं कृत्वा यथार्हं प्रतिपूज्य च ॥ ००८ ॥

तदागमनजं हेतुं पप्रच्छ मधुसूदनः ॥ ००८ ॥

ततो दुर्योधनः कृष्णमुवाच प्रहसन्निव ।

विग्रहेऽस्मिन्भवान्साह्यं मम दातुमिहार्हति ॥ ००९ ॥

समं हि भवतः सख्यं मयि चैवार्जुनेऽपि च ।
तथा संबन्धकं तुल्यमस्माकं त्वयि माधव ॥ ०१० ॥

अहं चाभिगतः पूर्वं त्वामद्य मधुसूदन ।
पूर्वं चाभिगतं सन्तो भजन्ते पूर्वसारिणः ॥ ०११ ॥

त्वं च श्रेष्ठतमो लोके सतामद्य जनार्दन ।
सततं संमतश्चैव सद्वृत्तमनुपालय ॥ ०१२ ॥

कृष्ण उवाच ॥

भवानभिगतः पूर्वमत्र मे नास्ति संशयः ।
दृष्टस्तु प्रथमं राजन्मया पार्थो धनञ्जयः ॥ ०१३ ॥

तव पूर्वाभिगमनात्पूर्वं चाप्यस्य दर्शनात् ।
साहाय्यमुभयोरेव करिष्यामि सुयोधन ॥ ०१४ ॥

प्रवारणं तु बालानां पूर्वं कार्यमिति श्रुतिः ।
तस्मात्प्रवारणं पूर्वमर्हः पार्थो धनञ्जयः ॥ ०१५ ॥

मत्संहननतुल्यानां गोपानामर्बुदं महत् ।
नारायणा इति ख्याताः सर्वे सङ्ग्रामयोधिनः ॥ ०१६ ॥

ते वा युधि दुराधर्षा भवन्त्वेकस्य सैनिकाः ।
अयुध्यमानः सङ्ग्रामे न्यस्तशस्त्रोऽहमेकतः ॥ ०१७ ॥

आभ्यामन्यतरं पार्थ यत्ते हृद्यतरं मतम् ।
तद्वृणीतां भवानग्रे प्रवार्यस्त्वं हि धर्मतः ॥ ०१८ ॥

वैशंपायन उवाच ॥

एवमुक्तस्तु कृष्णेन कुन्तीपुत्रो धनञ्जयः ।
अयुध्यमानं सङ्ग्रामे वरयामास केशवम् ॥ ०१९ ॥

सहस्राणां सहस्रं तु योधानां प्राप्य भारत ।
कृष्णं चापहृतं ज्ञात्वा संप्राप परमां मुदम् ॥ ०२० ॥

दुर्योधनस्तु तत्सैन्यं सर्वमादाय पार्थिवः ।
ततोऽभ्ययाद्भीमबलो रौहिणेयं महाबलम् ॥ ०२१ ॥

सर्वं चागमने हेतुं स तस्मै संन्यवेदयत् ।
प्रत्युवाच ततः शौरिर्धार्तराष्ट्रमिदं वचः ॥ ०२२ ॥

विदितं ते नरव्याघ्र सर्वं भवितुमर्हति ।
यन्मयोक्तं विराटस्य पुरा वैवाहिके तदा ॥ ०२३ ॥

निगृह्योक्तो हृषीकेशस्त्वदर्थं कुरुनन्दन ।
मया संबन्धकं तुल्यमिति राजन्पुनः पुनः ॥ ०२४ ॥

न च तद्वाक्यमुक्तं वै केशवः प्रत्यपद्यत ।
न चाहमुत्सहे कृष्णं विना स्थातुमपि क्षणम् ॥ ०२५ ॥

नाहं सहायः पार्थानां नापि दुर्योधनस्य वै ।
इति मे निश्चिता बुद्धिर्वासुदेवमवेक्ष्य ह ॥ ०२६ ॥

जातोऽसि भारते वंशे सर्वपार्थिवपूजिते ।
गच्छ युध्यस्व धर्मेण क्षात्रेण भरतर्षभ ॥ ०२७ ॥

इत्येवमुक्तः स तदा परिष्वज्य हलायुधम् ।
कृष्णं चापहृतं ज्ञात्वा युद्धान्मेने जितं जयम् ॥ ०२८ ॥

सोऽभ्ययात्कृतवर्माणं धृतराष्ट्रसुतो नृपः ।
कृतवर्मा ददौ तस्य सेनामक्षौहिणीं तदा ॥ ०२९ ॥

स तेन सर्वसैन्येन भीमेन कुरुनन्दनः ।
वृतः प्रतिययौ हृष्टः सुहृदः संप्रहर्षयन् ॥ ०३० ॥

गते दुर्योधने कृष्णः किरीटिनमथाब्रवीत् ।
अयुध्यमानः कां बुद्धिमास्थायाहं त्वया वृतः ॥ ०३१ ॥

अर्जुन उवाच ॥

भवान्समर्थस्तान्सर्वान्निहन्तुं नात्र संशयः ।
निहन्तुमहमप्येकः समर्थः पुरुषोत्तम ॥ ०३२ ॥

भवांस्तु कीर्तिमा.ण्ल्लोके तद्यशस्त्वां गमिष्यति ।
यशसा चाहमप्यर्थी तस्मादसि मया वृतः ॥ ०३३ ॥

सारथ्यं तु त्वया कार्यमिति मे मानसं सदा ।
चिररात्रेप्सितं कामं तद्भवान्कर्तुमर्हति ॥ ०३४ ॥

वासुदेव उवाच ॥

उपपन्नमिदं पार्थ यत्स्पर्धेथा मया सह ।
सारथ्यं ते करिष्यामि कामः संपद्यतां तव ॥ ०३५ ॥

वैशंपायन उवाच ॥

एवं प्रमुदितः पार्थः कृष्णेन सहितस्तदा ।
वृतो दाशार्हप्रवरैः पुनरायाद्युधिष्ठिरम् ॥ ०३६ ॥

# अध्याय ००८

वैशंपायन उवाच ॥

शल्यः श्रुत्वा तु दूतानां सैन्येन महता वृतः ।
अभ्ययात्पाण्डवान्राजन्सह पुत्रैर्महारथैः ॥ ००१ ॥

तस्य सेनानिवेशोऽभूदध्यर्धमिव योजनम् ।
तथा हि बहुलां सेनां स बिभर्ति नरर्षभः ॥ ००२ ॥

विचित्रकवचाः शूरा विचित्रध्वजकार्मुकाः ।
विचित्राभरणाः सर्वे विचित्ररथवाहनाः ॥ ००३ ॥

स्वदेशवेषाभरणा वीराः शतसहस्रशः ।
तस्य सेनाप्रणेतारो बभूवुः क्षत्रियर्षभाः ॥ ००४ ॥

व्यथयन्निव भूतानि कम्पयन्निव मेदिनीम् ।
शनैर्विश्रामयन्सेनां स ययौ येन पाण्डवः ॥ ००५ ॥

ततो दुर्योधनः श्रुत्वा महासेनं महारथम् ।
उपायान्तमभिद्रुत्य स्वयमानर्च भारत ॥ ००६ ॥

कारयामास पूजार्थं तस्य दुर्योधनः सभाः ।
रमणीयेषु देशेषु रत्नचित्राः स्वलङ्कृताः ॥ ००७ ॥

स ताः सभाः समासाद्य पूज्यमानो यथामरः ।
दुर्योधनस्य सचिवैर्देशे देशे यथार्हतः ॥ ००८ ॥

आजगाम सभामन्यां देवावसथवर्चसम् ॥ ००८ ॥

स तत्र विषयैर्युक्तः कल्याणैरतिमानुषैः ।
मेनेऽभ्यधिकमात्मानमवमेने पुरंदरम् ॥ ००९ ॥

पप्रच्छ स ततः प्रेष्यान्प्रहृष्टः क्षत्रियर्षभः ।
युधिष्ठिरस्य पुरुषाः के नु चक्रुः सभा इमाः ॥ ०१० ॥

आनीयन्तां सभाकाराः प्रदेयार्हा हि मे मताः ॥ ०१० ॥

गूढो दुर्योधनस्तत्र दर्शयामास मातुलम् ।
तं दृष्ट्वा मद्रराजस्तु ज्ञात्वा यत्नं च तस्य तम् ॥ ०११ ॥

परिष्वज्याब्रवीत्प्रीत इष्टोऽर्थो गृह्यतामिति ॥ ०११ ॥

दुर्योधन उवाच ॥

सत्यवाग्भव कल्याण वरो वै मम दीयताम् ।
सर्वसेनाप्रणेता मे भवान्भवितुमर्हति ॥ ०१२ ॥

वैशंपायन उवाच ॥

कृतमित्यब्रवीच्छल्यः किमन्यत्क्रियतामिति ।
कृतमित्येव गान्धारिः प्रत्युवाच पुनः पुनः ॥ ०१३ ॥

स तथा शल्यमामन्त्र्य पुनरायात्स्वकं पुरम् ।
शल्यो जगाम कौन्तेयानाख्यातुं कर्म तस्य तत् ॥ ०१४ ॥

उपप्लव्यं स गत्वा तु स्कन्धावारं प्रविश्य च ।
पाण्डवानथ तान्सर्वाञ्शल्यस्तत्र ददर्श ह ॥ ०१५ ॥

समेत्य तु महाबाहुः शल्यः पाण्डुसुतैस्तदा ।
पाद्यमर्घ्यं च गां चैव प्रत्यगृह्णाद्यथाविधि ॥ ०१६ ॥

ततः कुशलपूर्वं स मद्रराजोऽरिसूदनः ।
प्रीत्या परमया युक्तः समाश्लिष्य युधिष्ठिरम् ॥ ०१७ ॥

तथा भीमार्जुनौ हृष्टौ स्वस्त्रीयौ च यमावुभौ ।
आसने चोपविष्टस्तु शल्यः पार्थमुवाच ह ॥ ०१८ ॥

कुशलं राजशार्दूल कच्चित्ते कुरुनन्दन ।
अरण्यवासाद्दिष्ट्यासि विमुक्तो जयतां वर ॥ ०१९ ॥

सुदुष्करं कृतं राजन्निर्जने वसता वने ।
भ्रातृभिः सह राजेन्द्र कृष्णया चानया सह ॥ ०२० ॥

अज्ञातवासं घोरं च वसता दुष्करं कृतम् ।
दुःखमेव कुतः सौख्यं राज्यभ्रष्टस्य भारत ॥ ०२१ ॥

दुःखस्यैतस्य महतो धार्तराष्ट्रकृतस्य वै ।
अवाप्स्यसि सुखं राजन्हत्वा शत्रून्परंतप ॥ ०२२ ॥

विदितं ते महाराज लोकतत्त्वं नराधिप ।
तस्माल्लोभकृतं किञ्चित्तव तात न विद्यते ॥ ०२३ ॥

ततोऽस्याकथयद्राजा दुर्योधनसमागमम् ।
तच्च शुश्रूषितं सर्वं वरदानं च भारत ॥ ०२४ ॥

युधिष्ठिर उवाच ॥

सुकृतं ते कृतं राजन्प्रहृष्टेनान्तरात्मना ।

दुर्योधनस्य यद्वीर त्वया वाचा प्रतिश्रुतम्  ॥ ०२५  ॥

एकं त्विच्छामि भद्रं ते क्रियमाणं महीपते  ॥ ०२५  ॥

भवानिह महाराज वासुदेवसमो युधि ।
कर्णार्जुनाभ्यां संप्राप्ते द्वैरथे राजसत्तम  ॥ ०२६  ॥

कर्णस्य भवता कार्यं सारथ्यं नात्र संशयः  ॥ ०२६  ॥

तत्र पाल्योऽर्जुनो राजन्यदि मत्प्रियमिच्छसि ।
तेजोवधश्च ते कार्यः सौतेरस्मज्जयावहः  ॥ ०२७  ॥

अकर्तव्यमपि ह्येतत्कर्तुमर्हसि मातुल  ॥ ०२७  ॥

शल्य उवाच  ॥

शृणु पाण्डव भद्रं ते यद्ब्रवीषि दुरात्मनः ।
तेजोवधनिमित्तं मां सूतपुत्रस्य संयुगे  ॥ ०२८  ॥

अहं तस्य भविष्यामि सङ्ग्रामे सारथिर्ध्रुवम् ।
वासुदेवेन हि समं नित्यं मां स हि मन्यते  ॥ ०२९  ॥

तस्याहं कुरुशार्दूल प्रतीपमहितं वचः ।
ध्रुवं सङ्कथयिष्यामि योद्धुकामस्य संयुगे  ॥ ०३०  ॥

यथा स हृतदर्पश्च हृततेजाश्च पाण्डव ।
भविष्यति सुखं हन्तुं सत्यमेतद्ब्रवीमि ते  ॥ ०३१  ॥

एवमेतत्करिष्यामि यथा तात त्वमात्थ माम् ।
यच्चान्यदपि शक्ष्यामि तत्करिष्यामि ते प्रियम्  ॥ ०३२  ॥

यच्च दुःखं त्वया प्राप्तं द्यूते वै कृष्णया सह ।
परुषाणि च वाक्यानि सूतपुत्रकृतानि वै ॥ ०३३ ॥

जटासुरात्परिक्लेशः कीचकाच्च महाद्युते ।
द्रौपद्याधिगतं सर्वं दमयन्त्या यथाशुभम् ॥ ०३४ ॥

सर्वं दुःखमिदं वीर सुखोदर्कं भविष्यति ।
नात्र मन्युस्त्वया कार्यो विधिर्हि बलवत्तरः ॥ ०३५ ॥

दुःखानि हि महात्मानः प्राप्नुवन्ति युधिष्ठिर ।
देवैरपि हि दुःखानि प्राप्तानि जगतीपते ॥ ०३६ ॥

इन्द्रेण श्रूयते राजन्सभार्येण महात्मना ।
अनुभूतं महद्दुःखं देवराजेन भारत ॥ ०३७ ॥

---

# इन्द्रविजयोपाख्यानम्

## अध्याय ००९

युधिष्ठिर उवाच ॥

कथमिन्द्रेण राजेन्द्र सभार्येण महात्मना ।
दुःखं प्राप्तं परं घोरमेतदिच्छामि वेदितुम् ॥ ००१ ॥

शल्य उवाच ॥

श्णु राजन्पुरा वृत्तमितिहासं पुरातनम् ।

सभार्येण यथा प्राप्तं दुःखमिन्द्रेण भारत ॥ ००२ ॥

त्वष्टा प्रजापतिर्ह्यासीद्देवश्रेष्ठो महातपाः ।
स पुत्रं वै त्रिशिरसमिन्द्रद्रोहात्किलासृजत् ॥ ००३ ॥

ऐन्द्रं स प्रार्थयत्स्थानं विश्वरूपो महाद्युतिः ।
तैस्त्रिभिर्वदनैर्घोरैः सूर्येन्दुज्वलनोपमैः ॥ ००४ ॥

वेदानेकेन सोऽधीते सुरामेकेन चापिबत् ।
एकेन च दिशः सर्वाः पिबन्निव निरीक्षते ॥ ००५ ॥

स तपस्वी मृदुर्दान्तो धर्मे तपसि चोद्यतः ।
तपोऽतप्यन्महत्तीव्रं सुदुश्चरमरिंदम ॥ ००६ ॥

तस्य दृष्ट्वा तपोवीर्यं सत्त्वं चामिततेजसः ।
विषादमगमच्छक्र इन्द्रोऽयं मा भवेदिति ॥ ००७ ॥

कथं सज्जेत भोगेषु न च तप्येन्महत्तपः ।
विवर्धमानस्त्रिशिराः सर्वं त्रिभुवनं ग्रसेत् ॥ ००८ ॥

इति सञ्चिन्त्य बहुधा बुद्धिमान्भरतर्षभ ।
आज्ञापयत्सोऽप्सरसस्त्वष्टृपुत्रप्रलोभने ॥ ००९ ॥

यथा स सज्जेत्त्रिशिराः कामभोगेषु वै भृशम् ।
क्षिप्रं कुरुत गच्छध्वं प्रलोभयत माचिरम् ॥ ०१० ॥

शृङ्गारवेषाः सुश्रोण्यो भावैर्युक्ता मनोहरैः ।
प्रलोभयत भद्रं वः शमयध्वं भयं मम ॥ ०११ ॥

अस्वस्थं ह्यात्मनात्मानं लक्षयामि वराङ्गनाः ।
भयमेतन्महाघोरं क्षिप्रं नाशयताबलाः ॥ ०१२ ॥

अप्सरस ऊचुः ॥

तथा यत्नं करिष्यामः शक्र तस्य प्रलोभने ।
यथा नावाप्स्यसि भयं तस्माद्बलनिषूदन ॥ ०१३ ॥

निर्दहन्निव चक्षुर्भ्यां योऽसावास्ते तपोनिधिः ।
तं प्रलोभयितुं देव गच्छामः सहिता वयम् ॥ ०१४ ॥

यतिष्यामो वशे कर्तुं व्यपनेतुं च ते भयम् ॥ ०१४ ॥

शल्य उवाच ॥

इन्द्रेण तास्त्वनुज्ञाता जग्मुस्त्रिशिरसोऽन्तिकम् ।
तत्र ता विविधैर्भावैर्लोभयन्त्यो वराङ्गनाः ॥ ०१५ ॥

नृत्यं संदर्शयन्त्यश्च तथैवाङ्गेषु सौष्ठवम् ॥ ०१५ ॥

विचेरुः संप्रहर्षं च नाभ्यगच्छन्महातपाः ।
इन्द्रियाणि वशे कृत्वा पूर्णसागरसंनिभः ॥ ०१६ ॥

तास्तु यत्नं परं कृत्वा पुनः शक्रमुपस्थिताः ।
कृताञ्जलिपुटाः सर्वा देवराजमथाब्रुवन् ॥ ०१७ ॥

न स शक्यः सुदुर्धर्षो धैर्याच्चालयितुं प्रभो ।
यत्ते कार्यं महाभाग क्रियतां तदनन्तरम् ॥ ०१८ ॥

संपूज्याप्सरसः शक्रो विसृज्य च महामतिः ।
चिन्तयामास तस्यैव वधोपायं महात्मनः ॥ ०१९ ॥

स तूष्णीं चिन्तयन्वीरो देवराजः प्रतापवान् ।

विनिश्चितमतिर्धीमान्वधे त्रिशिरसोऽभवत्  ॥ ०२०  ॥

वज्रमस्य क्षिपाम्यद्य स क्षिप्रं न भविष्यति ।
शत्रुः प्रवृद्धो नोपेक्ष्यो दुर्बलोऽपि बलीयसा  ॥ ०२१  ॥

शास्त्रबुद्ध्या विनिश्चित्य कृत्वा बुद्धिं वधे दृढाम् ।
अथ वैश्वानरनिभं घोररूपं भयावहम्  ॥ ०२२  ॥

मुमोच वज्रं सङ्क्रुद्धः शक्रस्त्रिशिरसं प्रति  ॥ ०२२  ॥

स पपात हतस्तेन वज्रेण दृढमाहतः ।
पर्वतस्येव शिखरं प्रणुन्नं मेदिनीतले  ॥ ०२३  ॥

तं तु वज्रहतं दृष्ट्वा शयानमचलोपमम् ।
न शर्म लेभे देवेन्द्रो दीपितस्तस्य तेजसा  ॥ ०२४  ॥

हतोऽपि दीप्ततेजाः स जीवन्निव च दृश्यते  ॥ ०२४  ॥

अभितस्तत्र तक्षाणं घटमानं शचीपतिः ।
अपश्यदब्रवीच्चैनं सत्वरं पाकशासनः  ॥ ०२५  ॥

क्षिप्रं छिन्धि शिरांस्यस्य कुरुष्व वचनं मम  ॥ ०२५  ॥

तक्षोवाच  ॥

महास्कन्धो भृशं ह्येष परशुर्न तरिष्यति ।
कर्तुं चाहं न शक्ष्यामि कर्म सद्भिर्विगर्हितम्  ॥ ०२६  ॥

इन्द्र उवाच  ॥

मा भैस्त्वं क्षिप्रमेतद्वै कुरुष्व वचनं मम ।

मत्प्रसादाद्धि ते शस्त्रं वज्रकल्पं भविष्यति ॥ ०२७ ॥

तक्षोवाच ॥

कं भवन्तमहं विद्यां घोरकर्माणमद्य वै ।
एतदिच्छाम्यहं श्रोतुं तत्त्वेन कथयस्व मे ॥ ०२८ ॥

इन्द्र उवाच ॥

अहमिन्द्रो देवराजस्तक्षन्विदितमस्तु ते ।
कुरुष्वैतद्यथोक्तं मे तक्षन्मा त्वं विचारय ॥ ०२९ ॥

तक्षोवाच ॥

क्रूरेण नापत्रपसे कथं शक्रेह कर्मणा ।
ऋषिपुत्रमिमं हत्वा ब्रह्महत्याभयं न ते ॥ ०३० ॥

इन्द्र उवाच ॥

पश्चाद्धर्मं चरिष्यामि पावनार्थं सुदुश्चरम् ।
शत्रुरेष महावीर्यो वज्रेण निहतो मया ॥ ०३१ ॥

अद्यापि चाहमुद्विग्नस्तक्षन्नस्माद्बिभेमि वै ।
क्षिप्रं छिन्धि शिरांसि त्वं करिष्येऽनुग्रहं तव ॥ ०३२ ॥

शिरः पशोस्ते दास्यन्ति भागं यज्ञेषु मानवाः ।
एष तेऽनुग्रहस्तक्षन्क्षिप्रं कुरु मम प्रियम् ॥ ०३३ ॥

शल्य उवाच ॥

एतच्छ्रुत्वा तु तक्षा स महेन्द्रवचनं तदा ।

शिरांस्यथ त्रिशिरसः कुठारेणाच्छिनत्तदा ॥ ०३४ ॥

निकृत्तेषु ततस्तेषु निष्क्रामंस्त्रिशिरास्त्वथ ।
कपिञ्जलास्तित्तिराश्च कलविङ्काश्च सर्वशः ॥ ०३५ ॥

येन वेदानधीते स्म पिबते सोममेव च ।
तस्माद्वक्रान्विनिष्पेतुः क्षिप्रं तस्य कपिञ्जलाः ॥ ०३६ ॥

येन सर्वा दिशो राजन्पिबन्निव निरीक्षते ।
तस्माद्वक्राद्विनिष्पेतुस्तित्तिरास्तस्य पाण्डव ॥ ०३७ ॥

यत्सुरापं तु तस्यासीद्वक्रं त्रिशिरसस्तदा ।
कलविङ्का विनिष्पेतुस्तेनास्य भरतर्षभ ॥ ०३८ ॥

ततस्तेषु निकृत्तेषु विज्वरो मघवानभूत् ।
जगाम त्रिदिवं हृष्टस्तक्षापि स्वगृहान्ययौ ॥ ०३९ ॥

त्वष्टा प्रजापतिः श्रुत्वा शक्रेणाथ हतं सुतम् ।
क्रोधसंरक्तनयन इदं वचनमब्रवीत् ॥ ०४० ॥

तप्यमानं तपो नित्यं क्षान्तं दान्तं जितेन्द्रियम् ।
अनापराधिनं यस्मात्पुत्रं हिंसितवान्मम ॥ ०४१ ॥

तस्माच्छक्रवधार्थाय वृत्रमुत्पादयाम्यहम् ।
लोकाः पश्यन्तु मे वीर्यं तपसश्च बलं महत् ॥ ०४२ ॥

स च पश्यतु देवेन्द्रो दुरात्मा पापचेतनः ॥ ०४२ ॥

उपस्पृश्य ततः क्रुद्धस्तपस्वी सुमहायशाः ।
अग्निं हुत्वा समुत्पाद्य घोरं वृत्रमुवाच ह ॥ ०४३ ॥

इन्द्रशत्रो विवर्धस्व प्रभावात्तपसो मम ॥ ०४३ ॥

सोऽवर्धत दिवं स्तब्ध्वा सूर्यवैश्वानरोपमः ।
किं करोमीति चोवाच कालसूर्य इवोदितः ॥ ०४४ ॥

शक्रं जहीति चाप्युक्तो जगाम त्रिदिवं ततः ॥ ०४४ ॥

ततो युद्धं समभवद्वृत्रवासवयोस्तदा ।
सङ्क्रुद्धयोर्महाघोरं प्रसक्तं कुरुसत्तम ॥ ०४५ ॥

ततो जग्राह देवेन्द्रं वृत्रो वीरः शतक्रतुम् ।
अपावृत्य स जग्रास वृत्रः क्रोधसमन्वितः ॥ ०४६ ॥

ग्रस्ते वृत्रेण शक्रे तु संभ्रान्तास्त्रिदशास्तदा ।
असृजंस्ते महासत्त्वा जृम्भिकां वृत्रनाशिनीम् ॥ ०४७ ॥

विजृम्भमाणस्य ततो वृत्रस्यास्यादपावृतात् ।
स्वान्यङ्गान्यभिसङ्क्षिप्य निष्क्रान्तो बलसूदनः ॥ ०४८ ॥

ततः प्रभृति लोकेषु जृम्भिका प्राणिसंश्रिता ॥ ०४८ ॥

जहृषुश्च सुराः सर्वे दृष्ट्वा शक्रं विनिःसृतम् ।
ततः प्रववृते युद्धं वृत्रवासवयोः पुनः ॥ ०४९ ॥

संरब्धयोस्तदा घोरं सुचिरं भरतर्षभ ॥ ०४९ ॥

यदा व्यवर्धत रणे वृत्रो बलसमन्वितः ।
त्वष्टुस्तपोबलाद्विद्वांस्तदा शक्रो न्यवर्तत ॥ ०५० ॥

निवृत्ते तु तदा देवा विषादमगमन्परम् ।
समेत्य शक्रेण च ते त्वष्टुस्तेजोविमोहिताः ॥ ०५१ ॥

अमन्त्रयन्त ते सर्वे मुनिभिः सह भारत ॥ ०५१ ॥

किं कार्यमिति ते राजन्विचिन्त्य भयमोहिताः ।
जग्मुः सर्वे महात्मानं मनोभिर्विष्णुमव्ययम् ॥ ०५२ ॥

उपविष्टा मन्दराग्रे सर्वे वृत्रवधेप्सवः ॥ ०५२ ॥

---

# अध्याय ०१०

इन्द्र उवाच ॥

सर्वं व्याप्तमिदं देवा वृत्रेण जगदव्ययम् ।
न ह्यस्य सदृशं किञ्चित्प्रतिघाताय यद्भवेत् ॥ ००१ ॥

समर्थो ह्यभवं पूर्वमसमर्थोऽस्मि सांप्रतम् ।
कथं कुर्यां नु भद्रं वो दुष्प्रधर्षः स मे मतः ॥ ००२ ॥

तेजस्वी च महात्मा च युद्धे चामितविक्रमः ।
ग्रसेत्त्रिभुवनं सर्वं सदेवासुरमानुषम् ॥ ००३ ॥

तस्माद्विनिश्चयमिमं शृणुध्वं मे दिवौकसः ।
विष्णोः क्षयमुपागम्य समेत्य च महात्मना ॥ ००४ ॥

तेन संमन्त्र्य वेत्स्यामो वधोपायं दुरात्मनः ॥ ००४ ॥

शल्य उवाच ॥

एवमुक्ते मघवता देवाः सर्षिगणास्तदा ।
शरण्यं शरणं देवं जग्मुर्विष्णुं महाबलम् ॥ ००५ ॥

ऊचुश्च सर्वे देवेशं विष्णुं वृत्रभयार्दिताः ।
त्वया लोकास्त्रयः क्रान्तास्त्रिभिर्विक्रमणैः प्रभो ॥ ००६ ॥

अमृतं चाहृतं विष्णो दैत्याश्च निहता रणे ।
बलिं बद्ध्वा महादैत्यं शक्रो देवाधिपः कृतः ॥ ००७ ॥

त्वं प्रभुः सर्वलोकानां त्वया सर्वमिदं ततम् ।
त्वं हि देव महादेवः सर्वलोकनमस्कृतः ॥ ००८ ॥

गतिर्भव त्वं देवानां सेन्द्राणाममरोत्तम ।
जगद्व्याप्तमिदं सर्वं वृत्रेणासुरसूदन ॥ ००९ ॥

विष्णुरुवाच ॥

अवश्यं करणीयं मे भवतां हितमुत्तमम् ।
तस्मादुपायं वक्ष्यामि यथासौ न भविष्यति ॥ ०१० ॥

गच्छध्वं सर्षिगन्धर्वा यत्रासौ विश्वरूपधृक् ।
साम तस्य प्रयुञ्जध्वं तत एनं विजेष्यथ ॥ ०११ ॥

भविष्यति गतिर्देवाः शक्रस्य मम तेजसा ।
अदृश्यश्च प्रवेक्ष्यामि वज्रमस्यायुधोत्तमम् ॥ ०१२ ॥

गच्छध्वमृषिभिः सार्धं गन्धर्वैश्च सुरोत्तमाः ।
वृत्रस्य सह शक्रेण संधिं कुरुत माचिरम् ॥ ०१३ ॥

शल्य उवाच ॥

एवमुक्तास्तु देवेन ऋषयस्त्रिदशास्तथा ।
ययुः समेत्य सहिताः शक्रं कृत्वा पुरःसरम् ॥ ०१४ ॥

समीपमेत्य च तदा सर्व एव महौजसः ।
तं तेजसा प्रज्वलितं प्रतपन्तं दिशो दश ॥ ०१५ ॥

ग्रसन्तमिव लोकांस्त्रीन्सूर्याचन्द्रमसौ यथा ।
ददृशुस्तत्र ते वृत्रं शक्रेण सह देवताः ॥ ०१६ ॥

ऋषयोऽथ ततोऽभ्येत्य वृत्रमूचुः प्रियं वचः ।
व्याप्तं जगदिदं सर्वं तेजसा तव दुर्जय ॥ ०१७ ॥

न च शक्नोषि निर्जेतुं वासवं भूरिविक्रमम् ।
युध्यतोश्चापि वां कालो व्यतीतः सुमहानिह ॥ ०१८ ॥

पीड्यन्ते च प्रजाः सर्वाः सदेवासुरमानवाः ।
सख्यं भवतु ते वृत्र शक्रेण सह नित्यदा ॥ ०१९ ॥

अवाप्स्यसि सुखं त्वं च शक्रलोकांश्च शाश्वतान् ॥ ०१९ ॥

ऋषिवाक्यं निशम्याथ स वृत्रः सुमहाबलः ।
उवाच तांस्तदा सर्वान्प्रणम्य शिरसासुरः ॥ ०२० ॥

सर्वे यूयं महाभागा गन्धर्वाश्चैव सर्वशः ।
यद्ब्रूत तच्छ्रुतं सर्वं ममापि श्रृणुतानघाः ॥ ०२१ ॥

संधिः कथं वै भविता मम शक्रस्य चोभयोः ।
तेजसोर्हि द्वयोर्देवाः सख्यं वै भविता कथम् ॥ ०२२ ॥

ऋषय ऊचुः ॥

सकृत्सतां सङ्गतं लिप्सितव्यं ; ततः परं भविता भव्यमेव ।
नातिक्रमेत्सत्पुरुषेण सङ्गतं ; तस्मात्सतां सङ्गतं लिप्सितव्यम् ॥ ०२३ ॥

दृढं सतां सङ्गतं चापि नित्यं ; ब्रूयाच्चार्थं ह्यर्थकृच्छ्रेषु धीरः ।
महार्थवत्सत्पुरुषेण सङ्गतं ; तस्मात्सन्तं न जिघांसेत धीरः ॥ ०२४ ॥

इन्द्रः सतां संमतश्च निवासश्च महात्मनाम् ।
सत्यवादी ह्यदीनश्च धर्मवित्सुविनिश्चितः ॥ ०२५ ॥

तेन ते सह शक्रेण संधिर्भवतु शाश्वतः ।
एवं विश्वासमागच्छ मा ते भूद्बुद्धिरन्यथा ॥ ०२६ ॥

शल्य उवाच ॥

महर्षिवचनं श्रुत्वा तानुवाच महाद्युतिः ।
अवश्यं भगवन्तो मे माननीयास्तपस्विनः ॥ ०२७ ॥

ब्रवीमि यदहं देवास्तत्सर्वं क्रियतामिह ।
ततः सर्वं करिष्यामि यदूचुर्मां द्विजर्षभाः ॥ ०२८ ॥

न शुष्केण न चार्द्रेण नाश्मना न च दारुणा ।
न शस्त्रेण न वज्रेण न दिवा न तथा निशि ॥ ०२९ ॥

वध्यो भवेयं विप्रेन्द्राः शक्रस्य सह दैवतैः ।
एवं मे रोचते संधिः शक्रेण सह नित्यदा ॥ ०३० ॥

बाढमित्येव ऋषयस्तमूचुर्भरतर्षभ ।
एवं कृते तु संधाने वृत्रः प्रमुदितोऽभवत् ॥ ०३१ ॥

यत्तः सदाभवच्चापि शक्रोऽमर्षसमन्वितः ।
वृत्रस्य वधसंयुक्तानुपायाननुचिन्तयन् ॥ ०३२ ॥

रन्ध्रान्वेषी समुद्विग्नः सदाभूद्बलवृत्रहा ॥ ०३२ ॥

स कदाचित्समुद्रान्ते तमपश्यन्महासुरम् ।
संध्याकाल उपावृत्ते मुहूर्ते रम्यदारुणे ॥ ०३३ ॥

ततः सञ्चिन्त्य भगवान्वरदानं महात्मनः ।
संध्येयं वर्तते रौद्रा न रात्रिर्दिवसं न च ॥ ०३४ ॥

वृत्रश्चावश्यवध्योऽयं मम सर्वहरो रिपुः ॥ ०३४ ॥

यदि वृत्रं न हन्म्यद्य वञ्चयित्वा महासुरम् ।
महाबलं महाकायं न मे श्रेयो भविष्यति ॥ ०३५ ॥

एवं सञ्चिन्तयन्नेव शक्रो विष्णुमनुस्मरन् ।
अथ फेनं तदापश्यत्समुद्रे पर्वतोपमम् ॥ ०३६ ॥

नायं शुष्को न चार्द्रोऽयं न च शस्त्रमिदं तथा ।
एनं क्षेप्स्यामि वृत्रस्य क्षणादेव नशिष्यति ॥ ०३७ ॥

सवज्रमथ फेनं तं क्षिप्रं वृत्रे निसृष्टवान् ।
प्रविश्य फेनं तं विष्णुरथ वृत्रं व्यनाशयत् ॥ ०३८ ॥

निहते तु ततो वृत्रे दिशो वितिमिराभवन् ।
प्रववौ च शिवो वायुः प्रजाश्च जहृषुस्तदा ॥ ०३९ ॥

ततो देवाः सगन्धर्वा यक्षराक्षसपन्नगाः ।
ऋषयश्च महेन्द्रं तमस्तुवन्विविधैः स्तवैः ॥ ०४० ॥

नमस्कृतः सर्वभूतैः सर्वभूतानि सान्त्वयन् ।
हतशत्रुः प्रहृष्टात्मा वासवः सह दैवतैः ॥ ०४१ ॥

विष्णुं त्रिभुवनश्रेष्ठं पूजयामास धर्मवित् ॥ ०४१ ॥

ततो हते महावीर्ये वृत्रे देवभयङ्करे ।
अनृतेनाभिभूतोऽभूच्छक्रः परमदुर्मनाः ॥ ०४२ ॥

त्रैशीर्षयाभिभूतश्च स पूर्वं ब्रह्महत्यया ॥ ०४२ ॥

सोऽन्तमाश्रित्य लोकानां नष्टसञ्ज्ञो विचेतनः ।
न प्राज्ञायत देवेन्द्रस्त्वभिभूतः स्वकल्मषैः ॥ ०४३ ॥

प्रतिच्छन्नो वसत्यप्सु चेष्टमान इवोरगः ॥ ०४३ ॥

ततः प्रनष्टे देवेन्द्रे ब्रह्महत्याभयार्दिते ।
भूमिः प्रध्वस्तसङ्काशा निर्वृक्षा शुष्ककानना ॥ ०४४ ॥

विच्छिन्नस्रोतसो नद्यः सरांस्यनुदकानि च ॥ ०४४ ॥

सङ्क्षोभश्चापि सत्त्वानामनावृष्टिकृतोऽभवत् ।
देवाश्चापि भृशं त्रस्तास्तथा सर्वे महर्षयः ॥ ०४५ ॥

अराजकं जगत्सर्वमभिभूतमुपद्रवैः ।
ततो भीताभवन्देवाः को नो राजा भवेदिति ॥ ०४६ ॥

दिवि देवर्षयश्चापि देवराजविनाकृताः ।
न च स्म कश्चिद्देवानां राज्याय कुरुते मनः ॥ ०४७ ॥

# अध्याय ०११

शल्य उवाच ॥

ऋषयोऽथाब्रुवन्सर्वे देवाश्च त्रिदशेश्वराः ।
अयं वै नहुषः श्रीमान्देवराज्येऽभिषिच्यताम् ॥ ००१ ॥

ते गत्वाथाब्रुवन्सर्वे राजा नो भव पार्थिव ॥ ००१ ॥

स तानुवाच नहुषो देवानृषिगणांस्तथा ।
पितृभिः सहितान्राजन्परीप्सन्हितमात्मनः ॥ ००२ ॥

दुर्बलोऽहं न मे शक्तिर्भवतां परिपालने ।
बलवाञ्जायते राजा बलं शक्रे हि नित्यदा ॥ ००३ ॥

तमब्रुवन्पुनः सर्वे देवाः सर्षिपुरोगमाः ।
अस्माकं तपसा युक्तः पाहि राज्यं त्रिविष्टपे ॥ ००४ ॥

परस्परभयं घोरमस्माकं हि न संशयः ।
अभिषिच्यस्व राजेन्द्र भव राजा त्रिविष्टपे ॥ ००५ ॥

देवदानवयक्षाणामृषीणां रक्षसां तथा ।
पितृगन्धर्वभूतानां चक्षुर्विषयवर्तिनाम् ॥ ००६ ॥

तेज आदास्यसे पश्यन्बलवांश्च भविष्यसि ॥ ००६ ॥

धर्मं पुरस्कृत्य सदा सर्वलोकाधिपो भव ।
ब्रह्मर्षींश्चापि देवांश्च गोपायस्व त्रिविष्टपे ॥ ००७ ॥

सुदुर्लभं वरं लब्ध्वा प्राप्य राज्यं त्रिविष्टपे ।
धर्मात्मा सततं भूत्वा कामात्मा समपद्यत ॥ ००८ ॥

देवोद्यानेषु सर्वेषु नन्दनोपवनेषु च ।
कैलासे हिमवत्पृष्ठे मन्दरे श्वेतपर्वते ॥ ००९ ॥

सह्ये महेन्द्रे मलये समुद्रेषु सरित्सु च ॥ ००९ ॥

अप्सरोभिः परिवृतो देवकन्यासमावृतः ।
नहुषो देवराजः सन्क्रीडन्बहुविधं तदा ॥ ०१० ॥

शृण्वन्दिव्या बहुविधाः कथाः श्रुतिमनोहराः ।
वादित्राणि च सर्वाणि गीतं च मधुरस्वरम् ॥ ०११ ॥

विश्वावसुर्नारदश्च गन्धर्वाप्सरसां गणाः ।
ऋतवः षट्च देवेन्द्रं मूर्तिमन्त उपस्थिताः ॥ ०१२ ॥

मारुतः सुरभिर्वाति मनोज्ञः सुखशीतलः ॥ ०१२ ॥

एवं हि क्रीडतस्तस्य नहुषस्य महात्मनः ।
संप्राप्ता दर्शनं देवी शक्रस्य महिषी प्रिया ॥ ०१३ ॥

स तां संदृश्य दुष्टात्मा प्राह सर्वान्सभासदः ।
इन्द्रस्य महिषी देवी कस्मान्मां नोपतिष्ठति ॥ ०१४ ॥

अहमिन्द्रोऽस्मि देवानां लोकानां च तथेश्वरः ।
आगच्छतु शची मह्यं क्षिप्रमद्य निवेशनम् ॥ ०१५ ॥

तच्छ्रुत्वा दुर्मना देवी बृहस्पतिमुवाच ह ।
रक्ष मां नहुषाद्ब्रह्मंस्तवास्मि शरणं गता ॥ ०१६ ॥

सर्वलक्षणसंपन्नां ब्रह्मंस्त्वं मां प्रभाषसे ।
देवराजस्य दयितामत्यन्तसुखभागिनीम् ॥ ०१७ ॥

अवैधव्येन संयुक्तामेकपत्नीं पतिव्रताम् ।
उक्तवानसि मां पूर्वमृतां तां कुरु वै गिरम्  ॥ ०१८  ॥

नोक्तपूर्वं च भगवन्मृषा ते किञ्चिदीश्वर ।
तस्मादेतद्भवेत्सत्यं त्वयोक्तं द्विजसत्तम  ॥ ०१९  ॥

बृहस्पतिरथोवाच इन्द्राणीं भयमोहिताम् ।
यदुक्तासि मया देवि सत्यं तद्भविता ध्रुवम्  ॥ ०२०  ॥

द्रक्ष्यसे देवराजानमिन्द्रं शीघ्रमिहागतम् ।
न भेतव्यं च नहुषात्सत्यमेतद्ब्रवीमि ते  ॥ ०२१  ॥

समानयिष्ये शक्रेण नचिराद्भवतीमहम्  ॥ ०२१  ॥

अथ शुश्राव नहुष इन्द्राणीं शरणं गताम् ।
बृहस्पतेरङ्गिरसश्चुक्रोध स नृपस्तदा  ॥ ०२२  ॥

---

# अध्याय ०१२

शल्य उवाच  ॥

क्रुद्धं तु नहुषं ज्ञात्वा देवाः सर्षिपुरोगमाः ।
अब्रुवन्देवराजानं नहुषं घोरदर्शनम्  ॥ ००१  ॥

देवराज जहि क्रोधं त्वयि क्रुद्धे जगद्विभो ।
त्रस्तं सासुरगन्धर्वं सकिंनरमहोरगम्  ॥ ००२  ॥

जहि क्रोधमिमं साधो न क्रुध्यन्ति भवद्विधाः ।
परस्य पत्नी सा देवी प्रसीदस्व सुरेश्वर ॥ ००३ ॥

निवर्तय मनः पापात्परदाराभिमर्शनात् ।
देवराजोऽसि भद्रं ते प्रजा धर्मेण पालय ॥ ००४ ॥

एवमुक्तो न जग्राह तद्वचः काममोहितः ।
अथ देवानुवाचेदमिन्द्रं प्रति सुराधिपः ॥ ००५ ॥

अहल्या धर्षिता पूर्वमृषिपत्नी यशस्विनी ।
जीवतो भर्तुरिन्द्रेण स वः किं न निवारितः ॥ ००६ ॥

बहूनि च नृशंसानि कृतानीन्द्रेण वै पुरा ।
वैधर्म्याण्युपधाश्चैव स वः किं न निवारितः ॥ ००७ ॥

उपतिष्ठतु मां देवी एतदस्या हितं परम् ।
युष्माकं च सदा देवाः शिवमेवं भविष्यति ॥ ००८ ॥

देवा ऊचुः ॥

इन्द्राणीमानयिष्यामो यथेच्छसि दिवस्पते ।
जहि क्रोधमिमं वीर प्रीतो भव सुरेश्वर ॥ ००९ ॥

शल्य उवाच ॥

इत्युक्त्वा ते तदा देवा ऋषिभिः सह भारत ।
जग्मुर्बृहस्पतिं वक्तुमिन्द्राणीं चाशुभं वचः ॥ ०१० ॥

जानीमः शरणं प्राप्तमिन्द्राणीं तव वेश्मनि ।
दत्ताभयां च विप्रेन्द्र त्वया देवर्षिसत्तम ॥ ०११ ॥

ते त्वां देवाः सगन्धर्वा ऋषयश्च महाद्युते ।
प्रसादयन्ति चेन्द्राणी नहुषाय प्रदीयताम् ॥ ०१२ ॥

इन्द्राद्विशिष्टो नहुषो देवराजो महाद्युतिः ।
वृणोत्वियं वरारोहा भर्तृत्वे वरवर्णिनी ॥ ०१३ ॥

एवमुक्ते तु सा देवी बाष्पमुत्सृज्य सस्वरम् ।
उवाच रुदती दीना बृहस्पतिमिदं वचः ॥ ०१४ ॥

नाहमिच्छामि नहुषं पतिमन्वास्य तं प्रभुम् ।
शरणागतास्मि ते ब्रह्मंस्त्राहि मां महतो भयात् ॥ ०१५ ॥

बृहस्पतिरुवाच ॥

शरणागतां न त्यजेयमिन्द्राणि मम निश्चितम् ।
धर्मज्ञां धर्मशीलां च न त्यजे त्वामनिन्दिते ॥ ०१६ ॥

नाकार्यं कर्तुमिच्छामि ब्राह्मणः सन्विशेषतः ।
श्रुतधर्मा सत्यशीलो जानन्धर्मानुशासनम् ॥ ०१७ ॥

नाहमेतत्करिष्यामि गच्छध्वं वै सुरोत्तमाः ।
अस्मिंश्चार्थे पुरा गीतं ब्रह्मणा श्रूयतामिदम् ॥ ०१८ ॥

न तस्य बीजं रोहति बीजकाले ; न चास्य वर्षं वर्षति वर्षकाले ।
भीतं प्रपन्नं प्रददाति शत्रवे ; न सोऽन्तरं लभते त्राणमिच्छन् ॥ ०१९ ॥

मोघमन्नं विन्दति चाप्यचेताः ; स्वर्गाल्लोकाद्भ्रश्यति नष्टचेष्टः ।
भीतं प्रपन्नं प्रददाति यो वै ; न तस्य हव्यं प्रतिगृह्णन्ति देवाः ॥ ०२० ॥

प्रमीयते चास्य प्रजा ह्यकाले ; सदा विवासं पितरोऽस्य कुर्वते ।
भीतं प्रपन्नं प्रददाति शत्रवे ; सेन्द्रा देवाः प्रहरन्त्यस्य वज्रम् ॥ ०२१ ॥

एतदेवं विजानन्वै न दास्यामि शचीमिमाम् ।
इन्द्राणीं विश्रुतां लोके शक्रस्य महिषीं प्रियाम् ॥ ०२२ ॥

अस्या हितं भवेद्यच्च मम चापि हितं भवेत् ।
क्रियतां तत्सुरश्रेष्ठा न हि दास्याम्यहं शचीम् ॥ ०२३ ॥

शल्य उवाच ॥

अथ देवास्तमेवाहुर्गुरुमङ्गिरसां वरम् ।
कथं सुनीतं तु भवेन्मन्त्रयस्व बृहस्पते ॥ ०२४ ॥

बृहस्पतिरुवाच ॥

नहुषं याचतां देवी किञ्चित्कालान्तरं शुभा ।
इन्द्राणीहितमेतद्धि तथास्माकं भविष्यति ॥ ०२५ ॥

बहुविघ्नकरः कालः कालः कालं नयिष्यति ।
दर्पितो बलवांश्चापि नहुषो वरसंश्रयात् ॥ ०२६ ॥

शल्य उवाच ॥

ततस्तेन तथोक्ते तु प्रीता देवास्तमब्रुवन् ।
ब्रह्मन्साध्विदमुक्तं ते हितं सर्वदिवौकसाम् ॥ ०२७ ॥

एवमेतद्द्विजश्रेष्ठ देवी चेयं प्रसाद्यताम् ॥ ०२७ ॥

ततः समस्ता इन्द्राणीं देवाः साग्निपुरोगमाः ।
ऊचुर्वचनमव्यग्रा लोकानां हितकाम्यया ॥ ०२८ ॥

त्वया जगदिदं सर्वं धृतं स्थावरजङ्गमम् ।

एकपत्न्यसि सत्या च गच्छस्व नहुषं प्रति ॥ ०२९ ॥

क्षिप्रं त्वामभिकामश्च विनशिष्यति पार्थिवः ।
नहुषो देवि शक्रश्च सुरैश्वर्यमवाप्स्यति ॥ ०३० ॥

एवं विनिश्चयं कृत्वा इन्द्राणी कार्यसिद्धये ।
अभ्यगच्छत सव्रीडा नहुषं घोरदर्शनम् ॥ ०३१ ॥

दृष्ट्वा तां नहुषश्चापि वयोरूपसमन्विताम् ।
समहृष्यत दुष्टात्मा कामोपहतचेतनः ॥ ०३२ ॥

---

# अध्याय ०१३

शल्य उवाच ॥

अथ तामब्रवीद्दृष्ट्वा नहुषो देवराट्तदा ।
त्रयाणामपि लोकानामहमिन्द्रः शुचिस्मिते ॥ ००१ ॥

भजस्व मां वरारोहे पतित्वे वरवर्णिनि ॥ ००१ ॥

एवमुक्ता तु सा देवी नहुषेण पतिव्रता ।
प्रावेपत भयोद्विग्ना प्रवाते कदली यथा ॥ ००२ ॥

नमस्य सा तु ब्रह्माणं कृत्वा शिरसि चाञ्जलिम् ।
देवराजमथोवाच नहुषं घोरदर्शनम् ॥ ००३ ॥

कालमिच्छाम्यहं लब्धुं किञ्चित्त्वत्तः सुरेश्वर ।
न हि विज्ञायते शक्रः प्राप्तः किं वा क्व वा गतः ॥ ००४ ॥

तत्त्वमेतत्तु विज्ञाय यदि न ज्ञायते प्रभो ।
ततोऽहं त्वामुपस्थास्ये सत्यमेतद्ब्रवीमि ते ॥ ००५ ॥

एवमुक्तः स इन्द्राण्या नहुषः प्रीतिमानभूत् ॥ ००५ ॥

नहुष उवाच ॥

एवं भवतु सुश्रोणि यथा मामभिभाषसे ।
ज्ञात्वा चागमनं कार्यं सत्यमेतदनुस्मरेः ॥ ००६ ॥

शल्य उवाच ॥

नहुषेण विसृष्टा च निश्चक्राम ततः शुभा ।
बृहस्पतिनिकेतं सा जगाम च तपस्विनी ॥ ००७ ॥

तस्याः संश्रुत्य च वचो देवाः साग्निपुरोगमाः ।
मन्त्रयामासुरेकाग्राः शक्रार्थं राजसत्तम ॥ ००८ ॥

देवदेवेन सङ्गम्य विष्णुना प्रभविष्णुना ।
ऊचुश्चैनं समुद्विग्ना वाक्यं वाक्यविशारदाः ॥ ००९ ॥

ब्रह्महत्याभिभूतो वै शक्रः सुरगणेश्वरः ।
गतिश्च नस्त्वं देवेश पूर्वजो जगतः प्रभुः ॥ ०१० ॥

रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान् ॥ ०१० ॥

त्वद्वीर्यान्निहते वृत्रे वासवो ब्रह्महत्यया ।
वृतः सुरगणश्रेष्ठ मोक्षं तस्य विनिर्दिश ॥ ०११ ॥

तेषां तद्वचनं श्रुत्वा देवानां विष्णुरब्रवीत् ।

मामेव यजतां शक्रः पावयिष्यामि वज्रिणम्  ॥ ०१२  ॥

पुण्येन हयमेधेन मामिष्ट्वा पाकशासनः ।
पुनरेष्यति देवानामिन्द्रत्वमकुतोभयः  ॥ ०१३  ॥

स्वकर्मभिश्च नहुषो नाशं यास्यति दुर्मतिः ।
कञ्चित्कालमिमं देवा मर्षयध्वमतन्द्रिताः  ॥ ०१४  ॥

श्रुत्वा विष्णोः शुभां सत्यां तां वाणीममृतोपमाम् ।
ततः सर्वे सुरगणाः सोपाध्यायाः सहर्षिभिः  ॥ ०१५  ॥

यत्र शक्रो भयोद्विग्नस्तं देशमुपचक्रमुः  ॥ ०१५  ॥

तत्राश्वमेधः सुमहान्महेन्द्रस्य महात्मनः ।
ववृते पावनार्थं वै ब्रह्महत्यापहो नृप  ॥ ०१६  ॥

विभज्य ब्रह्महत्यां तु वृक्षेषु च नदीषु च ।
पर्वतेषु पृथिव्यां च स्त्रीषु चैव युधिष्ठिर  ॥ ०१७  ॥

संविभज्य च भूतेषु विसृज्य च सुरेश्वरः ।
विज्वरः पूतपाप्मा च वासवोऽभवदात्मवान्  ॥ ०१८  ॥

अकम्प्यं नहुषं स्थानाद्दृष्ट्वा च बलसूदनः ।
तेजोघ्नं सर्वभूतानां वरदानाच्च दुःसहम्  ॥ ०१९  ॥

ततः शचीपतिर्वीरः पुनरेव व्यनश्यत ।
अदृश्यः सर्वभूतानां कालाकाङ्क्षी चचार ह  ॥ ०२०  ॥

प्रनष्टे तु ततः शक्रे शची शोकसमन्विता ।
हा शक्रेति तदा देवी विललाप सुदुःखिता  ॥ ०२१  ॥

यदि दत्तं यदि हुतं गुरवस्तोषिता यदि ।
एकभर्तृत्वमेवास्तु सत्यं यद्यस्ति वा मयि ॥ ०२२ ॥

पुण्यां चेमामहं दिव्यां प्रवृत्तामुत्तरायणे ।
देवीं रात्रिं नमस्यामि सिध्यतां मे मनोरथः ॥ ०२३ ॥

प्रयता च निशां देवीमुपातिष्ठत तत्र सा ।
पतिव्रतात्वात्सत्येन सोपश्रुतिमथाकरोत् ॥ ०२४ ॥

यत्रास्ते देवराजोऽसौ तं देशं दर्शयस्व मे ।
इत्याहोपश्रुतिं देवी सत्यं सत्येन दृश्यताम् ॥ ०२५ ॥

---

# अध्याय ०१४

शल्य उवाच ॥

अथैनां रुपिणीं साध्वीमुपातिष्ठदुपश्रुतिः ।
तां वयोरूपसंपन्नां दृष्ट्वा देवीमुपस्थिताम् ॥ ००१ ॥

इन्द्राणी संप्रहृष्टा सा संपूज्यैनामपृच्छत ।
इच्छामि त्वामहं ज्ञातुं का त्वं ब्रूहि वरानने ॥ ००२ ॥

उपश्रुतिरुवाच ॥

उपश्रुतिरहं देवि तवान्तिकमुपागता ।
दर्शनं चैव संप्राप्ता तव सत्येन तोषिता ॥ ००३ ॥

पतिव्रतासि युक्ता च यमेन नियमेन च ।

दर्शयिष्यामि ते शक्रं देवं वृत्रनिषूदनम् ॥ ००४ ॥

क्षिप्रमन्वेहि भद्रं ते द्रक्ष्यसे सुरसत्तमम् ॥ ००४ ॥

शल्य उवाच ॥

ततस्तां प्रस्थितां देवीमिन्द्राणी सा समन्वगात् ।
देवारण्यान्यतिक्रम्य पर्वतांश्च बहूंस्ततः ॥ ००५ ॥

हिमवन्तमतिक्रम्य उत्तरं पार्श्वमागमत् ॥ ००५ ॥

समुद्रं च समासाद्य बहुयोजनविस्तृतम् ।
आससाद महाद्वीपं नानाद्रुमलतावृतम् ॥ ००६ ॥

तत्रापश्यत्सरो दिव्यं नानाशकुनिभिर्वृतम् ।
शतयोजनविस्तीर्णं तावदेवायतं शुभम् ॥ ००७ ॥

तत्र दिव्यानि पद्मानि पञ्चवर्णानि भारत ।
षट्पदैरुपगीतानि प्रफुल्लानि सहस्रशः ॥ ००८ ॥

पद्मस्य भित्त्वा नालं च विवेश सहिता तया ।
बिसतन्तुप्रविष्टं च तत्रापश्यच्छतक्रतुम् ॥ ००९ ॥

तं दृष्ट्वा च सुसूक्ष्मेण रूपेणावस्थितं प्रभुम् ।
सूक्ष्मरूपधरा देवी बभूवोपश्रुतिश्च सा ॥ ०१० ॥

इन्द्रं तुष्टाव चेन्द्राणी विश्रुतैः पूर्वकर्मभिः ।
स्तूयमानस्ततो देवः शचीमाह पुरंदरः ॥ ०११ ॥

किमर्थमसि संप्राप्ता विज्ञातश्च कथं त्वहम् ।
ततः सा कथयामास नहुषस्य विचेष्टितम् ॥ ०१२ ॥

इन्द्रत्वं त्रिषु लोकेषु प्राप्य वीर्यमदान्वितः ।
दर्पाविष्टश्च दुष्टात्मा मामुवाच शतक्रतो ॥ ०१३ ॥

उपतिष्ठ मामिति क्रूरः कालं च कृतवान्मम ॥ ०१३ ॥

यदि न त्रास्यसि विभो करिष्यति स मां वशे ।
एतेन चाहं संतप्ता प्राप्ता शक्र तवान्तिकम् ॥ ०१४ ॥

जहि रौद्रं महाबाहो नहुषं पापनिश्चयम् ॥ ०१४ ॥

प्रकाशयस्व चात्मानं दैत्यदानवसूदन ।
तेजः समाप्नुहि विभो देवराज्यं प्रशाधि च ॥ ०१५ ॥

---

# अध्याय ०१५

शल्य उवाच ॥

एवमुक्तः स भगवाञ्शच्या पुनरथाब्रवीत् ।
विक्रमस्य न कालोऽयं नहुषो बलवत्तरः ॥ ००१ ॥

विवर्धितश्च ऋषिभिर्हव्यैः कव्यैश्च भामिनि ।
नीतिमत्र विधास्यामि देवि तां कर्तुमर्हसि ॥ ००२ ॥

गुह्यं चैतत्त्वया कार्यं नाख्यातव्यं शुभे क्वचित् ।
गत्वा नहुषमेकान्ते ब्रवीहि तनुमध्यमे ॥ ००३ ॥

ऋषियानेन दिव्येन मामुपैहि जगत्पते ।

एवं तव वशे प्रीता भविष्यामीति तं वद ॥ ००४ ॥

इत्युक्ता देवराजेन पत्नी सा कमलेक्षणा ।
एवमस्त्वित्यथोक्त्वा तु जगाम नहुषं प्रति ॥ ००५ ॥

नहुषस्तां ततो दृष्ट्वा विस्मितो वाक्यमब्रवीत् ।
स्वागतं ते वरारोहे किं करोमि शुचिस्मिते ॥ ००६ ॥

भक्तं मां भज कल्याणि किमिच्छसि मनस्विनि ।
तव कल्याणि यत्कार्यं तत्करिष्ये सुमध्यमे ॥ ००७ ॥

न च व्रीडा त्वया कार्या सुश्रोणि मयि विश्वस ।
सत्येन वै शपे देवि कर्तास्मि वचनं तव ॥ ००८ ॥

इन्द्राण्युवाच ॥

यो मे त्वया कृतः कालस्तमाकाङ्क्षे जगत्पते ।
ततस्त्वमेव भर्ता मे भविष्यसि सुराधिप ॥ ००९ ॥

कार्यं च हृदि मे यत्तद्देवराजावधारय ।
वक्ष्यामि यदि मे राजन्प्रियमेतत्करिष्यसि ॥ ०१० ॥

वाक्यं प्रणयसंयुक्तं ततः स्यां वशगा तव ॥ ०१० ॥

इन्द्रस्य वाजिनो वाहा हस्तिनोऽथ रथास्तथा ।
इच्छाम्यहमिहापूर्वं वाहनं ते सुराधिप ॥ ०११ ॥

यन्न विष्णोर्न रुद्रस्य नासुराणां न रक्षसाम् ॥ ०११ ॥

वहन्तु त्वां महाराज ऋषयः सङ्गता विभो ।
सर्वे शिबिकया राजन्नेतद्धि मम रोचते ॥ ०१२ ॥

नासुरेषु न देवेषु तुल्यो भवितुमर्हसि ।
सर्वेषां तेज आदत्स्व स्वेन वीर्येण दर्शनात् ॥ ०१३ ॥

न ते प्रमुखतः स्थातुं कश्चिदिच्छति वीर्यवान् ॥ ०१३ ॥

शल्य उवाच ॥

एवमुक्तस्तु नहुषः प्राहृष्यत तदा किल ।
उवाच वचनं चापि सुरेन्द्रस्तामनिन्दिताम् ॥ ०१४ ॥

अपूर्वं वाहनमिदं त्वयोक्तं वरवर्णिनि ।
दृढं मे रुचितं देवि त्वद्वशोऽस्मि वरानने ॥ ०१५ ॥

न ह्यल्पवीर्यो भवति यो वाहान्कुरुते मुनीन् ।
अहं तपस्वी बलवान्भूतभव्यभवत्प्रभुः ॥ ०१६ ॥

मयि क्रुद्धे जगन्न स्यान्मयि सर्वं प्रतिष्ठितम् ।
देवदानवगन्धर्वाः किंनरोरगराक्षसाः ॥ ०१७ ॥

न मे क्रुद्धस्य पर्याप्ताः सर्वे लोकाः शुचिस्मिते ।
चक्षुषा यं प्रपश्यामि तस्य तेजो हराम्यहम् ॥ ०१८ ॥

तस्मात्ते वचनं देवि करिष्यामि न संशयः ।
सप्तर्षयो मां वक्ष्यन्ति सर्वे ब्रह्मर्षयस्तथा ॥ ०१९ ॥

पश्य माहात्म्यमस्माकमृद्धिं च वरवर्णिनि ॥ ०१९ ॥

एवमुक्त्वा तु तां देवीं विसृज्य च वराननाम् ।
विमाने योजयित्वा स ऋषीन्नियममास्थितान् ॥ ०२० ॥

अब्रह्मण्यो बलोपेतो मत्तो वरमदेन च ।
कामवृत्तः स दुष्टात्मा वाहयामास तानृषीन्  ॥ ०२१  ॥

नहुषेण विसृष्टा च बृहस्पतिमुवाच सा ।
समयोऽल्पावशेषो मे नहुषेणेह यः कृतः  ॥ ०२२  ॥

शक्रं मृगय शीघ्रं त्वं भक्तायाः कुरु मे दयाम्  ॥ ०२२  ॥

बाढमित्येव भगवान्बृहस्पतिरुवाच ताम् ।
न भेतव्यं त्वया देवि नहुषाद्दुष्टचेतसः  ॥ ०२३  ॥

न ह्येष स्थास्यति चिरं गत एष नराधमः ।
अधर्मज्ञो महर्षीणां वाहनाच्च हतः शुभे  ॥ ०२४  ॥

इष्टिं चाहं करिष्यामि विनाशायास्य दुर्मतेः ।
शक्रं चाधिगमिष्यामि मा भैस्त्वं भद्रमस्तु ते  ॥ ०२५  ॥

ततः प्रज्वाल्य विधिवज्जुहाव परमं हविः ।
बृहस्पतिर्महातेजा देवराजोपलब्धये  ॥ ०२६  ॥

तस्माच्च भगवान्देवः स्वयमेव हुताशनः ।
स्त्रीवेषमद्भुतं कृत्वा सहसान्तरधीयत  ॥ ०२७  ॥

स दिशः प्रदिशश्चैव पर्वतांश्च वनानि च ।
पृथिवीं चान्तरिक्षं च विचीयातिमनोगतिः  ॥ ०२८  ॥

निमेषान्तरमात्रेण बृहस्पतिमुपागमत्  ॥ ०२८  ॥

अग्निरुवाच  ॥

बृहस्पते न पश्यामि देवराजमहं क्वचित् ।

आपः शेषाः सदा चापः प्रवेष्टुं नोत्सहाम्यहम् ॥ ०२९ ॥

न मे तत्र गतिर्ब्रह्मन्किमन्यत्करवाणि ते ॥ ०२९ ॥

शल्य उवाच ॥

तमब्रवीद्देवगुरुरपो विश महाद्युते ।
अग्निरुवाच ॥

नापः प्रवेष्टुं शक्ष्यामि क्षयो मेऽत्र भविष्यति ।
शरणं त्वां प्रपन्नोऽस्मि स्वस्ति तेऽस्तु महाद्युते ॥ ०३१ ॥

अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ ०३२ ॥

---

# अध्याय ०१६

बृहस्पतिरुवाच ॥

त्वमग्ने सर्वदेवानां मुखं त्वमसि हव्यवाट् ।
त्वमन्तः सर्वभूतानां गूढश्चरसि साक्षिवत् ॥ ००१ ॥

त्वामाहुरेकं कवयस्त्वामाहुस्त्रिविधं पुनः ।
त्वया त्यक्तं जगच्चेदं सद्यो नश्येद्धुताशन ॥ ००२ ॥

कृत्वा तुभ्यं नमो विप्राः स्वकर्मविजितां गतिम् ।
गच्छन्ति सह पत्नीभिः सुतैरपि च शाश्वतीम् ॥ ००३ ॥

त्वमेवाग्ने हव्यवाहस्त्वमेव परमं हविः ।
यजन्ति सत्रैस्त्वामेव यज्ञैश्च परमाध्वरे ॥ ००४ ॥

सृष्ट्वा लोकांस्त्रीनिमान्हव्यवाह ; प्राप्ते काले पचसि पुनः समिद्धः ।
सर्वस्यास्य भुवनस्य प्रसूति ;स्त्वमेवाग्ने भवसि पुनः प्रतिष्ठा ॥ ००५ ॥

त्वामग्ने जलदानाहुर्विद्युतश्च त्वमेव हि ।
दहन्ति सर्वभूतानि त्वत्तो निष्क्रम्य हायनाः ॥ ००६ ॥

त्वय्यापो निहिताः सर्वास्त्वयि सर्वमिदं जगत् ।
न तेऽस्त्यविदितं किञ्चित्त्रिषु लोकेषु पावक ॥ ००७ ॥

स्वयोनिं भजते सर्वो विशस्वापोऽविशङ्कितः ।
अहं त्वां वर्धयिष्यामि ब्राह्मैर्मन्त्रैः सनातनैः ॥ ००८ ॥

शल्य उवाच ॥

एवं स्तुतो हव्यवाहो भगवान्कविरुत्तमः ।
बृहस्पतिमथोवाच प्रीतिमान्वाक्यमुत्तमम् ॥ ००९ ॥

दर्शयिष्यामि ते शक्रं सत्यमेतद्ब्रवीमि ते ॥ ००९ ॥

प्रविश्यापस्ततो वह्निः ससमुद्राः सपल्वलाः ।
आजगाम सरस्तच्च गूढो यत्र शतक्रतुः ॥ ०१० ॥

अथ तत्रापि पद्मानि विचिन्वन्भरतर्षभ ।
अन्वपश्यत्स देवेन्द्रं बिसमध्यगतं स्थितम् ॥ ०११ ॥

आगत्य च ततस्तूर्णं तमाचष्ट बृहस्पतेः ।
अणुमात्रेण वपुषा पद्मतन्त्वाश्रितं प्रभुम् ॥ ०१२ ॥

गत्वा देवर्षिगन्धर्वैः सहितोऽथ बृहस्पतिः ।
पुराणैः कर्मभिर्देवं तुष्टाव बलसूदनम् ॥ ०१३ ॥

महासुरो हतः शक्र नमुचिर्दारुणस्त्वया ।
शम्बरश्च बलश्चैव तथोभौ घोरविक्रमौ ॥ ०१४ ॥

शतक्रतो विवर्धस्व सर्वाञ्शत्रून्निषूदय ।
उत्तिष्ठ वज्रिन्संपश्य देवर्षींश्च समागतान् ॥ ०१५ ॥

महेन्द्र दानवान्हत्वा लोकास्त्रातास्त्वया विभो ।
अपां फेनं समासाद्य विष्णुतेजोपबृंहितम् ॥ ०१६ ॥

त्वया वृत्रो हतः पूर्वं देवराज जगत्पते ॥ ०१६ ॥

त्वं सर्वभूतेषु वरेण्य ईड्य ;स्त्वया समं विद्यते नेह भूतम् ।
त्वया धार्यन्ते सर्वभूतानि शक्र ; त्वं देवानां महिमानं चकर्थ ॥ ०१७ ॥

पाहि देवान्सलोकांश्च महेन्द्र बलमाप्नुहि ।
एवं संस्तूयमानश्च सोऽवर्धत शनैः शनैः ॥ ०१८ ॥

स्वं चैव वपुरास्थाय बभूव स बलान्वितः ।
अब्रवीच्च गुरुं देवो बृहस्पतिमुपस्थितम् ॥ ०१९ ॥

किं कार्यमवशिष्टं वो हतस्त्वाष्ट्रो महासुरः ।
वृत्रश्च सुमहाकायो ग्रस्तुं लोकानियेष यः ॥ ०२० ॥

बृहस्पतिरुवाच ॥

मानुषो नहुषो राजा देवर्षिगणतेजसा ।
देवराज्यमनुप्राप्तः सर्वान्नो बाधते भृशम् ॥ ०२१ ॥

इन्द्र उवाच ॥

कथं नु नहुषो राज्यं देवानां प्राप दुर्लभम् ।
तपसा केन वा युक्तः किंवीर्यो वा बृहस्पते ॥ ०२२ ॥

बृहस्पतिरुवाच ॥

देवा भीताः शक्रमकामयन्त ; त्वया त्यक्तं महदैन्द्रं पदं तत् ।
तदा देवाः पितरोऽथर्षयश्च ; गन्धर्वसंघाश्च समेत्य सर्वे ॥ ०२३ ॥

गत्वाब्रुवन्नहुषं शक्र तत्र ; त्वं नो राजा भव भुवनस्य गोप्ता ।
तानब्रवीन्नहुषो नास्मि शक्त ; आप्यायध्वं तपसा तेजसा च ॥ ०२४ ॥

एवमुक्तैर्वर्धितश्चापि देवै ; राजाभवन्नहुषो घोरवीर्यः ।
त्रैलोक्ये च प्राप्य राज्यं तपस्विनः ; कृत्वा वाहान्याति लोकान्दुरात्मा ॥ ०२५ ॥

तेजोहरं दृष्टिविषं सुघोरं ; मा त्वं पश्येर्नहुषं वै कदाचित् ।
देवाश्च सर्वे नहुषं भयार्ता ; न पश्यन्तो गूढरूपाश्चरन्ति ॥ ०२६ ॥

शल्य उवाच ॥

एवं वदत्यङ्गिरसां वरिष्ठे ; बृहस्पतौ लोकपालः कुबेरः ।
वैवस्वतश्चैव यमः पुराणो ; देवश्च सोमो वरुणश्चाजगाम ॥ ०२७ ॥

ते वै समागम्य महेन्द्रमूचु ;र्दिष्ट्या त्वाष्ट्रो निहतश्चैव वृत्रः ।
दिष्ट्या च त्वां कुशलिनमक्षतं च ; पश्यामो वै निहतारिं च शक्र ॥ ०२८ ॥

स तान्यथावत्प्रतिभाष्य शक्रः ; सञ्चोदयन्नहुषस्यान्तरेण ।
राजा देवानां नहुषो घोररूप ;स्तत्र साह्यं दीयतां मे भवद्भिः ॥ ०२९ ॥

ते चाब्रुवन्नहुषो घोररूपो ; दृष्टीविषस्तस्य बिभीम देव ।
त्वं चेद्राजन्नहुषं पराजये ;स्तद्वै वयं भागमर्हाम शक्र ॥ ०३० ॥

इन्द्रोऽब्रवीद्भवतु भवानपां पति ;र्यमः कुबेरश्च महाभिषेकम् ।
संप्राप्नुवन्त्वद्य सहैव तेन ; रिपुं जयामो नहुषं घोरदृष्टिम् ॥ ०३१ ॥

ततः शक्रं ज्वलनोऽप्याह भागं ; प्रयच्छ मह्यं तव साह्यं करिष्ये ।
तमाह शक्रो भविताग्ने तवापि ; ऐन्द्राग्नो वै भाग एको महाक्रतौ ॥ ०३२ ॥

एवं सञ्चिन्त्य भगवान्महेन्द्रः पाकशासनः ।
कुबेरं सर्वयक्षाणां धनानां च प्रभुं तथा ॥ ०३३ ॥

वैवस्वतं पितॄणां च वरुणं चाप्यपां तथा ।
आधिपत्यं ददौ शक्रः सत्कृत्य वरदस्तदा ॥ ०३४ ॥

---

# अध्याय ०१७

शल्य उवाच ॥

अथ सञ्चिन्तयानस्य देवराजस्य धीमतः ।
नहुषस्य वधोपायं लोकपालैः सहैव तैः ॥ ००१ ॥

तपस्वी तत्र भगवानगस्त्यः प्रत्यदृश्यत ॥ ००१ ॥

सोऽब्रवीदर्च्य देवेन्द्रं दिष्ट्या वै वर्धते भवान् ।
विश्वरूपविनाशेन वृत्रासुरवधेन च ॥ ००२ ॥

दिष्ट्या च नहुषो भ्रष्टो देवराज्यात्पुरंदर ।
दिष्ट्या हतारिं पश्यामि भवन्तं बलसूदन ॥ ००३ ॥

इन्द्र उवाच ॥

स्वागतं ते महर्षेऽस्तु प्रीतोऽहं दर्शनात्तव ।
पाद्यमाचमनीयं च गामर्घ्यं च प्रतीच्छ मे ॥ ००४ ॥

शल्य उवाच ॥

पूजितं चोपविष्टं तमासने मुनिसत्तमम् ।
पर्यपृच्छत देवेशः प्रहृष्टो ब्राह्मणर्षभम् ॥ ००५ ॥

एतदिच्छामि भगवन्कथ्यमानं द्विजोत्तम ।
परिभ्रष्टः कथं स्वर्गान्नहुषः पापनिश्चयः ॥ ००६ ॥

अगस्त्य उवाच ॥

शृणु शक्र प्रियं वाक्यं यथा राजा दुरात्मवान् ।
स्वर्गाद्भ्रष्टो दुराचारो नहुषो बलदर्पितः ॥ ००७ ॥

श्रमार्तास्तु वहन्तस्तं नहुषं पापकारिणम् ।
देवर्षयो महाभागास्तथा ब्रह्मर्षयोऽमलाः ॥ ००८ ॥

पप्रच्छुः संशयं देव नहुषं जयतां वर ॥ ००८ ॥

य इमे ब्रह्मणा प्रोक्ता मन्त्रा वै प्रोक्षणे गवाम् ।
एते प्रमाणं भवत उताहो नेति वासव ॥ ००९ ॥

नहुषो नेति तानाह तमसा मूढचेतनः ॥ ००९ ॥

ऋषय ऊचुः ॥

अधर्मे संप्रवृत्तस्त्वं धर्मं न प्रतिपद्यसे ।
प्रमाणमेतदस्माकं पूर्वं प्रोक्तं महर्षिभिः ॥ ०१० ॥

अगस्त्य उवाच ॥

ततो विवदमानः स मुनिभिः सह वासव ।
अथ मामस्पृशन्मूर्ध्नि पादेनाधर्मपीडितः ॥ ०११ ॥

तेनाभूद्धततेजाः स निःश्रीकश्च शचीपते ।
ततस्तमहमाविग्नमवोचं भयपीडितम् ॥ ०१२ ॥

यस्मात्पूर्वैः कृतं ब्रह्म ब्रह्मर्षिभिरनुष्ठितम् ।
अदुष्टं दूषयसि वै यच्च मूर्ध्न्यस्पृशः पदा ॥ ०१३ ॥

यच्चापि त्वमृषीन्मूढ ब्रह्मकल्पान्दुरासदान् ।
वाहान्कृत्वा वाहयसि तेन स्वर्गाद्धतप्रभः ॥ ०१४ ॥

ध्वंस पाप परिभ्रष्टः क्षीणपुण्यो महीतलम् ।
दश वर्षसहस्राणि सर्परूपधरो महान् ॥ ०१५ ॥

विचरिष्यसि पूर्णेषु पुनः स्वर्गमवाप्स्यसि ॥ ०१५ ॥

एवं भ्रष्टो दुरात्मा स देवराज्यादरिंदम ।
दिष्ट्या वर्धामहे शक्र हतो ब्राह्मणकण्टकः ॥ ०१६ ॥

त्रिविष्टपं प्रपद्यस्व पाहि लोकाञ्शचीपते ।
जितेन्द्रियो जितामित्रः स्तूयमानो महर्षिभिः ॥ ०१७ ॥

शल्य उवाच ॥

ततो देवा भृशं तुष्टा महर्षिगणसंवृताः ।
पितरश्चैव यक्षाश्च भुजगा राक्षसास्तथा ॥ ०१८ ॥

गन्धर्वा देवकन्याश्च सर्वे चाप्सरसां गणाः ।
सरांसि सरितः शैलाः सागराश्च विशां पते ॥ ०१९ ॥

उपगम्याब्रुवन्सर्वे दिष्ट्या वर्धसि शत्रुहन् ।
हतश्च नहुषः पापो दिष्ट्यागस्त्येन धीमता ॥ ०२० ॥

दिष्ट्या पापसमाचारः कृतः सर्पो महीतले ॥ ०२० ॥

---

# अध्याय ०१८

शल्य उवाच ॥

ततः शक्रः स्तूयमानो गन्धर्वाप्सरसां गणैः ।
ऐरावतं समारुह्य द्विपेन्द्रं लक्षणैर्युतम् ॥ ००१ ॥

पावकश्च महातेजा महर्षिश्च बृहस्पतिः ।
यमश्च वरुणश्चैव कुबेरश्च धनेश्वरः ॥ ००२ ॥

सर्वैर्देवैः परिवृतः शक्रो वृत्रनिषूदनः ।
गन्धर्वैरप्सरोभिश्च यातस्त्रिभुवनं प्रभुः ॥ ००३ ॥

स समेत्य महेन्द्राण्या देवराजः शतक्रतुः ।
मुदा परमया युक्तः पालयामास देवराट् ॥ ००४ ॥

ततः स भगवांस्तत्र अङ्गिराः समदृश्यत ।
अथर्ववेदमन्त्रैश्च देवेन्द्रं समपूजयत् ॥ ००५ ॥

ततस्तु भगवानिन्द्रः प्रहृष्टः समपद्यत ।
वरं च प्रददौ तस्मै अथर्वाङ्गिरसे तदा ॥ ००६ ॥

अथर्वाङ्गिरसं नाम अस्मिन्वेदे भविष्यति ।
उदाहरणमेतद्धि यज्ञभागं च लप्स्यसे ॥ ००७ ॥

एवं संपूज्य भगवानथर्वाङ्गिरसं तदा ।
व्यसर्जयन्महाराज देवराजः शतक्रतुः ॥ ००८ ॥

संपूज्य सर्वांस्त्रिदशानृषींश्चापि तपोधनान् ।
इन्द्रः प्रमुदितो राजन्धर्मेणापालयत्प्रजाः ॥ ००९ ॥

एवं दुःखमनुप्राप्तमिन्द्रेण सह भार्यया ।
अज्ञातवासश्च कृतः शत्रूणां वधकाङ्क्षया ॥ ०१० ॥

नात्र मन्युस्त्वया कार्यो यत्क्लिष्टोऽसि महावने ।
द्रौपद्या सह राजेन्द्र भ्रातृभिश्च महात्मभिः ॥ ०११ ॥

एवं त्वमपि राजेन्द्र राज्यं प्राप्स्यसि भारत ।
वृत्रं हत्वा यथा प्राप्तः शक्रः कौरवनन्दन ॥ ०१२ ॥

दुराचारश्च नहुषो ब्रह्मद्विड्पापचेतनः ।
अगस्त्यशापाभिहतो विनष्टः शाश्वतीः समाः ॥ ०१३ ॥

एवं तव दुरात्मानः शत्रवः शत्रुसूदन ।
क्षिप्रं नाशं गमिष्यन्ति कर्णदुर्योधनादयः ॥ ०१४ ॥

ततः सागरपर्यन्तां भोक्ष्यसे मेदिनीमिमाम् ।

भ्रातृभिः सहितो वीर द्रौपद्या च सहाभिभो ॥ ०१५ ॥

उपाख्यानमिदं शक्रविजयं वेदसंमितम् ।
राज्ञा व्यूढेष्वनीकेषु श्रोतव्यं जयमिच्छता ॥ ०१६ ॥

तस्मात्संश्रावयामि त्वां विजयं जयतां वर ।
संस्तूयमाना वर्धन्ते महात्मानो युधिष्ठिर ॥ ०१७ ॥

क्षत्रियाणामभावोऽयं युधिष्ठिर महात्मनाम् ।
दुर्योधनापराधेन भीमार्जुनबलेन च ॥ ०१८ ॥

आख्यानमिन्द्रविजयं य इदं नियतः पठेत् ।
धूतपाप्मा जितस्वर्गः स प्रेत्येह च मोदते ॥ ०१९ ॥

न चारिजं भयं तस्य न चापुत्रो भवेन्नरः ।
नापदं प्राप्नुयात्काञ्चिद्दीर्घमायुश्च विन्दति ॥ ०२० ॥

सर्वत्र जयमाप्नोति न कदाचित्पराजयम् ॥ ०२० ॥

वैशंपायन उवाच ॥

एवमाश्वासितो राजा शल्येन भरतर्षभ ।
पूजयामास विधिवच्छल्यं धर्मभृतां वरः ॥ ०२१ ॥

श्रुत्वा शल्यस्य वचनं कुन्तीपुत्रो युधिष्ठिरः ।
प्रत्युवाच महाबाहुर्मद्रराजमिदं वचः ॥ ०२२ ॥

भवान्कर्णस्य सारथ्यं करिष्यति न संशयः ।
तत्र तेजोवधः कार्यः कर्णस्य मम संस्तवैः ॥ ०२३ ॥

शल्य उवाच ॥

एवमेतत्करिष्यामि यथा मां संप्रभाषसे ।
यच्चान्यदपि शक्ष्यामि तत्करिष्याम्यहं तव ॥ ०२४ ॥

वैशंपायन उवाच ॥

तत आमन्त्र्य कौन्तेयाञ्शल्यो मद्राधिपस्तदा ।
जगाम सबलः श्रीमान्दुर्योधनमरिंदमः ॥ ०२५ ॥

---

# अध्याय ०१९

वैशंपायन उवाच ॥

युयुधानस्ततो वीरः सात्वतानां महारथः ।
महता चतुरङ्गेण बलेनागाद्युधिष्ठिरम् ॥ ००१ ॥

तस्य योधा महावीर्या नानादेशसमागताः ।
नानाप्रहरणा वीराः शोभयां चक्रिरे बलम् ॥ ००२ ॥

परश्वधैर्भिण्डिपालैः शक्तितोमरमुद्गरैः ।
शक्त्यृष्टिपरशुप्रासैः करवालैश्च निर्मलैः ॥ ००३ ॥

खड्गकार्मुकनिर्यूहैः शरैश्च विविधैरपि ।
तैलधौतैः प्रकाशद्भिस्तदशोभत वै बलम् ॥ ००४ ॥

तस्य मेघप्रकाशस्य शस्त्रैस्तैः शोभितस्य च ।
बभूव रूपं सैन्यस्य मेघस्येव सविद्युतः ॥ ००५ ॥

अक्षौहिणी हि सेना सा तदा यौधिष्ठिरं बलम् ।
प्रविश्यान्तर्दधे राजन्सागरं कुनदी यथा ॥ ००६ ॥

तथैवाक्षौहिणीं गृह्य चेदीनामृषभो बली ।
धृष्टकेतुरुपागच्छत्पाण्डवानमितौजसः ॥ ००७ ॥

मागधश्च जयत्सेनो जारासंधिर्महाबलः ।
अक्षौहिण्यैव सैन्यस्य धर्मराजमुपागमत् ॥ ००८ ॥

तथैव पाण्ड्यो राजेन्द्र सागरानूपवासिभिः ।
वृतो बहुविधैर्योधैर्युधिष्ठिरमुपागमत् ॥ ००९ ॥

तस्य सैन्यमतीवासीत्तस्मिन्बलसमागमे ।
प्रेक्षणीयतरं राजन्सुवेषं बलवत्तदा ॥ ०१० ॥

द्रुपदस्याप्यभूत्सेना नानादेशसमागतैः ।
शोभिता पुरुषैः शूरैः पुत्रैश्चास्य महारथैः ॥ ०११ ॥

तथैव राजा मत्स्यानां विराटो वाहिनीपतिः ।
पार्वतीयैर्महीपालैः सहितः पाण्डवानियात् ॥ ०१२ ॥

इतश्चेतश्च पाण्डूनां समाजग्मुर्महात्मनाम् ।
अक्षौहिण्यस्तु सप्तैव विविधध्वजसङ्कुलाः ॥ ०१३ ॥

युयुत्समानाः कुरुभिः पाण्डवान्समहर्षयन् ॥ ०१३ ॥

तथैव धार्तराष्ट्रस्य हर्षं समभिवर्धयन् ।
भगदत्तो महीपालः सेनामक्षौहिणीं ददौ ॥ ०१४ ॥

तस्य चीनैः किरातैश्च काञ्चनैरिव संवृतम् ।
बभौ बलमनाधृष्यं कर्णिकारवनं यथा ॥ ०१५ ॥

तथा भूरिश्रवाः शूरः शल्यश्च कुरुनन्दन ।
दुर्योधनमुपायातावक्षौहिण्या पृथक्पृथक् ॥ ०१६ ॥

कृतवर्मा च हार्दिक्यो भोजान्धकबलैः सह ।
अक्षौहिण्यैव सेनाया दुर्योधनमुपागमत् ॥ ०१७ ॥

तस्य तैः पुरुषव्याघ्रैर्वनमालाधरैर्बलम् ।
अशोभत यथा मत्तैर्वनं प्रक्रीडितैर्गजैः ॥ ०१८ ॥

जयद्रथमुखाश्चान्ये सिन्धुसौवीरवासिनः ।
आजग्मुः पृथिवीपालाः कम्पयन्त इवाचलान् ॥ ०१९ ॥

तेषामक्षौहिणी सेना बहुला विबभौ तदा ।
विधूयमाना वातेन बहुरूपा इवाम्बुदाः ॥ ०२० ॥

सुदक्षिणश्च काम्बोजो यवनैश्च शकैस्तथा ।
उपाजगाम कौरव्यमक्षौहिण्या विशां पते ॥ ०२१ ॥

तस्य सेनासमावायः शलभानामिवाबभौ ।
स च संप्राप्य कौरव्यं तत्रैवान्तर्दधे तदा ॥ ०२२ ॥

तथा माहिष्मतीवासी नीलो नीलायुधैः सह ।
महीपालो महावीर्यैर्दक्षिणापथवासिभिः ॥ ०२३ ॥

आवन्त्यौ च महीपालौ महाबलसुसंवृतौ ।
पृथगक्षौहिणीभ्यां तावभियातौ सुयोधनम् ॥ ०२४ ॥

केकयाश्च नरव्याघ्राः सोदर्याः पञ्च पार्थिवाः ।
संहर्षयन्तः कौरव्यमक्षौहिण्या समाद्रवन् ॥ ०२५ ॥

इतश्चेतश्च सर्वेषां भूमिपानां महात्मनाम् ।
तिस्रोऽन्याः समवर्तन्त वाहिन्यो भरतर्षभ ॥ ०२६ ॥

एवमेकादशावृत्ताः सेना दुर्योधनस्य ताः ।
युयुत्समानाः कौन्तेयान्नानाध्वजसमाकुलाः ॥ ०२७ ॥

न हास्तिनपुरे राजन्नवकाशोऽभवत्तदा ।
राज्ञां सबलमुख्यानां प्राधान्येनापि भारत ॥ ०२८ ॥

ततः पञ्चनदं चैव कृत्स्नं च कुरुजाङ्गलम् ।
तथा रोहितकारण्यं मरुभूमिश्च केवला ॥ ०२९ ॥

अहिच्छत्रं कालकूटं गङ्गाकूलं च भारत ।
वारणा वाटधानं च यामुनश्चैव पर्वतः ॥ ०३० ॥

एष देशः सुविस्तीर्णः प्रभूतधनधान्यवान् ।
बभूव कौरवेयाणां बलेन सुसमाकुलः ॥ ०३१ ॥

तत्र सैन्यं तथायुक्तं ददर्श स पुरोहितः ।
यः स पाञ्चालराजेन प्रेषितः कौरवान्प्रति ॥ ०३२ ॥

---

# अध्याय ०२०

वैशंपायन उवाच ॥

स तु कौरव्यमासाद्य द्रुपदस्य पुरोहितः ।
सत्कृतो धृतराष्ट्रेण भीष्मेण विदुरेण च ॥ ००१ ॥

सर्वं कौशल्यमुक्त्वादौ पृष्ट्वा चैवमनामयम् ।
सर्वसेनाप्रणेतॄणां मध्ये वाक्यमुवाच ह ॥ ००२ ॥

सर्वैर्भवद्भिर्विदितो राजधर्मः सनातनः ।
वाक्योपादानहेतोस्तु वक्ष्यामि विदिते सति ॥ ००३ ॥

धृतराष्ट्रश्च पाण्डुश्च सुतावेकस्य विश्रुतौ ।
तयोः समानं द्रविणं पैतृकं नात्र संशयः ॥ ००४ ॥

धृतराष्ट्रस्य ये पुत्रास्ते प्राप्ताः पैतृकं वसु ।
पाण्डुपुत्राः कथं नाम न प्राप्ताः पैतृकं वसु ॥ ००५ ॥

एवं गते पाण्डवेयैर्विदितं वः पुरा यथा ।
न प्राप्तं पैतृकं द्रव्यं धार्तराष्ट्रेण संवृतम् ॥ ००६ ॥

प्राणान्तिकैरप्युपायैः प्रयतद्भिरनेकशः ।
शेषवन्तो न शकिता नयितुं यमसादनम् ॥ ००७ ॥

पुनश्च वर्धितं राज्यं स्वबलेन महात्मभिः ।
छद्मनापहृतं क्षुद्रैर्धार्तराष्ट्रैः ससौबलैः ॥ ००८ ॥

तदप्यनुमतं कर्म तथायुक्तमनेन वै ।
वासिताश्च महारण्ये वर्षाणीह त्रयोदश ॥ ००९ ॥

सभायां क्लेशितैर्वीरैः सहभार्यैस्तथा भृशम् ।
अरण्ये विविधाः क्लेशाः संप्राप्तास्तैः सुदारुणाः ॥ ०१० ॥

तथा विराटनगरे योन्यन्तरगतैरिव ।
प्राप्तः परमसङ्क्लेशो यथा पापैर्महात्मभिः ॥ ०११ ॥

ते सर्वे पृष्ठतः कृत्वा तत्सर्वं पूर्वकिल्बिषम् ।
सामैव कुरुभिः सार्धमिच्छन्ति कुरुपुङ्गवाः ॥ ०१२ ॥

तेषां च वृत्तमाज्ञाय वृत्तं दुर्योधनस्य च ।
अनुनेतुमिहार्हन्ति धृतराष्ट्रं सुहृज्जनाः ॥ ०१३ ॥

न हि ते विग्रहं वीराः कुर्वन्ति कुरुभिः सह ।
अविनाशेन लोकस्य काङ्क्षन्ते पाण्डवाः स्वकम् ॥ ०१४ ॥

यश्चापि धार्तराष्ट्रस्य हेतुः स्याद्विग्रहं प्रति ।
स च हेतुर्न मन्तव्यो बलीयांसस्तथा हि ते ॥ ०१५ ॥

अक्षौहिण्यो हि सप्तैव धर्मपुत्रस्य सङ्गताः ।
युयुत्समानाः कुरुभिः प्रतीक्षन्तेऽस्य शासनम् ॥ ०१६ ॥

अपरे पुरुषव्याघ्राः सहस्राक्षौहिणीसमाः ।
सात्यकिर्भीमसेनश्च यमौ च सुमहाबलौ ॥ ०१७ ॥

एकादशैताः पृतना एकतश्च समागताः ।
एकतश्च महाबाहुर्बहुरूपो धनञ्जयः ॥ ०१८ ॥

यथा किरीटी सेनाभ्यः सर्वाभ्यो व्यतिरिच्यते ।
एवमेव महाबाहुर्वासुदेवो महाद्युतिः ॥ ०१९ ॥

बहुलत्वं च सेनानां विक्रमं च किरीटिनः ।
बुद्धिमत्तां च कृष्णस्य बुद्ध्वा युध्येत को नरः ॥ ०२० ॥

ते भवन्तो यथाधर्मं यथासमयमेव च ।
प्रयच्छन्तु प्रदातव्यं मा वः कालोऽत्यगादयम् ॥ ०२१ ॥

# अध्याय ०२१

वैशंपायन उवाच ॥

तस्य तद्वचनं श्रुत्वा प्रज्ञावृद्धो महाद्युतिः ।
संपूज्यैनं यथाकालं भीष्मो वचनमब्रवीत् ॥ ००१ ॥

दिष्ट्या कुशलिनः सर्वे पाण्डवाः सह बान्धवैः ।
दिष्ट्या सहायवन्तश्च दिष्ट्या धर्मे च ते रताः ॥ ००२ ॥

दिष्ट्या च संधिकामास्ते भ्रातरः कुरुनन्दनाः ।
दिष्ट्या न युद्धमनसः सह दामोदरेण ते ॥ ००३ ॥

भवता सत्यमुक्तं च सर्वमेतन्न संशयः ।
अतितीक्ष्णं तु ते वाक्यं ब्राह्मण्यादिति मे मतिः ॥ ००४ ॥

असंशयं क्लेशितास्ते वने चेह च पाण्डवाः ।
प्राप्ताश्च धर्मतः सर्वं पितुर्धनमसंशयम् ॥ ००५ ॥

किरीटी बलवान्पार्थः कृतास्त्रश्च महाबलः ।
को हि पाण्डुसुतं युद्धे विषहेत धनञ्जयम् ॥ ००६ ॥

अपि वज्रधरः साक्षात्किमुतान्ये धनुर्भृतः ।
त्रयाणामपि लोकानां समर्थ इति मे मतिः ॥ ००७ ॥

भीष्मे ब्रुवति तद्वाक्यं धृष्टमाक्षिप्य मन्युमान् ।
दुर्योधनं समालोक्य कर्णो वचनमब्रवीत् ॥ ००८ ॥

न तन्न विदितं ब्रह्म.ण्ल्लोके भूतेन केनचित् ।

पुनरुक्तेन किं तेन भाषितेन पुनः पुनः ॥ ००९ ॥

दुर्योधनार्थे शकुनिर्द्यूते निर्जितवान्पुरा ।
समयेन गतोऽरण्यं पाण्डुपुत्रो युधिष्ठिरः ॥ ०१० ॥

न तं समयमादृत्य राज्यमिच्छति पैतृकम् ।
बलमाश्रित्य मत्स्यानां पाञ्चालानां च पार्थिवः ॥ ०११ ॥

दुर्योधनो भयाद्विद्वन्न दद्यात्पदमन्ततः ।
धर्मतस्तु महीं कृत्स्नां प्रदद्याच्छत्रवेऽपि च ॥ ०१२ ॥

यदि काङ्क्षन्ति ते राज्यं पितृपैतामहं पुनः ।
यथाप्रतिज्ञं कालं तं चरन्तु वनमाश्रिताः ॥ ०१३ ॥

ततो दुर्योधनस्याङ्के वर्तन्तामकुतोभयाः ।
अधार्मिकामिमां बुद्धिं कुर्युर्मौर्ख्याद्धि केवलम् ॥ ०१४ ॥

अथ ते धर्ममुत्सृज्य युद्धमिच्छन्ति पाण्डवाः ।
आसाद्येमान्कुरुश्रेष्ठान्स्मरिष्यन्ति वचो मम ॥ ०१५ ॥

भीष्म उवाच ॥

किं नु राधेय वाचा ते कर्म तत्स्मर्तुमर्हसि ।
एक एव यदा पार्थः षड्रथाञ्जितवान्युधि ॥ ०१६ ॥

न चेदेवं करिष्यामो यदयं ब्राह्मणोऽब्रवीत् ।
ध्रुवं युधि हतास्तेन भक्षयिष्याम पांसुकान् ॥ ०१७ ॥

वैशंपायन उवाच ॥

धृतराष्ट्रस्ततो भीष्ममनुमान्य प्रसाद्य च ।

अवभर्त्स्य च राधेयमिदं वचनमब्रवीत्  ॥ ०१८  ॥

अस्मद्धितमिदं वाक्यं भीष्मः शांतनवोऽब्रवीत् ।
पाण्डवानां हितं चैव सर्वस्य जगतस्तथा  ॥ ०१९  ॥

चिन्तयित्वा तु पार्थेभ्यः प्रेषयिष्यामि सञ्जयम् ।
स भवान्प्रतियात्वद्य पाण्डवानेव माचिरम्  ॥ ०२०  ॥

स तं सत्कृत्य कौरव्यः प्रेषयामास पाण्डवान् ।
सभामध्ये समाहूय सञ्जयं वाक्यमब्रवीत्  ॥ ०२१  ॥

---

# संजययानपर्व

## अध्याय ०२२

धृतराष्ट्र उवाच  ॥

प्राप्तानाहुः सञ्जय पाण्डुपुत्रा ;नुपप्लव्ये तान्विजानीहि गत्वा ।
अजातशत्रुं च सभाजयेथा ; दिष्ट्यानघ ग्राममुपस्थितस्त्वम्  ॥ ००१  ॥

सर्वान्वदेः सञ्जय स्वस्तिमन्तः ; कृच्छ्रं वासमतदर्हा निरुष्य ।
तेषां शान्तिर्विद्यतेऽस्मासु शीघ्रं ; मिथ्योपेतानामुपकारिणां सताम्  ॥ ००२  ॥

नाहं क्वचित्सञ्जय पाण्डवानां ; मिथ्यावृत्तिं काञ्चन जात्वपश्यम् ।
सर्वां श्रियं ह्यात्मवीर्येण लब्ध्वा ; पर्याकार्षुः पाण्डवा मह्यमेव  ॥ ००३  ॥

दोषं ह्येषां नाधिगच्छे परिक्ष ;न्नित्यं कञ्चिद्येन गर्हेय पार्थान् ।

धर्मार्थाभ्यां कर्म कुर्वन्ति नित्यं ; सुखप्रिया नानुरुध्यन्ति कामान्  ॥ ००४  ॥

घर्मं शीतं क्षुत्पिपासे तथैव ; निद्रां तन्द्रीं क्रोधहर्षौ प्रमादम् ।
धृत्या चैव प्रज्ञया चाभिभूय ; धर्मार्थयोगान्प्रयतन्ति पार्थाः  ॥ ००५  ॥

त्यजन्ति मित्रेषु धनानि काले ; न संवासाज्जीर्यति मैत्रमेषाम् ।
यथार्हमानार्थकरा हि पार्था ;स्तेषां द्वेष्टा नास्त्याजमीढस्य पक्षे  ॥ ००६  ॥

अन्यत्र पापाद्विषमान्मन्दबुद्धे ;र्दुर्योधनात्क्षुद्रतराच्च कर्णात् ।
तेषां हीमे हीनसुखप्रियाणां ; महात्मनां सञ्जनयन्ति तेजः  ॥ ००७  ॥

उत्थानवीर्यः सुखमेधमानो ; दुर्योधनः सुकृतं मन्यते तत् ।
तेषां भागं यच्च मन्येत बालः ; शक्यं हर्तुं जीवतां पाण्डवानाम्  ॥ ००८  ॥

यस्यार्जुनः पदवीं केशवश्च ; वृकोदरः सात्यकोऽजातशत्रोः ।
माद्रीपुत्रौ सृञ्जयाश्चापि सर्वे ; पुरा युद्धात्साधु तस्य प्रदानम्  ॥ ००९  ॥

स ह्येवैकः पृथिवीं सव्यसाची ; गाण्डीवधन्वा प्रणुदेद्रथस्थः ।
तथा विष्णुः केशवोऽप्यप्रधृष्यो ; लोकत्रयस्याधिपतिर्महात्मा  ॥ ०१०  ॥

तिष्ठेत कस्तस्य मर्त्यः पुरस्ता ;द्यः सर्वदेवेषु वरेण्य ईड्यः ।
पर्जन्यघोषान्प्रवपञ्शरौघा ;न्पतङ्गसंघानिव शीघ्रवेगान्  ॥ ०११  ॥

दिशं ह्युदीचीमपि चोत्तरान्कुरू ;न्गाण्डीवधन्वैकरथो जिगाय ।
धनं चैषामाहरत्सव्यसाची ; सेनानुगान्बलिदांश्चैव चक्रे  ॥ ०१२  ॥

यश्चैव देवान्खाण्डवे सव्यसाची ; गाण्डीवधन्वा प्रजिगाय सेन्द्रान् ।
उपाहरत्फल्गुनो जातवेदसे ; यशो मानं वर्धयन्पाण्डवानाम्  ॥ ०१३  ॥

गदाभृतां नाद्य समोऽस्ति भीमा ;द्धस्त्यारोहो नास्ति समश्च तस्य ।
रथेऽर्जुनादाहुरहीनमेनं ; बाह्वोर्बले चायुतनागवीर्यम्  ॥ ०१४  ॥

सुशिक्षितः कृतवैरस्तरस्वी ; दहेत्क्रुद्धस्तरसा धार्तराष्ट्रान् ।
सदात्यमर्षी बलवान्न शक्यो ; युद्धे जेतुं वासवेनापि साक्षात्  ॥ ०१५  ॥

सुचेतसौ बलिनौ शीघ्रहस्तौ ; सुशिक्षितौ भ्रातरौ फल्गुनेन ।
श्येनौ यथा पक्षिपूगान्रुजन्तौ ; माद्रीपुत्रौ नेह कुरून्विशेताम्  ॥ ०१६  ॥

तेषां मध्ये वर्तमानस्तरस्वी ; धृष्टद्युम्नः पाण्डवानामिहैकः ।
सहामात्यः सोमकानां प्रबर्हः ; संत्यक्तात्मा पाण्डवानां जयाय  ॥ ०१७  ॥

सहोषितश्चरितार्थो वयःस्थः ; शाल्वेयानामधिपो वै विराटः ।
सह पुत्रैः पाण्डवार्थे च शश्व ;द्युधिष्ठिरं भक्त इति श्रुतं मे  ॥ ०१८  ॥

अवरुद्धा बलिनः केकयेभ्यो ; महेष्वासा भ्रातरः पञ्च सन्ति ।
केकयेभ्यो राज्यमाकाङ्क्षमाणा ; युद्धार्थिनश्चानुवसन्ति पार्थान्  ॥ ०१९  ॥

सर्वे च वीराः पृथिवीपतीनां ; समानीताः पाण्डवार्थे निविष्टाः ।
शूरानहं भक्तिमतः शृणोमि ; प्रीत्या युक्तान्संश्रितान्धर्मराजम्  ॥ ०२०  ॥

गिर्याश्रया दुर्गनिवासिनश्च ; योधाः पृथिव्यां कुलजा विशुद्धाः ।
म्लेच्छाश्च नानायुधवीर्यवन्तः ; समागताः पाण्डवार्थे निविष्टाः  ॥ ०२१  ॥

पाण्ड्यश्च राजामित इन्द्रकल्पो ; युधि प्रवीरैर्बहुभिः समेतः ।
समागतः पाण्डवार्थे महात्मा ; लोकप्रवीरोऽप्रतिवीर्यतेजाः  ॥ ०२२  ॥

अस्त्रं द्रोणादर्जुनाद्वासुदेवा ;त्कृपाद्भीष्माद्येन कृतं शृणोमि ।
यं तं कार्ष्णिप्रतिमं प्राहुरेकं ; स सात्यकिः पाण्डवार्थे निविष्टः  ॥ ०२३  ॥

अपाश्रिताश्चेदिकरूषकाश्च ; सर्वोत्साहैर्भूमिपालैः समेताः ।
तेषां मध्ये सूर्यमिवातपन्तं ; श्रिया वृतं चेदिपतिं ज्वलन्तम्  ॥ ०२४  ॥

अस्तम्भनीयं युधि मन्यमानं ; ज्याकर्षतां श्रेष्ठतमं पृथिव्याम् ।
सर्वोत्साहं क्षत्रियाणां निहत्य ; प्रसह्य कृष्णस्तरसा ममर्द ॥ ०२५ ॥

यशोमानौ वर्धयन्यादवानां ; पुराभिनच्छिशुपालं समीके ।
यस्य सर्वे वर्धयन्ति स्म मानं ; करूषराजप्रमुखा नरेन्द्राः ॥ ०२६ ॥

तमसह्यं केशवं तत्र मत्वा ; सुग्रीवयुक्तेन रथेन कृष्णम् ।
संप्राद्रवंश्चेदिपतिं विहाय ; सिंहं दृष्ट्वा क्षुद्रमृगा इवान्ये ॥ ०२७ ॥

यस्तं प्रतीपस्तरसा प्रत्युदीया ;दाशंसमानो द्वैरथे वासुदेवम् ।
सोऽशेत कृष्णेन हतः परासु ;र्वातेनेवोन्मथितः कर्णिकारः ॥ ०२८ ॥

पराक्रमं मे यदवेदयन्त ; तेषामर्थे सञ्जय केशवस्य ।
अनुस्मरंस्तस्य कर्माणि विष्णो ;र्गावल्गणे नाधिगच्छामि शान्तिम् ॥ ०२९ ॥

न जातु ताञ्शत्रुरन्यः सहेत ; येषां स स्यादग्रणीर्वृष्णिसिंहः ।
प्रवेपते मे हृदयं भयेन ; श्रुत्वा कृष्णावेकरथे समेतौ ॥ ०३० ॥

नो चेद्गच्छेत्सङ्गरं मन्दबुद्धि ;स्ताभ्यां सुतो मे विपरीतचेताः ।
नो चेत्कुरून्सञ्जय निर्दहेता ;मिन्द्राविष्णू दैत्यसेनां यथैव ॥ ०३१ ॥

मतो हि मे शक्रसमो धनञ्जयः ; सनातनो वृष्णिवीरश्च विष्णुः ॥ ०३१ ॥

धर्मारामो ह्रीनिषेधस्तरस्वी ; कुन्तीपुत्रः पाण्डवोऽजातशत्रुः ।
दुर्योधनेन निकृतो मनस्वी ; नो चेत्क्रुद्धः प्रदहेद्धार्तराष्ट्रान् ॥ ०३२ ॥

नाहं तथा ह्यर्जुनाद्वासुदेवा ;द्भीमाद्वापि यमयोर्वा बिभेमि ।
यथा राज्ञः क्रोधदीप्तस्य सूत ; मन्योरहं भीततरः सदैव ॥ ०३३ ॥

अलं तपोब्रह्मचर्येण युक्तः ; सङ्कल्पोऽयं मानसस्तस्य सिध्येत् ।
तस्य क्रोधं सञ्जयाहं समीके ; स्थाने जानन्भृशमस्म्यद्य भीतः ॥ ०३४ ॥

स गच्छ शीघ्रं प्रहितो रथेन ; पाञ्चालराजस्य चमूं परेत्य ।
अजातशत्रुं कुशलं स्म पृच्छेः ; पुनः पुनः प्रीतियुक्तं वदेस्त्वम्  ॥ ०३५  ॥

जनार्दनं चापि समेत्य तात ; महामात्रं वीर्यवतामुदारम् ।
अनामयं मद्वचनेन पृच्छे ;धृतराष्ट्रः पाण्डवैः शान्तिमीप्सुः  ॥ ०३६  ॥

न तस्य किञ्चिद्वचनं न कुर्या ;त्कुन्तीपुत्रो वासुदेवस्य सूत ।
प्रियश्चैषामात्मसमश्च कृष्णो ; विद्वांश्चैषां कर्मणि नित्ययुक्तः  ॥ ०३७  ॥

समानीय पाण्डवान्सृञ्जयांश्च ; जनार्दनं युयुधानं विराटम् ।
अनामयं मद्वचनेन पृच्छेः ; सर्वांस्तथा द्रौपदेयांश्च पञ्च  ॥ ०३८  ॥

यद्यत्तत्र प्राप्तकालं परेभ्य ;स्त्वं मन्येथा भारतानां हितं च ।
तत्तद्भाषेथाः सञ्जय राजमध्ये ; न मूर्छयेद्यन्न भवेच्च युद्धम्  ॥ ०३९  ॥

---

# अध्याय ०२३

वैशंपायन उवाच  ॥

राज्ञस्तु वचनं श्रुत्वा धृतराष्ट्रस्य सञ्जयः ।
उपप्लव्यं ययौ द्रष्टुं पाण्डवानमितौजसः  ॥ ००१  ॥

स तु राजानमासाद्य धर्मात्मानं युधिष्ठिरम् ।
प्रणिपत्य ततः पूर्वं सूतपुत्रोऽभ्यभाषत  ॥ ००२  ॥

गावल्गणिः सञ्जयः सूतसूनु ;रजातशत्रुमवदत्प्रतीतः ।

दिष्ट्या राजंस्त्वामरोगं प्रपश्ये ; सहायवन्तं च महेन्द्रकल्पम् ॥ ००३ ॥

अनामयं पृच्छति त्वाम्बिकेयो ; वृद्धो राजा धृतराष्ट्रो मनीषी ।
कच्चिद्भीमः कुशली पाण्डवाग्र्यो ; धनञ्जयस्तौ च माद्रीतनूजौ ॥ ००४ ॥

कच्चित्कृष्णा द्रौपदी राजपुत्री ; सत्यव्रता वीरपत्नी सपुत्रा ।
मनस्विनी यत्र च वाञ्छसि त्व ;मिष्टान्कामान्भारत स्वस्तिकामः ॥ ००५ ॥

युधिष्ठिर उवाच ॥

गावल्गणे सञ्जय स्वागतं ते ; प्रीतात्माहं त्वाभिवदामि सूत ।
अनामयं प्रतिजाने तवाहं ; सहानुजैः कुशली चास्मि विद्वन् ॥ ००६ ॥

चिरादिदं कुशलं भारतस्य ; श्रुत्वा राज्ञः कुरुवृद्धस्य सूत ।
मन्ये साक्षाद्दृष्टमहं नरेन्द्रं ; दृष्ट्वैव त्वां सञ्जय प्रीतियोगात् ॥ ००७ ॥

पितामहो नः स्थविरो मनस्वी ; महाप्राज्ञः सर्वधर्मोपपन्नः ।
स कौरव्यः कुशली तात भीष्मो ; यथापूर्वं वृत्तिरप्यस्य कच्चित् ॥ ००८ ॥

कच्चिद्राजा धृतराष्ट्रः सपुत्रो ; वैचित्रवीर्यः कुशली महात्मा ।
महाराजो बाह्लिकः प्रातिपेयः ; कच्चिद्विद्वान्कुशली सूतपुत्र ॥ ००९ ॥

स सोमदत्तः कुशली तात कच्चि ;द्भूरिश्रवाः सत्यसंधः शलश्च ।
द्रोणः सपुत्रश्च कृपश्च विप्रो ; महेष्वासाः कच्चिदेतेऽप्यरोगाः ॥ ०१० ॥

महाप्राज्ञाः सर्वशास्त्रावदाता ; धनुर्भृतां मुख्यतमाः पृथिव्याम् ।
कच्चिन्मानं तात लभन्त एते ; धनुर्भृतः कच्चिदेतेऽप्यरोगाः ॥ ०११ ॥

सर्वे कुरुभ्यः स्पृहयन्ति सञ्जय ; धनुर्धरा ये पृथिव्यां युवानः ।
येषां राष्ट्रे निवसति दर्शनीयो ; महेष्वासः शीलवान्द्रोणपुत्रः ॥ ०१२ ॥

वैश्यापुत्रः कुशली तात कच्चि ;न्महाप्राज्ञो राजपुत्रो युयुत्सुः ।
कर्णोऽमात्यः कुशली तात कच्चि ;त्सुयोधनो यस्य मन्दो विधेयः ॥ ०१३ ॥

स्त्रियो वृद्धा भारतानां जनन्यो ; महानस्यो दासभार्याश्च सूत ।
वध्वः पुत्रा भागिनेया भगिन्यो ; दौहित्रा वा कच्चिदप्यव्यलीकाः ॥ ०१४ ॥

कच्चिद्राजा ब्राह्मणानां यथाव ;त्प्रवर्तते पूर्ववत्तात वृत्तिम् ।
कच्चिद्दायान्मामकान्धार्तराष्ट्रो ; द्विजातीनां सञ्जय नोपहन्ति ॥ ०१५ ॥

कच्चिद्राजा धृतराष्ट्रः सपुत्र ; उपेक्षते ब्राह्मणातिक्रमान्वै ।
कच्चिन्न हेतोरिव वर्त्मभूत ; उपेक्षते तेषु स न्यूनवृत्तिम् ॥ ०१६ ॥

एतज्ज्योतिरुत्तमं जीवलोके ; शुक्लं प्रजानां विहितं विधात्रा ।
ते चेल्लोभं न नियच्छन्ति मन्दाः ; कृत्स्नो नाशो भविता कौरवाणाम् ॥ ०१७ ॥

कच्चिद्राजा धृतराष्ट्रः सपुत्रो ; बुभूषते वृत्तिममात्यवर्गे ।
कच्चिन्न भेदेन जिजीविषन्ति ; सुहृद्रूपा दुर्हृदश्चैकमित्राः ॥ ०१८ ॥

कच्चिन्न पापं कथयन्ति तात ; ते पाण्डवानां कुरवः सर्व एव ।
कच्चिद्दृष्ट्वा दस्युसंघान्समेता ;न्स्मरन्ति पार्थस्य युधां प्रणेतुः ॥ ०१९ ॥

मौर्वीभुजाग्रप्रहितान्स्म तात ; दोधूयमानेन धनुर्धरेण ।
गाण्डीवमुक्तान्स्तनयित्नुघोषा ;नजिह्मगान्कच्चिदनुस्मरन्ति ॥ ०२० ॥

न ह्यपश्यं कञ्चिदहं पृथिव्यां ; श्रुतं समं वाधिकमर्जुनेन ।
यस्यैकषष्टिर्निशितास्तीक्ष्णधाराः ; सुवाससः संमतो हस्तवापः ॥ ०२१ ॥

गदापाणिर्भीमसेनस्तरस्वी ; प्रवेपयञ्शत्रुसंघाननीके ।
नागः प्रभिन्न इव नड्वलासु ; चङ्क्रम्यते कच्चिदेनं स्मरन्ति ॥ ०२२ ॥

माद्रीपुत्रः सहदेवः कलिङ्गा ;न्समागतानजयद्दन्तकूरे ।
वामेनास्यन्दक्षिणेनैव यो वै ; महाबलं कच्चिदेनं स्मरन्ति ॥ ०२३ ॥

उद्यन्नयं नकुलः प्रेषितो वै ; गावल्गणे सञ्जय पश्यतस्ते ।
दिशं प्रतीचीं वशमानयन्मे ; माद्रीसुतं कच्चिदेनं स्मरन्ति ॥ ०२४ ॥

अभ्याभवो द्वैतवने य आसी ;द्दुर्मन्त्रिते घोषयात्रागतानाम् ।
यत्र मन्दाञ्शत्रुवशं प्रयाता ;नमोचयद्भीमसेनो जयश्च ॥ ०२५ ॥

अहं पश्चादर्जुनमभ्यरक्षं ; माद्रीपुत्रौ भीमसेनश्च चक्रे ।
गाण्डीवभृच्छत्रुसंघानुदस्य ; स्वस्त्यागमत्कच्चिदेनं स्मरन्ति ॥ ०२६ ॥

न कर्मणा साधुनैकेन नूनं ; कर्तुं शक्यं भवतीह सञ्जय ।
सर्वात्मना परिजेतुं वयं चे ;न्न शक्नुमो धृतराष्ट्रस्य पुत्रम् ॥ ०२७ ॥

---

# अध्याय ०२४

सञ्जय उवाच ॥

यथार्हसे पाण्डव तत्तथैव ; कुरून्कुरुश्रेष्ठ जनं च पृच्छसि ।
अनामयास्तात मनस्विनस्ते ; कुरुश्रेष्ठान्पृच्छसि पार्थ यांस्त्वम् ॥ ००१ ॥

सन्त्येव वृद्धाः साधवो धार्तराष्ट्रे ; सन्त्येव पापाः पाण्डव तस्य विद्धि ।
दद्याद्रिपोश्चापि हि धार्तराष्ट्रः ; कुतो दाया.ण्ल्लोपयेद्ब्राह्मणानाम् ॥ ००२ ॥

यद्युष्माकं वर्ततेऽसौ न धर्म्य ;मद्रुग्धेषु द्रुग्धवत्तन्न साधु ।
मित्रध्रुक्स्याद्धृतराष्ट्रः सपुत्रो ; युष्मान्द्विषन्साधुवृत्तानसाधुः ॥ ००३ ॥

न चानुजानाति भृशं च तप्यते ; शोचत्यन्तः स्थविरोऽजातशत्रो ।
शृणोति हि ब्राह्मणानां समेत्य ; मित्रद्रोहः पातकेभ्यो गरीयान् ॥ ००४ ॥

स्मरन्ति तुभ्यं नरदेव सङ्गमे ; युद्धे च जिष्णोश्च युधां प्रणेतुः ।
समुत्कृष्टे दुन्दुभिशङ्खशब्दे ; गदापाणिं भीमसेनं स्मरन्ति ॥ ००५ ॥

माद्रीसुतौ चापि रणाजिमध्ये ; सर्वा दिशः संपतन्तौ स्मरन्ति ।
सेनां वर्षन्तौ शरवर्षैरजस्रं ; महारथौ समरे दुष्प्रकम्प्यौ ॥ ००६ ॥

न त्वेव मन्ये पुरुषस्य राज ;न्ननागतं ज्ञायते यद्भविष्यम् ।
त्वं चेदिमं सर्वधर्मोपपन्नः ; प्राप्तः क्लेशं पाण्डव कृच्छ्ररूपम् ॥ ००७ ॥

त्वमेवैतत्सर्वमतश्च भूयः ; समीकुर्याः प्रज्ञयाजातशत्रो ।
न कामार्थं संत्यजेयुर्हि धर्मं ; पाण्डोः सुताः सर्व एवेन्द्रकल्पाः ॥ ००८ ॥

त्वमेवैतत्प्रज्ञयाजातशत्रो ; शमं कुर्या येन शर्माप्नुयुस्ते ।
धार्तराष्ट्राः पाण्डवाः सृञ्जयाश्च ; ये चाप्यन्ये पार्थिवाः संनिविष्टाः ॥ ००९ ॥

यन्माब्रवीद्धृतराष्ट्रो निशाया ;मजातशत्रो वचनं पिता ते ।
सहामात्यः सहपुत्रश्च राज ;न्समेत्य तां वाचमिमां निबोध ॥ ०१० ॥

---

# अध्याय ०२५

युधिष्ठिर उवाच ॥

समागताः पाण्डवाः सृञ्जयाश्च ; जनार्दनो युयुधानो विराटः ।

यत्ते वाक्यं धृतराष्ट्रानुशिष्टं ; गावल्गणे ब्रूहि तत्सूतपुत्र ॥ ००१ ॥

सञ्जय उवाच ॥

अजातशत्रुं च वृकोदरं च ; धनञ्जयं माद्रवतीसुतौ च ।
आमन्त्रये वासुदेवं च शौरिं ; युयुधानं चेकितानं विराटम् ॥ ००२ ॥

पाञ्चालानामधिपं चैव वृद्धं ; धृष्टद्युम्नं पार्षतं याज्ञसेनिम् ।
सर्वे वाचं शृणुतेमां मदीयां ; वक्ष्यामि यां भूतिमिच्छन्कुरूणाम् ॥ ००३ ॥

शमं राजा धृतराष्ट्रोऽभिनन्द ;न्नयोजयत्त्वरमाणो रथं मे ।
सभ्रातृपुत्रस्वजनस्य राज्ञ ;स्तद्रोचतां पाण्डवानां शमोऽस्तु ॥ ००४ ॥

सर्वैर्धर्मैः समुपेताः स्थ पार्थाः ; प्रस्थानेन मार्दवेनार्जवेन ।
जाताः कुले अनृशंसा वदान्या ; ह्रीनिषेधाः कर्मणां निश्चयज्ञाः ॥ ००५ ॥

न युज्यते कर्म युष्मासु हीनं ; सत्त्वं हि वस्तादृशं भीमसेनाः ।
उद्भासते ह्यञ्जनबिन्दुवत्त ;च्छुक्ले वस्त्रे यद्भवेत्किल्बिषं वः ॥ ००६ ॥

सर्वक्षयो दृश्यते यत्र कृत्स्नः ; पापोदयो निरयोऽभावसंस्थः ।
कस्तत्कुर्याज्जातु कर्म प्रजान ;न्पराजयो यत्र समो जयश्च ॥ ००७ ॥

ते वै धन्या यैः कृतं ज्ञातिकार्यं ; ये वः पुत्राः सुहृदो बान्धवाश्च ।
उपक्रुष्टं जीवितं संत्यजेयु ;स्ततः कुरूणां नियतो वै भवः स्यात् ॥ ००८ ॥

ते चेत्कुरूननुशास्य स्थ पार्था ; निनीय सर्वान्द्विषतो निगृह्य ।
समं वस्तज्जीवितं मृत्युना स्या ;द्यज्जीवध्वं ज्ञातिवधे न साधु ॥ ००९ ॥

को ह्येव युष्मान्सह केशवेन ; सचेकितानान्पार्षतबाहुगुप्तान् ।
ससात्यकीन्विषहेत प्रजेतुं ; लब्ध्वापि देवान्सचिवान्सहेन्द्रान् ॥ ०१० ॥

को वा कुरून्द्रोणभीष्माभिगुप्ता ;नश्वत्थाम्ना शल्यकृपादिभिश्च ।
रणे प्रसोढुं विषहेत राज ;न्राधेयगुप्तान्सह भूमिपालैः ॥ ०११ ॥

महद्बलं धार्तराष्ट्रस्य राज्ञः ; को वै शक्तो हन्तुमक्षीयमाणः ।
सोऽहं जये चैव पराजये च ; निःश्रेयसं नाधिगच्छामि किञ्चित् ॥ ०१२ ॥

कथं हि नीचा इव दौष्कुलेया ; निर्धर्मार्थं कर्म कुर्युश्च पार्थाः ।
सोऽहं प्रसाद्य प्रणतो वासुदेवं ; पाञ्चालानामधिपं चैव वृद्धम् ॥ ०१३ ॥

कृताञ्जलिः शरणं वः प्रपद्ये ; कथं स्वस्ति स्यात्कुरुसृञ्जयानाम् ।
न ह्येव ते वचनं वासुदेवो ; धनञ्जयो वा जातु किञ्चिन्न कुर्यात् ॥ ०१४ ॥

प्राणानादौ याच्यमानः कुतोऽन्य ;देतद्विद्वन्साधनार्थं ब्रवीमि ।
एतद्राज्ञो भीष्मपुरोगमस्य ; मतं यद्वः शान्तिरिहोत्तमा स्यात् ॥ ०१५ ॥

---

# अध्याय ०२६

युधिष्ठिर उवाच ॥

कां नु वाचं सञ्जय मे शृणोषि ; युद्धैषिणीं येन युद्धाद्बिभेषि ।
अयुद्धं वै तात युद्धाद्गरीयः ; कस्तल्लब्ध्वा जातु युध्येत सूत ॥ ००१ ॥

अकुर्वतश्चेत्पुरुषस्य सञ्जय ; सिध्येत्सङ्कल्पो मनसा यं यमिच्छेत् ।
न कर्म कुर्याद्विदितं ममैत ;दन्यत्र युद्धाद्बहु यल्लघीयः ॥ ००२ ॥

कुतो युद्धं जातु नरः प्रजान ;न्को दैवशप्तोऽभिवृणीत युद्धम् ।
सुखैषिणः कर्म कुर्वन्ति पार्था ; धर्मादहीनं यच्च लोकस्य पथ्यम् ॥ ००३ ॥

कर्मोदयं सुखमाशंसमानः ; कृच्छ्रोपायं तत्त्वतः कर्म दुःखम् ।
सुखप्रेप्सुर्विजिघांसुश्च दुःखं ; य इन्द्रियाणां प्रीतिवशानुगामी ॥ ००४ ॥

कामाभिध्या स्वशरीरं दुनोति ; यया प्रयुक्तोऽनुकरोति दुःखम् ॥ ००४ ॥

यथेध्यमानस्य समिद्धतेजसो ; भूयो बलं वर्धते पावकस्य ।
कामार्थलाभेन तथैव भूयो ; न तृप्यते सर्पिषेवाग्निरिद्धः ॥ ००५ ॥

संपश्येमं भोगचयं महान्तं ; सहास्माभिर्धृतराष्ट्रस्य राज्ञः ॥ ००५ ॥

नाश्रेयसामीश्वरो विग्रहाणां ; नाश्रेयसां गीतशब्दं शृणोति ।
नाश्रेयसः सेवते माल्यगन्धा ;न्न चाप्यश्रेयांस्यनुलेपनानि ॥ ००६ ॥

नाश्रेयसः प्रावरानध्यवस्ते ; कथं त्वस्मान्संप्रणुदेत्कुरुभ्यः ।
अत्रैव च स्यादवधूय एष ; कामः शरीरे हृदयं दुनोति ॥ ००७ ॥

स्वयं राजा विषमस्थः परेषु ; सामस्थ्यमन्विच्छति तन्न साधु ।
यथात्मनः पश्यति वृत्तमेव ; तथा परेषामपि सोऽभ्युपैति ॥ ००८ ॥

आसन्नमग्निं तु निदाघकाले ; गम्भीरकक्षे गहने विसृज्य ।
यथा वृद्धं वायुवशेन शोचे ;त्क्षेमं मुमुक्षुः शिशिरव्यपाये ॥ ००९ ॥

प्राप्तैश्वर्यो धृतराष्ट्रोऽद्य राजा ; लालप्यते सञ्जय कस्य हेतोः ।
प्रगृह्य दुर्बुद्धिमनार्जवे रतं ; पुत्रं मन्दं मूढममन्त्रिणं तु ॥ ०१० ॥

अनाप्तः सन्नाप्ततमस्य वाचं ; सुयोधनो विदुरस्यावमन्य ।
सुतस्य राजा धृतराष्ट्रः प्रियैषी ; संबुध्यमानो विशतेऽधर्ममेव ॥ ०११ ॥

मेधाविनं ह्यर्थकामं कुरूणां ; बहुश्रुतं वाग्मिनं शीलवन्तम् ।
सूत राजा धृतराष्ट्रः कुरुभ्यो ; न सोऽस्मरद्विदुरं पुत्रकाम्यात् ॥ ०१२ ॥

मानघ्नस्य आत्मकामस्य चेर्ष्योः ; संरम्भिणश्चार्थधर्मातिगस्य ।
दुर्भाषिणो मन्युवशानुगस्य ; कामात्मनो दुर्हृदो भावनस्य ॥ ०१३ ॥

अनेयस्याश्रेयसो दीर्घमन्यो ;र्मित्रद्रुहः सञ्जय पापबुद्धेः ।
सुतस्य राजा धृतराष्ट्रः प्रियैषी ; प्रपश्यमानः प्रजहाद्धर्मकामौ ॥ ०१४ ॥

तदैव मे सञ्जय दीव्यतोऽभू ;न्नो चेत्कुरूनागतः स्यादभावः ।
काव्यां वाचं विदुरो भाषमाणो ; न विन्दते धृतराष्ट्रात्प्रशंसाम् ॥ ०१५ ॥

क्षत्तुर्यदा अन्ववर्तन्त बुद्धिं ; कृच्छ्रं कुरून्न तदाभ्याजगाम ।
यावत्प्रज्ञामन्ववर्तन्त तस्य ; तावत्तेषां राष्ट्रवृद्धिर्बभूव ॥ ०१६ ॥

तदर्थलुब्धस्य निबोध मेऽद्य ; ये मन्त्रिणो धार्तराष्ट्रस्य सूत ।
दुःशासनः शकुनिः सूतपुत्रो ; गावल्गणे पश्य संमोहमस्य ॥ ०१७ ॥

सोऽहं न पश्यामि परीक्षमाणः ; कथं स्वस्ति स्यात्कुरुसृञ्जयानाम् ।
आत्तैश्वर्यो धृतराष्ट्रः परेभ्यः ; प्रव्राजिते विदुरे दीर्घदृष्टौ ॥ ०१८ ॥

आशंसते वै धृतराष्ट्रः सपुत्रो ; महाराज्यमसपत्नं पृथिव्याम् ।
तस्मिञ्शमः केवलं नोपलभ्यो ; अत्यासन्नं मद्गतं मन्यतेऽर्थम् ॥ ०१९ ॥

यत्तत्कर्णो मन्यते पारणीयं ; युद्धे गृहीतायुधमर्जुनेन ।
आसंश्च युद्धानि पुरा महान्ति ; कथं कर्णो नाभवद्द्वीप एषाम् ॥ ०२० ॥

कर्णश्च जानाति सुयोधनश्च ; द्रोणश्च जानाति पितामहश्च ।
अन्ये च ये कुरवस्तत्र सन्ति ; यथार्जुनान्नास्त्यपरो धनुर्धरः ॥ ०२१ ॥

जानन्त्येते कुरवः सर्व एव ; ये चाप्यन्ये भूमिपालाः समेताः ।
दुर्योधनं चापराधे चरन्त ;मरिंदमे फल्गुनेऽविद्यमाने ॥ ०२२ ॥

तेनार्थबद्धं मन्यते धार्तराष्ट्रः ; शक्यं हर्तुं पाण्डवानां ममत्वम् ।
किरीटिना तालमात्रायुधेन ; तद्वेदिना संयुगं तत्र गत्वा ॥ ०२३ ॥

गाण्डीवविस्फारितशब्दमाजा ;वशृण्वाना धार्तराष्ट्रा ध्रियन्ते ।
क्रुद्धस्य चेद्भीमसेनस्य वेगा ;त्सुयोधनो मन्यते सिद्धमर्थम् ॥ ०२४ ॥

इन्द्रोऽप्येतन्नोत्सहेत्तात हर्तु ;मैश्वर्यं नो जीवति भीमसेने ।
धनञ्जये नकुले चैव सूत ; तथा वीरे सहदेवे मदीये ॥ ०२५ ॥

स चेदेतां प्रतिपद्येत बुद्धिं ; वृद्धो राजा सह पुत्रेण सूत ।
एवं रणे पाण्डवकोपदग्धा ; न नश्येयुः सञ्जय धार्तराष्ट्राः ॥ ०२६ ॥

जानासि त्वं क्लेशमस्मासु वृत्तं ; त्वां पूजयन्सञ्जयाहं क्षमेयम् ।
यच्चास्माकं कौरवैर्भूतपूर्वं ; या नो वृत्तिर्धार्तराष्ट्रे तदासीत् ॥ ०२७ ॥

अद्यापि तत्तत्र तथैव वर्ततां ; शान्तिं गमिष्यामि यथा त्वमात्थ ।
इन्द्रप्रस्थे भवतु ममैव राज्यं ; सुयोधनो यच्छतु भारताग्र्यः ॥ ०२८ ॥

---

# अध्याय ०२७

सञ्जय उवाच ॥

धर्मे नित्या पाण्डव ते विचेष्टा ; लोके श्रुता दृश्यते चापि पार्थ ।
महास्रावं जीवितं चाप्यनित्यं ; संपश्य त्वं पाण्डव मा विनीनशः ॥ ००१ ॥

न चेद्भागं कुरवोऽन्यत्र युद्धा ;त्प्रयच्छन्ते तुभ्यमजातशत्रो ।
भैक्षचर्यामन्धकवृष्णिराज्ये ; श्रेयो मन्ये न तु युद्धेन राज्यम् ॥ ००२ ॥

अल्पकालं जीवितं यन्मनुष्ये ; महास्रावं नित्यदुःखं चलं च ।
भूयश्च तद्वयसो नानुरूपं ; तस्मात्पापं पाण्डव मा प्रसार्षीः ॥ ००३ ॥

कामा मनुष्यं प्रसजन्त एव ; धर्मस्य ये विघ्नमूलं नरेन्द्र ।
पूर्वं नरस्तान्धृतिमान्विनिघ्न.ण्;ल्लोके प्रशंसां लभतेऽनवद्याम् ॥ ००४ ॥

निबन्धनी ह्यर्थतृष्णेह पार्थ ; तामेषतो बाध्यते धर्म एव ।
धर्मं तु यः प्रवृणीते स बुद्धः ; कामे गृद्धो हीयतेऽर्थानुरोधात् ॥ ००५ ॥

धर्मं कृत्वा कर्मणां तात मुख्यं ; महाप्रतापः सवितेव भाति ।
हानेन धर्मस्य महीमपीमां ; लब्ध्वा नरः सीदति पापबुद्धिः ॥ ००६ ॥

वेदोऽधीतश्चरितं ब्रह्मचर्यं ; यज्ञैरिष्टं ब्राह्मणेभ्यश्च दत्तम् ।
परं स्थानं मन्यमानेन भूय ; आत्मा दत्तो वर्षपूगं सुखेभ्यः ॥ ००७ ॥

सुखप्रिये सेवमानोऽतिवेलं ; योगाभ्यासे यो न करोति कर्म ।
वित्तक्षये हीनसुखोऽतिवेलं ; दुःखं शेते कामवेगप्रणुन्नः ॥ ००८ ॥

एवं पुनरर्थचर्याप्रसक्तो ; हित्वा धर्मं यः प्रकरोत्यधर्मम् ।
अश्रद्दधत्परलोकाय मूढो ; हित्वा देहं तप्यते प्रेत्य मन्दः ॥ ००९ ॥

न कर्मणां विप्रणाशोऽस्त्यमुत्र ; पुण्यानां वाप्यथ वा पापकानाम् ।
पूर्वं कर्तुर्गच्छति पुण्यपापं ; पश्चात्त्वेतदनुयात्येव कर्ता ॥ ०१० ॥

न्यायोपेतं ब्राह्मणेभ्यो यदन्नं ; श्रद्धापूतं गन्धरसोपपन्नम् ।
अन्वाहार्येषूत्तमदक्षिणेषु ; तथारूपं कर्म विख्यायते ते ॥ ०११ ॥

इह क्षेत्रे क्रियते पार्थ कार्यं ; न वै किञ्चिद्विद्यते प्रेत्य कार्यम् ।
कृतं त्वया पारलोक्यं च कार्यं ; पुण्यं महत्सद्भिरनुप्रशस्तम् ॥ ०१२ ॥

जहाति मृत्युं च जरां भयं च ; न क्षुत्पिपासे मनसश्चाप्रियाणि ।
न कर्तव्यं विद्यते तत्र किं चि ;दन्यत्र वै इन्द्रियप्रीणनार्थात्  ॥ ०१३  ॥

एवंरूपं कर्मफलं नरेन्द्र ; मात्रावता हृदयस्य प्रियेण ।
स क्रोधजं पाण्डव हर्षजं च ; लोकावुभौ मा प्रहासीश्चिराय  ॥ ०१४  ॥

अन्तं गत्वा कर्मणां या प्रशंसा ; सत्यं दमश्चार्जवमानृशंस्यम् ।
अश्वमेधो राजसूयस्तथेष्टः ; पापस्यान्तं कर्मणो मा पुनर्गाः  ॥ ०१५  ॥

तच्चेदेवं देशरूपेण पार्थाः ; करिष्यध्वं कर्म पापं चिराय ।
निवसध्वं वर्षपूगान्वनेषु ; दुःखं वासं पाण्डवा धर्महेतोः  ॥ ०१६  ॥

अप्रव्रज्ये योजयित्वा पुरस्ता ;दात्माधीनं यद्बलं ते तदासीत् ।
नित्यं पाञ्चालाः सचिवास्तवेमे ; जनार्दनो युयुधानश्च वीरः  ॥ ०१७  ॥

मत्स्यो राजा रुक्मरथः सपुत्रः ; प्रहारिभिः सह पुत्रैर्विराटः ।
राजानश्च ये विजिताः पुरस्ता ;त्त्वामेव ते संश्रयेयुः समस्ताः  ॥ ०१८  ॥

महासहायः प्रतपन्बलस्थः ; पुरस्कृतो वासुदेवार्जुनाभ्याम् ।
वरान्हनिष्यन्द्विषतो रङ्गमध्ये ; व्यनेष्यथा धार्तराष्ट्रस्य दर्पम्  ॥ ०१९  ॥

बलं कस्माद्वर्धयित्वा परस्य ; निजान्कस्मात्कर्शयित्वा सहायान् ।
निरुष्य कस्माद्वर्षपूगान्वनेषु ; युयुत्ससे पाण्डव हीनकालम्  ॥ ०२०  ॥

अप्रज्ञो वा पाण्डव युध्यमानो ; अधर्मज्ञो वा भूतिपथाद्व्यपैति ।
प्रज्ञावान्वा बुध्यमानोऽपि धर्मं ; संरम्भाद्वा सोऽपि भूतेरपैति  ॥ ०२१  ॥

नाधर्मे ते धीयते पार्थ बुद्धि ;र्न संरम्भात्कर्म चकर्थ पापम् ।
अद्धा किं तत्कारणं यस्य हेतोः ; प्रज्ञाविरुद्धं कर्म चिकीर्षसीदम्  ॥ ०२२  ॥

अव्याधिजं कटुकं शीर्षरोगं ; यशोमुषं पापफलोदयं च ।

सतां पेयं यन्न पिबन्त्यसन्तो ; मन्युं महाराज पिब प्रशाम्य ॥ ०२३ ॥

पापानुबन्धं को नु तं कामयेत ; क्षमैव ते ज्यायसी नोत भोगाः ।
यत्र भीष्मः शांतनवो हतः स्या ;द्यत्र द्रोणः सहपुत्रो हतः स्यात् ॥ ०२४ ॥

कृपः शल्यः सौमदत्तिर्विकर्णो ; विविंशतिः कर्णदुर्योधनौ च ।
एतान्हत्वा कीदृशं तत्सुखं स्या ;द्यद्विन्देथास्तदनुब्रूहि पार्थ ॥ ०२५ ॥

लब्ध्वापीमां पृथिवीं सागरान्तां ; जरामृत्यू नैव हि त्वं प्रजह्याः ।
प्रियाप्रिये सुखदुःखे च राज ;न्नेवं विद्वान्नैव युद्धं कुरुष्व ॥ ०२६ ॥

अमात्यानां यदि कामस्य हेतो ;रेवंयुक्तं कर्म चिकीर्षसि त्वम् ।
अपाक्रमेः संप्रदाय स्वमेभ्यो ; मा गास्त्वं वै देवयानात्पथोऽद्य ॥ ०२७ ॥

---

# अध्याय ०२८

युधिष्ठिर उवाच ॥

असंशयं सञ्जय सत्यमेत ;द्धर्मो वरः कर्मणां यत्त्वमात्थ ।
ज्ञात्वा तु मां सञ्जय गर्हयेस्त्वं ; यदि धर्मं यद्यधर्मं चरामि ॥ ००१ ॥

यत्राधर्मो धर्मरूपाणि बिभ्र ;द्धर्मः कृत्स्नो दृश्यतेऽधर्मरूपः ।
तथा धर्मो धारयन्धर्मरूपं ; विद्वांसस्तं संप्रपश्यन्ति बुद्ध्या ॥ ००२ ॥

एवमेतावापदि लिङ्गमेत ;द्धर्माधर्मौ वृत्तिनित्यौ भजेताम् ।
आद्यं लिङ्गं यस्य तस्य प्रमाण ;मापद्धर्मं सञ्जय तं निबोध ॥ ००३ ॥

लुप्तायां तु प्रकृतौ येन कर्म ; निष्पादयेत्तत्परीप्सेद्विहीनः ।
प्रकृतिस्थश्चापदि वर्तमान ; उभौ गर्ह्यौ भवतः सञ्जयैतौ ॥ ००४ ॥

अविलोपमिच्छतां ब्राह्मणानां ; प्रायश्चित्तं विहितं यद्विधात्रा ।
आपद्यथाकर्मसु वर्तमाना ;न्विकर्मस्थान्सञ्जय गर्हयेत ॥ ००५ ॥

मनीषिणां तत्त्वविच्छेदनाय ; विधीयते सत्सु वृत्तिः सदैव ।
अब्राह्मणाः सन्ति तु ये न वैद्याः ; सर्वोच्छेदं साधु मन्येत तेभ्यः ॥ ००६ ॥

तदर्था नः पितरो ये च पूर्वे ; पितामहा ये च तेभ्यः परेऽन्ये ।
प्रज्ञैषिणो ये च हि कर्म चक्रु ;र्नास्त्यन्ततो नास्ति नास्तीति मन्ये ॥ ००७ ॥

यत्किञ्चिदेतद्वित्तमस्यां पृथिव्यां ; यद्देवानां त्रिदशानां परत्र ।
प्राजापत्यं त्रिदिवं ब्रह्मलोकं ; नाधर्मतः सञ्जय कामये तत् ॥ ००८ ॥

धर्मेश्वरः कुशलो नीतिमांश्चा ;प्युपासिता ब्राह्मणानां मनीषी ।
नानाविधांश्चैव महाबलांश्च ; राजन्यभोजाननुशास्ति कृष्णः ॥ ००९ ॥

यदि ह्यहं विसृजन्स्यामगर्ह्यो ; युध्यमानो यदि जह्यां स्वधर्मम् ।
महायशाः केशवस्तद्ब्रवीतु ; वासुदेवस्तूभयोरर्थकामः ॥ ०१० ॥

शैनेया हि चैत्रकाश्चान्धकाश्च ; वार्ष्णेयभोजाः कौकुराः सृञ्जयाश्च ।
उपासीना वासुदेवस्य बुद्धिं ; निगृह्य शत्रून्सुहृदो नन्दयन्ति ॥ ०११ ॥

वृष्ण्यन्धका ह्युग्रसेनादयो वै ; कृष्णप्रणीताः सर्व एवेन्द्रकल्पाः ।
मनस्विनः सत्यपराक्रमाश्च ; महाबला यादवा भोगवन्तः ॥ ०१२ ॥

काश्यो बभ्रुः श्रियमुत्तमां गतो ; लब्ध्वा कृष्णं भ्रातरमीशितारम् ।
यस्मै कामान्वर्षति वासुदेवो ; ग्रीष्मात्यये मेघ इव प्रजाभ्यः ॥ ०१३ ॥

ईदृशोऽयं केशवस्तात भूयो ; विद्मो ह्येनं कर्मणां निश्चयज्ञम् ।

प्रियश्च नः साधुतमश्च कृष्णो ; नातिक्रमे वचनं केशवस्य ॥ ०१४ ॥

---

# अध्याय ०२९

वासुदेव उवाच ॥

अविनाशं सञ्जय पाण्डवाना ;मिच्छाम्यहं भूतिमेषां प्रियं च ।
तथा राज्ञो धृतराष्ट्रस्य सूत ; सदाशंसे बहुपुत्रस्य वृद्धिम् ॥ ००१ ॥

कामो हि मे सञ्जय नित्यमेव ; नान्यद्ब्रूयां तान्प्रति शाम्यतेति ।
राज्ञश्च हि प्रियमेतच्छृणोमि ; मन्ये चैतत्पाण्डवानां समर्थम् ॥ ००२ ॥

सुदुष्करश्चात्र शमो हि नूनं ; प्रदर्शितः सञ्जय पाण्डवेन ।
यस्मिन्गृद्धो धृतराष्ट्रः सपुत्रः ; कस्मादेषां कलहो नात्र मूर्च्छेत् ॥ ००३ ॥

तत्त्वं धर्मं विचरन्सञ्जयेह ; मत्तश्च जानासि युधिष्ठिराच्च ।
अथो कस्मात्सञ्जय पाण्डवस्य ; उत्साहिनः पूरयतः स्वकर्म ॥ ००४ ॥

यथाख्यातमावसतः कुटुम्बं ; पुराकल्पात्साधु विलोपमात्थ ॥ ००४ ॥

अस्मिन्विधौ वर्तमाने यथाव ;दुच्चावचा मतयो ब्राह्मणानाम् ।
कर्मणाहुः सिद्धिमेके परत्र ; हित्वा कर्म विद्यया सिद्धिमेके ॥ ००५ ॥

नाभुञ्जानो भक्ष्यभोज्यस्य तृप्ये ;द्विद्वानपीह विदितं ब्राह्मणानाम् ॥ ००५ ॥

या वै विद्याः साधयन्तीह कर्म ; तासां फलं विद्यते नेतरासाम् ।
तत्रेह वै दृष्टफलं तु कर्म ; पीत्वोदकं शाम्यति तृष्णयार्तः ॥ ००६ ॥

सोऽयं विधिर्विहितः कर्मणैव ; तद्वर्तते सञ्जय तत्र कर्म ।
तत्र योऽन्यत्कर्मणः साधु मन्ये ;न्मोघं तस्य लपितं दुर्बलस्य ॥ ००७ ॥

कर्मणामी भान्ति देवाः परत्र ; कर्मणैवेह प्लवते मातरिश्वा ।
अहोरात्रे विदधत्कर्मणैव ; अतन्द्रितो नित्यमुदेति सूर्यः ॥ ००८ ॥

मासार्धमासानथ नक्षत्रयोगा ;नतन्द्रितश्चन्द्रमा अभ्युपैति ।
अतन्द्रितो दहते जातवेदाः ; समिध्यमानः कर्म कुर्वन्प्रजाभ्यः ॥ ००९ ॥

अतन्द्रिता भारमिमं महान्तं ; बिभर्ति देवी पृथिवी बलेन ।
अतन्द्रिताः शीघ्रमपो वहन्ति ; संतर्पयन्त्यः सर्वभूतानि नद्यः ॥ ०१० ॥

अतन्द्रितो वर्षति भूरितेजाः ; संनादयन्नन्तरिक्षं दिवं च ।
अतन्द्रितो ब्रह्मचर्यं चचार ; श्रेष्ठत्वमिच्छन्बलभिद्देवतानाम् ॥ ०११ ॥

हित्वा सुखं मनसश्च प्रियाणि ; तेन शक्रः कर्मणा श्रैष्ठ्यमाप ।
सत्यं धर्मं पालयन्नप्रमत्तो ; दमं तितिक्षां समतां प्रियं च ॥ ०१२ ॥

एतानि सर्वाण्युपसेवमानो ; देवराज्यं मघवान्प्राप मुख्यम् ॥ ०१२ ॥

बृहस्पतिर्ब्रह्मचर्यं चचार ; समाहितः संशितात्मा यथावत् ।
हित्वा सुखं प्रतिरुध्येन्द्रियाणि ; तेन देवानामगमद्गौरवं सः ॥ ०१३ ॥

नक्षत्राणि कर्मणामुत्र भान्ति ; रुद्रादित्या वसवोऽथापि विश्वे ।
यमो राजा वैश्रवणः कुबेरो ; गन्धर्वयक्षाप्सरसश्च शुभ्राः ॥ ०१४ ॥

ब्रह्मचर्यं वेदविद्याः क्रियाश्च ; निषेवमाणा मुनयोऽमुत्र भान्ति ॥ ०१४ ॥

जानन्निमं सर्वलोकस्य धर्मं ; ब्राह्मणानां क्षत्रियाणां विशां च ।
स कस्मात्त्वं जानतां ज्ञानवान्स ;न्व्यायच्छसे सञ्जय कौरवार्थे ॥ ०१५ ॥

आम्नायेषु नित्यसंयोगमस्य ; तथाश्वमेधे राजसूये च विद्धि ।
संयुज्यते धनुषा वर्मणा च ; हस्तत्राणै रथशस्त्रैश्च भूयः ॥ ०१६ ॥

ते चेदिमे कौरवाणामुपाय ;मधिगच्छेयुरवधेनैव पार्थाः ।
धर्मत्राणं पुण्यमेषां कृतं स्या ;दार्ये वृत्ते भीमसेनं निगृह्य ॥ ०१७ ॥

ते चेत्पित्र्ये कर्मणि वर्तमाना ; आपद्येरन्दिष्टवशेन मृत्युम् ।
यथाशक्त्या पूरयन्तः स्वकर्म ; तदप्येषां निधनं स्यात्प्रशस्तम् ॥ ०१८ ॥

उताहो त्वं मन्यसे सर्वमेव ; राज्ञां युद्धे वर्तते धर्मतन्त्रम् ।
अयुद्धे वा वर्तते धर्मतन्त्रं ; तथैव ते वाचमिमां श‍ृणोमि ॥ ०१९ ॥

चातुर्वर्ण्यस्य प्रथमं विभाग ;मवेक्ष्य त्वं सञ्जय स्वं च कर्म ।
निशम्याथो पाण्डवानां स्वकर्म ; प्रशंस वा निन्द वा या मतिस्ते ॥ ०२० ॥

अधीयीत ब्राह्मणोऽथो यजेत ; दद्यादियात्तीर्थमुख्यानि चैव ।
अध्यापयेद्याजयेच्चापि याज्या ;न्प्रतिग्रहान्वा विदितान्प्रतीच्छेत् ॥ ०२१ ॥

तथा राजन्यो रक्षणं वै प्रजानां ; कृत्वा धर्मेणाप्रमत्तोऽथ दत्त्वा ।
यज्ञैरिष्ट्वा सर्ववेदानधीत्य ; दारान्कृत्वा पुण्यकृदावसेद्गृहान् ॥ ०२२ ॥

वैश्योऽधीत्य कृषिगोरक्षपण्यै ;र्वित्तं चिन्वन्पालयन्नप्रमत्तः ।
प्रियं कुर्वन्ब्राह्मणक्षत्रियाणां ; धर्मशीलः पुण्यकृदावसेद्गृहान् ॥ ०२३ ॥

परिचर्या वन्दनं ब्राह्मणानां ; नाधीयीत प्रतिषिद्धोऽस्य यज्ञः ।
नित्योत्थितो भूतयेऽतन्द्रितः स्या ;देष स्मृतः शूद्रधर्मः पुराणः ॥ ०२४ ॥

एतान्राजा पालयन्नप्रमत्तो ; नियोजयन्सर्ववर्णान्स्वधर्मे ।
अकामात्मा समवृत्तिः प्रजासु ; नाधार्मिकाननुरुध्येत कामान् ॥ ०२५ ॥

श्रेयांस्तस्माद्यदि विद्येत कश्चि ;दभिज्ञातः सर्वधर्मोपपन्नः ।
स तं दुष्टमनुशिष्यात्प्रजान ;न्न चेद्गृध्येदिति तस्मिन्न साधु ॥ ०२६ ॥

यदा गृध्येत्परभूमिं नृशंसो ; विधिप्रकोपाद्बलमाददानः ।
ततो राज्ञां भविता युद्धमेत ;त्तत्र जातं वर्म शस्त्रं धनुश्च ॥ ०२७ ॥

इन्द्रेणेदं दस्युवधाय कर्म ; उत्पादितं वर्म शस्त्रं धनुश्च ॥ ०२७ ॥

स्तेनो हरेद्यत्र धनं ह्यदृष्टः ; प्रसह्य वा यत्र हरेत दृष्टः ।
उभौ गर्ह्यौ भवतः सञ्जयैतौ ; किं वै पृथक्त्वं धृतराष्ट्रस्य पुत्रे ॥ ०२८ ॥

योऽयं लोभान्मन्यते धर्ममेतं ; यमिच्छते मन्युवशानुगामी ॥ ०२८ ॥

भागः पुनः पाण्डवानां निविष्ट ;स्तं नोऽकस्मादाददीरन्परे वै ।
अस्मिन्पदे युध्यतां नो वधोऽपि ; श्लाघ्यः पित्र्यः परराज्याद्विशिष्टः ॥ ०२९ ॥

एतान्धर्मान्कौरवाणां पुराणा ;नाचक्षीथाः सञ्जय राज्यमध्ये ॥ ०२९ ॥

ये ते मन्दा मृत्युवशाभिपन्नाः ; समानीता धार्तराष्ट्रेण मूढाः ।
इदं पुनः कर्म पापीय एव ; सभामध्ये पश्य वृत्तं कुरूणाम् ॥ ०३० ॥

प्रियां भार्यां द्रौपदीं पाण्डवानां ; यशस्विनीं शीलवृत्तोपपन्नाम् ।
यदुपेक्षन्त कुरवो भीष्ममुख्याः ; कामानुगेनोपरुद्धां रुदन्तीम् ॥ ०३१ ॥

तं चेत्तदा ते सकुमारवृद्धा ; अवारयिष्यन्कुरवः समेताः ।
मम प्रियं धृतराष्ट्रोऽकरिष्य ;त्पुत्राणां च कृतमस्याभविष्यत् ॥ ०३२ ॥

दुःशासनः प्रातिलोम्यान्निनाय ; सभामध्ये श्वशुराणां च कृष्णाम् ।
सा तत्र नीता करुणान्यवोच ;न्नान्यं क्षत्तुर्नाथमदृष्ट कञ्चित् ॥ ०३३ ॥

कार्पण्यादेव सहितास्तत्र राज्ञो ; नाशक्नुवन्प्रतिवक्तुं सभायाम् ।

एकः क्षत्ता धर्म्यमर्थं ब्रुवाणो ; धर्मं बुद्ध्वा प्रत्युवाचाल्पबुद्धिम् ॥ ०३४ ॥

अनुक्त्वा त्वं धर्ममेवं सभाया ;मथेच्छसे पाण्डवस्योपदेष्टुम् ।
कृष्णा त्वेतत्कर्म चकार शुद्धं ; सुदुष्करं तद्धि सभां समेत्य ॥ ०३५ ॥

येन कृच्छ्रात्पाण्डवानुज्जहार ; तथात्मानं नौरिव सागरौघात् ॥ ०३५ ॥

यत्राब्रवीत्सूतपुत्रः सभायां ; कृष्णां स्थितां श्वशुराणां समीपे ।
न ते गतिर्विद्यते याज्ञसेनि ; प्रपद्येदानीं धार्तराष्ट्रस्य वेश्म ॥ ०३६ ॥

पराजितास्ते पतयो न सन्ति ; पतिं चान्यं भामिनि त्वं वृणीष्व ॥ ०३६ ॥

यो बीभत्सोर्हृदये प्रौढ आसी ;दस्थिप्रच्छिन्मर्मघाती सुघोरः ।
कर्णाच्छरो वाङ्मयस्तिग्मतेजाः ; प्रतिष्ठितो हृदये फल्गुनस्य ॥ ०३७ ॥

कृष्णाजिनानि परिधित्समाना ;न्दुःशासनः कटुकान्यभ्यभाषत् ।
एते सर्वे षण्ढतिला विनष्टाः ; क्षयं गता नरकं दीर्घकालम् ॥ ०३८ ॥

गान्धारराजः शकुनिर्निकृत्या ; यदब्रवीद्द्यूतकाले स पार्थान् ।
पराजितो नकुलः किं तवास्ति ; कृष्णया त्वं दीव्य वै याज्ञसेन्या ॥ ०३९ ॥

जानासि त्वं सञ्जय सर्वमेत ;द्द्यूतेऽवाच्यं वाक्यमेवं यथोक्तम् ।
स्वयं त्वहं प्रार्थये तत्र गन्तुं ; समाधातुं कार्यमेतद्विपन्नम् ॥ ०४० ॥

अहापयित्वा यदि पाण्डवार्थं ; शमं कुरूणामथ चेच्चरेयम् ।
पुण्यं च मे स्याच्चरितं महोदयं ; मुच्येरंश्च कुरवो मृत्युपाशात् ॥ ०४१ ॥

अपि वाचं भाषमाणस्य काव्यां ; धर्मारामामर्थवतीमहिंस्राम् ।
अवेक्षेरन्धार्तराष्ट्राः समक्षं ; मां च प्राप्तं कुरवः पूजयेयुः ॥ ०४२ ॥

अतोऽन्यथा रथिना फल्गुनेन ; भीमेन चैवाहवदंशितेन ।

परासिक्तान्धार्तराष्ट्रांस्तु विद्धि ; प्रदह्यमानान्कर्मणा स्वेन मन्दान् ॥ ०४३ ॥

पराजितान्पाण्डवेयांस्तु वाचो ; रौद्ररूपा भाषते धार्तराष्ट्रः ।
गदाहस्तो भीमसेनोऽप्रमत्तो ; दुर्योधनं स्मारयित्वा हि काले ॥ ०४४ ॥

सुयोधनो मन्युमयो महाद्रुमः ; स्कन्धः कर्णः शकुनिस्तस्य शाखाः ।
दुःशासनः पुष्पफले समृद्धे ; मूलं राजा धृतराष्ट्रोऽमनीषी ॥ ०४५ ॥

युधिष्ठिरो धर्ममयो महाद्रुमः ; स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखाः ।
माद्रीपुत्रौ पुष्पफले समृद्धे ; मूलं त्वहं ब्रह्म च ब्राह्मणाश्च ॥ ०४६ ॥

वनं राजा धृतराष्ट्रः सपुत्रो ; व्याघ्रा वने सञ्जय पाण्डवेयाः ।
मा वनं छिन्धि सव्याघ्रं मा व्याघ्रान्नीनशो वनात् ॥ ०४७ ॥

निर्वनो वध्यते व्याघ्रो निर्व्याघ्रं छिद्यते वनम् ।
तस्माद्व्याघ्रो वनं रक्षेद्वनं व्याघ्रं च पालयेत् ॥ ०४८ ॥

लताधर्मा धार्तराष्ट्राः शालाः सञ्जय पाण्डवाः ।
न लता वर्धते जातु अनाश्रित्य महाद्रुमम् ॥ ०४९ ॥

स्थिताः शुश्रूषितुं पार्थाः स्थिता योद्धुमरिंदमाः ।
यत्कृत्यं धृतराष्ट्रस्य तत्करोतु नराधिपः ॥ ०५० ॥

स्थिताः शमे महात्मानः पाण्डवा धर्मचारिणः ।
योधाः समृद्धास्तद्विद्वन्नाचक्षीथा यथातथम् ॥ ०५१ ॥

# अध्याय ०३०

सञ्जय उवाच ॥

आमन्त्रये त्वा नरदेवदेव ; गच्छाम्यहं पाण्डव स्वस्ति तेऽस्तु ।
कच्चिन्न वाचा वृजिनं हि किं चि ;दुच्चारितं मे मनसोऽभिषङ्गात् ॥ ००१ ॥

जनार्दनं भीमसेनार्जुनौ च ; माद्रीसुतौ सात्यकिं चेकितानम् ।
आमन्त्र्य गच्छामि शिवं सुखं वः ; सौम्येन मां पश्यत चक्षुषा नृपाः ॥ ००२ ॥

युधिष्ठिर उवाच ॥

अनुज्ञातः सञ्जय स्वस्ति गच्छ ; न नोऽकार्षीरप्रियं जातु किञ्चित् ।
विद्मश्च त्वा ते च वयं च सर्वे ; शुद्धात्मानं मध्यगतं सभास्थम् ॥ ००३ ॥

आप्तो दूतः सञ्जय सुप्रियोऽसि ; कल्याणवाक्शीलवान्दृष्टिमांश्च ।
न मुह्येस्त्वं सञ्जय जातु मत्या ; न च क्रुध्येरुच्यमानोऽपि तथ्यम् ॥ ००४ ॥

न मर्मगां जातु वक्तासि रूक्षां ; नोपस्तुतिं कटुकां नोत शुक्ताम् ।
धर्मारामामर्थवतीमहिंस्रा ;मेतां वाचं तव जानामि सूत ॥ ००५ ॥

त्वमेव नः प्रियतमोऽसि दूत ; इहागच्छेद्विदुरो वा द्वितीयः ।
अभीक्ष्णदृष्टोऽसि पुरा हि नस्त्वं ; धनञ्जयस्यात्मसमः सखासि ॥ ००६ ॥

इतो गत्वा सञ्जय क्षिप्रमेव ; उपातिष्ठेथा ब्राह्मणान्ये तदर्हाः ।
विशुद्धवीर्यांश्चरणोपपन्ना ;न्कुले जातान्सर्वधर्मोपपन्नान् ॥ ००७ ॥

स्वाध्यायिनो ब्राह्मणा भिक्षवश्च ; तपस्विनो ये च नित्या वनेषु ।
अभिवाद्या वै मद्वचनेन वृद्धा ;स्तथेतरेषां कुशलं वदेथाः ॥ ००८ ॥

पुरोहितं धृतराष्ट्रस्य राज्ञ ; आचार्याश्च ऋत्विजो ये च तस्य ।
तैश्च त्वं तात सहितैर्यथार्हं ; सङ्गच्छेथाः कुशलेनैव सूत ॥ ००९ ॥

आचार्य इष्टोऽनपगो विधेयो ; वेदानीप्सन्ब्रह्मचर्यं चचार ।
योऽस्त्रं चतुष्पात्पुनरेव चक्रे ; द्रोणः प्रसन्नोऽभिवाद्यो यथार्हम् ॥ ०१० ॥

अधीतविद्यश्चरणोपपन्नो ; योऽस्त्रं चतुष्पात्पुनरेव चक्रे ।
गन्धर्वपुत्रप्रतिमं तरस्विनं ; तमश्वत्थामानं कुशलं स्म पृच्छेः ॥ ०११ ॥

शारद्वतस्यावसथं स्म गत्वा ; महारथस्यास्त्रविदां वरस्य ।
त्वं मामभीक्ष्णं परिकीर्तयन्वै ; कृपस्य पादौ सञ्जय पाणिना स्पृशेः ॥ ०१२ ॥

यस्मिञ्शौर्यमानृशंस्यं तपश्च ; प्रज्ञा शीलं श्रुतिसत्त्वे धृतिश्च ।
पादौ गृहीत्वा कुरुसत्तमस्य ; भीष्मस्य मां तत्र निवेदयेथाः ॥ ०१३ ॥

प्रज्ञाचक्षुर्यः प्रणेता कुरूणां ; बहुश्रुतो वृद्धसेवी मनीषी ।
तस्मै राज्ञे स्थविरायाभिवाद्य ; आचक्षीथाः सञ्जय मामरोगम् ॥ ०१४ ॥

ज्येष्ठः पुत्रो धृतराष्ट्रस्य मन्दो ; मूर्खः शठः सञ्जय पापशीलः ।
प्रशास्ता वै पृथिवी येन सर्वा ; सुयोधनं कुशलं तात पृच्छेः ॥ ०१५ ॥

भ्राता कनीयानपि तस्य मन्द ;स्तथाशीलः सञ्जय सोऽपि शश्वत् ।
महेष्वासः शूरतमः कुरूणां ; दुःशासनं कुशलं तात पृच्छेः ॥ ०१६ ॥

वृन्दारकं कविमर्थेष्वमूढं ; महाप्रज्ञं सर्वधर्मोपपन्नम् ।
न तस्य युद्धं रोचते वै कदा चि ;द्वैश्यापुत्रं कुशलं तात पृच्छेः ॥ ०१७ ॥

निकर्तने देवने योऽद्वितीय ;श्छन्नोपधः साधुदेवी मताक्षः ।
यो दुर्जयो देवितव्येन संख्ये ; स चित्रसेनः कुशलं तात वाच्यः ॥ ०१८ ॥

यस्य कामो वर्तते नित्यमेव ; नान्यः शमाद्भारतानामिति स्म ।

स बाह्लिकानामृषभो मनस्वी ; पुरा यथा माभिवदेत्प्रसन्नः ॥ ०१९ ॥

गुणैरनेकैः प्रवरैश्च युक्तो ; विज्ञानवान्नैव च निष्ठुरो यः ।
स्नेहादमर्षं सहते सदैव ; स सोमदत्तः पूजनीयो मतो मे ॥ ०२० ॥

अर्हत्तमः कुरुषु सौमदत्तिः ; स नो भ्राता सञ्जय मत्सखा च ।
महेष्वासो रथिनामुत्तमो यः ; सहामात्यः कुशलं तस्य पृच्छेः ॥ ०२१ ॥

ये चैवान्ये कुरुमुख्या युवानः ; पुत्राः पौत्रा भ्रातरश्चैव ये नः ।
यं यमेषां येन येनाभिगच्छे ;रनामयं मद्वचनेन वाच्यः ॥ ०२२ ॥

ये राजानः पाण्डवायोधनाय ; समानीता धार्तराष्ट्रेण केचित् ।
वसातयः शाल्वकाः केकयाश्च ; तथाम्बष्ठा ये त्रिगर्ताश्च मुख्याः ॥ ०२३ ॥

प्राच्योदीच्या दाक्षिणात्याश्च शूरा ;स्तथा प्रतीच्याः पार्वतीयाश्च सर्वे ।
अनृशंसाः शीलवृत्तोपपन्ना ;स्तेषां सर्वेषां कुशलं तात पृच्छेः ॥ ०२४ ॥

हस्त्यारोहा रथिनः सादिनश्च ; पदातयश्चार्यसंघा महान्तः ।
आख्याय मां कुशलिनं स्म तेषा ;मनामयं परिपृच्छेः समग्रान् ॥ ०२५ ॥

तथा राज्ञो ह्यर्थयुक्तानमात्या ;न्दौवारिकान्ये च सेनां नयन्ति ।
आयव्ययं ये गणयन्ति युक्ता ; अर्थांश्च ये महतश्चिन्तयन्ति ॥ ०२६ ॥

गान्धारराजः शकुनिः पार्वतीयो ; निकर्तने योऽद्वितीयोऽक्षदेवी ।
मानं कुर्वन्धार्तराष्ट्रस्य सूत ; मिथ्याबुद्धेः कुशलं तात पृच्छेः ॥ ०२७ ॥

यः पाण्डवानेकरथेन वीरः ; समुत्सहत्यप्रधृष्यान्विजेतुम् ।
यो मुह्यतां मोहयिताद्वितीयो ; वैकर्तनं कुशलं तात पृच्छेः ॥ ०२८ ॥

स एव भक्तः स गुरुः स भृत्यः ; स वै पिता स च माता सुहृच्च ।
अगाधबुद्धिर्विदुरो दीर्घदर्शी ; स नो मन्त्री कुशलं तात पृच्छेः ॥ ०२९ ॥

वृद्धाः स्त्रियो याश्च गुणोपपन्ना ; या ज्ञायन्ते सञ्जय मातरस्ताः ।
ताभिः सर्वाभिः सहिताभिः समेत्य ; स्त्रीभिर्वृद्धाभिरभिवादं वदेथाः ॥ ०३० ॥

कच्चित्पुत्रा जीवपुत्राः सुसम्य ;ग्वर्तन्ते वो वृत्तिमनृशंसरूपाम् ।
इति स्मोक्त्वा सञ्जय ब्रूहि पश्चा ;दजातशत्रुः कुशली सपुत्रः ॥ ०३१ ॥

या नो भार्याः सञ्जय वेत्थ तत्र ; तासां सर्वासां कुशलं तात पृच्छेः ।
सुसङ्गुप्ताः सुरभयोऽनवद्याः ; कच्चिद्गृहानावसथाप्रमत्ताः ॥ ०३२ ॥

कच्चिद्वृत्तिं श्वशुरेषु भद्राः ; कल्याणीं वर्तध्वमनृशंसरूपाम् ।
यथा च वः स्युः पतयोऽनुकूला ;स्तथा वृत्तिमात्मनः स्थापयध्वम् ॥ ०३३ ॥

या नः स्नुषाः सञ्जय वेत्थ तत्र ; प्राप्ताः कुलेभ्यश्च गुणोपपन्नाः ।
प्रजावत्यो ब्रूहि समेत्य ताश्च ; युधिष्ठिरो वोऽभ्यवदत्प्रसन्नः ॥ ०३४ ॥

कन्याः स्वजेथाः सदनेषु सञ्जय ; अनामयं मद्वचनेन पृष्ट्वा ।
कल्याणा वः सन्तु पतयोऽनुकूला ; यूयं पतीनां भवतानुकूलाः ॥ ०३५ ॥

अलङ्कृता वस्त्रवत्यः सुगन्धा ; अबीभत्साः सुखिता भोगवत्यः ।
लघु यासां दर्शनं वाक्च लघ्वी ; वेशस्त्रियः कुशलं तात पृच्छेः ॥ ०३६ ॥

दासीपुत्रा ये च दासाः कुरूणां ; तदाश्रया बहवः कुब्जखञ्जाः ।
आख्याय मां कुशलिनं स्म तेभ्यो ; अनामयं परिपृच्छेर्जघन्यम् ॥ ०३७ ॥

कच्चिद्वृत्तिर्वर्तते वै पुराणी ; कच्चिद्भोगान्धार्तराष्ट्रो ददाति ।
अङ्गहीनान्कृपणान्वामनांश्च ; आनृशंस्याद्धृतराष्ट्रो बिभर्ति ॥ ०३८ ॥

अन्धाश्च सर्वे स्थविरास्तथैव ; हस्ताजीवा बहवो येऽत्र सन्ति ।
आख्याय मां कुशलिनं स्म तेषा ;मनामयं परिपृच्छेर्जघन्यम् ॥ ०३९ ॥

मा भैष्ट दुःखेन कुजीवितेन ; नूनं कृतं परलोकेषु पापम् ।
निगृह्य शत्रून्सुहृदोऽनुगृह्य ; वासोभिरन्नेन च वो भरिष्ये ॥ ०४० ॥

सन्त्येव मे ब्राह्मणेभ्यः कृतानि ; भावीन्यथो नो बत वर्तयन्ति ।
पश्याम्यहं युक्तरूपांस्तथैव ; तामेव सिद्धिं श्रावयेथा नृपं तम् ॥ ०४१ ॥

ये चानाथा दुर्बलाः सर्वकाल ;मात्मन्येव प्रयतन्तेऽथ मूढाः ।
तांश्चापि त्वं कृपणान्सर्वथैव ; अस्मद्वाक्यात्कुशलं तात पृच्छेः ॥ ०४२ ॥

ये चाप्यन्ये संश्रिता धार्तराष्ट्रा ;न्नानादिग्भ्योऽभ्यागताः सूतपुत्र ।
दृष्ट्वा तांश्चैवार्हतश्चापि सर्वा ;न्संपृच्छेथाः कुशलं चाव्ययं च ॥ ०४३ ॥

एवं सर्वानागताभ्यागतांश्च ; राज्ञो दूतान्सर्वदिग्भ्योऽभ्युपेतान् ।
पृष्ट्वा सर्वान्कुशलं तांश्च सूत ; पश्चादहं कुशली तेषु वाच्यः ॥ ०४४ ॥

न हीदृशाः सन्त्यपरे पृथिव्यां ; ये योधका धार्तराष्ट्रेण लब्धाः ।
धर्मस्तु नित्यो मम धर्म एव ; महाबलः शत्रुनिबर्हणाय ॥ ०४५ ॥

इदं पुनर्वचनं धार्तराष्ट्रं ; सुयोधनं सञ्जय श्रावयेथाः ।
यस्ते शरीरे हृदयं दुनोति ; कामः कुरूनसपत्नोऽनुशिष्याम् ॥ ०४६ ॥

न विद्यते युक्तिरेतस्य का चि ;न्नैवंविधाः स्याम यथा प्रियं ते ।
ददस्व वा शक्रपुरं ममैव ; युध्यस्व वा भारतमुख्य वीर ॥ ०४७ ॥

---

# अध्याय ०३१

युधिष्ठिर उवाच ॥

उत सन्तमसन्तं च बालं वृद्धं च सञ्जय ।
उताबलं बलीयांसं धाता प्रकुरुते वशे ॥ ००१ ॥

उत बालाय पाण्डित्यं पण्डितायोत बालताम् ।
ददाति सर्वमीशानः पुरस्ताच्छुक्रमुच्चरन् ॥ ००२ ॥

अलं विज्ञापनाय स्यादाचक्षीथा यथातथम् ।
अथो मन्त्रं मन्त्रयित्वा अन्योन्येनातिहृष्टवत् ॥ ००३ ॥

गावल्गणे कुरून्गत्वा धृतराष्ट्रं महाबलम् ।
अभिवाद्योपसङ्गृह्य ततः पृच्छेरनामयम् ॥ ००४ ॥

ब्रूयाश्चैनं त्वमासीनं कुरुभिः परिवारितम् ।
तवैव राजन्वीर्येण सुखं जीवन्ति पाण्डवाः ॥ ००५ ॥

तव प्रसादाद्बालास्ते प्राप्ता राज्यमरिंदम ।
राज्ये तान्स्थापयित्वाग्रे नोपेक्षीर्विनशिष्यतः ॥ ००६ ॥

सर्वमप्येतदेकस्य नालं सञ्जय कस्यचित् ।
तात संहत्य जीवामो मा द्विषद्भ्यो वशं गमः ॥ ००७ ॥

तथा भीष्मं शांतनवं भारतानां पितामहम् ।
शिरसाभिवदेथास्त्वं मम नाम प्रकीर्तयन् ॥ ००८ ॥

अभिवाद्य च वक्तव्यस्ततोऽस्माकं पितामहः ।
भवता शंतनोर्वंशो निमग्नः पुनरुद्धृतः ॥ ००९ ॥

स त्वं कुरु तथा तात स्वमतेन पितामह ।
यथा जीवन्ति ते पौत्राः प्रीतिमन्तः परस्परम् ॥ ०१० ॥

तथैव विदुरं ब्रूयाः कुरूणां मन्त्रधारिणम् ।
अयुद्धं सौम्य भाषस्व हितकामो युधिष्ठिरः ॥ ०११ ॥

अथो सुयोधनं ब्रूया राजपुत्रममर्षणम् ।
मध्ये कुरूणामासीनमनुनीय पुनः पुनः ॥ ०१२ ॥

अपश्यन्मामुपेक्षन्तं कृष्णामेकां सभागताम् ।
तद्दुःखमतितिक्षाम मा वधीष्म कुरूनिति ॥ ०१३ ॥

एवं पूर्वापरान्क्लेशानतितिक्षन्त पाण्डवाः ।
यथा बलीयसः सन्तस्तत्सर्वं कुरवो विदुः ॥ ०१४ ॥

यन्नः प्राव्राजयः सौम्य अजिनैः प्रतिवासितान् ।
तद्दुःखमतितिक्षाम मा वधीष्म कुरूनिति ॥ ०१५ ॥

यत्तत्सभायामाक्रम्य कृष्णां केशेष्वधर्षयत् ।
दुःशासनस्तेऽनुमते तच्चास्माभिरुपेक्षितम् ॥ ०१६ ॥

यथोचितं स्वकं भागं लभेमहि परंतप ।
निवर्तय परद्रव्ये बुद्धिं गृद्धां नरर्षभ ॥ ०१७ ॥

शान्तिरेवं भवेद्राजन्प्रीतिश्चैव परस्परम् ।
राज्यैकदेशमपि नः प्रयच्छ शममिच्छताम् ॥ ०१८ ॥

कुशस्थलं वृकस्थलमासन्दी वारणावतम् ।
अवसानं भवेदत्र किञ्चिदेव तु पञ्चमम् ॥ ०१९ ॥

भ्रातॄणां देहि पञ्चानां ग्रामान्पञ्च सुयोधन ।
शान्तिर्नोऽस्तु महाप्राज्ञ ज्ञातिभिः सह सञ्जय ॥ ०२० ॥

भ्राता भ्रातरमन्वेतु पिता पुत्रेण युज्यताम् ।

स्मयमानाः समायान्तु पाञ्चालाः कुरुभिः सह ॥ ०२१ ॥

अक्षतान्कुरुपाञ्चालान्पश्येम इति कामये ।
सर्वे सुमनसस्तात शाम्याम भरतर्षभ ॥ ०२२ ॥

अलमेव शमायास्मि तथा युद्धाय सञ्जय ।
धर्मार्थयोरलं चाहं मृदवे दारुणाय च ॥ ०२३ ॥

---

# अध्याय ०३२

वैशंपायन उवाच ॥

अनुज्ञातः पाण्डवेन प्रययौ सञ्जयस्तदा ।
शासनं धृतराष्ट्रस्य सर्वं कृत्वा महात्मनः ॥ ००१ ॥

संप्राप्य हास्तिनपुरं शीघ्रं च प्रविवेश ह ।
अन्तःपुरमुपस्थाय द्वाःस्थं वचनमब्रवीत् ॥ ००२ ॥

आचक्ष्व मां धृतराष्ट्राय द्वाःस्थ ; उपागतं पाण्डवानां सकाशात् ।
जागर्ति चेदभिवदेस्त्वं हि क्षत्तः ; प्रविशेयं विदितो भूमिपस्य ॥ ००३ ॥

द्वाःस्थ उवाच ॥

सञ्जयोऽयं भूमिपते नमस्ते ; दिदृक्षया द्वारमुपागतस्ते ।
प्राप्तो दूतः पाण्डवानां सकाशा ;त्प्रशाधि राजन्किमयं करोतु ॥ ००४ ॥

धृतराष्ट्र उवाच ॥

आचक्ष्व मां सुखिनं काल्यमस्मै ; प्रवेश्यतां स्वागतं सञ्जयाय ।
न चाहमेतस्य भवाम्यकाल्यः ; स मे कस्माद्द्वारि तिष्ठेत क्षत्तः ॥ ००५ ॥

वैशंपायन उवाच ॥

ततः प्रविश्यानुमते नृपस्य ; महद्वेश्म प्राज्ञशूरार्यगुप्तम् ।
सिंहासनस्थं पार्थिवमाससाद ; वैचित्रवीर्यं प्राञ्जलिः सूतपुत्रः ॥ ००६ ॥

सञ्जय उवाच ॥

सञ्जयोऽहं भूमिपते नमस्ते ; प्राप्तोऽस्मि गत्वा नरदेव पाण्डवान् ।
अभिवाद्य त्वां पाण्डुपुत्रो मनस्वी ; युधिष्ठिरः कुशलं चान्वपृच्छत् ॥ ००७ ॥

स ते पुत्रान्पृच्छति प्रीयमाणः ; कच्चित्पुत्रैः प्रीयसे नप्तृभिश्च ।
तथा सुहृद्भिः सचिवैश्च राज ;न्ये चापि त्वामुपजीवन्ति तैश्च ॥ ००८ ॥

धृतराष्ट्र उवाच ॥

अभ्येत्य त्वां तात वदामि सञ्जय ; अजातशत्रुं च सुखेन पार्थम् ।
कच्चित्स राजा कुशली सपुत्रः ; सहामात्यः सानुजः कौरवाणाम् ॥ ००९ ॥

सञ्जय उवाच ॥

सहामात्यः कुशली पाण्डुपुत्रो ; भूयश्चातो यच्च तेऽग्रे मनोऽभूत् ।
निर्णिक्तधर्मार्थकरो मनस्वी ; बहुश्रुतो दृष्टिमाञ्शीलवांश्च ॥ ०१० ॥

परं धर्मात्पाण्डवस्यानृशंस्यं ; धर्मः परो वित्तचयान्मतोऽस्य ।
सुखप्रिये धर्महीने न पार्थो ;ऽनुरुध्यते भारत तस्य विद्धि ॥ ०११ ॥

परप्रयुक्तः पुरुषो विचेष्टते ; सूत्रप्रोता दारुमयीव योषा ।
इमं दृष्ट्वा नियमं पाण्डवस्य ; मन्ये परं कर्म दैवं मनुष्यात् ॥ ०१२ ॥

इमं च दृष्ट्वा तव कर्मदोषं ; पादोदर्कं घोरमवर्णरूपम् ।
यावन्नरः कामयतेऽतिकाल्यं ; तावन्नरोऽयं लभते प्रशंसाम्  ॥ ०१३  ॥

अजातशत्रुस्तु विहाय पापं ; जीर्णां त्वचं सर्प इवासमर्थाम् ।
विरोचतेऽहार्यवृत्तेन धीरो ; युधिष्ठिरस्त्वयि पापं विसृज्य  ॥ ०१४  ॥

अङ्गात्मनः कर्म निबोध राज ;न्धर्मार्थयुक्तादार्यवृत्तादपेतम् ।
उपक्रोशं चेह गतोऽसि राज ;न्नोहेश्च पापं प्रसजेदमुत्र  ॥ ०१५  ॥

स त्वमर्थं संशयितं विना तै ;राशंससे पुत्रवशानुगोऽद्य ।
अधर्मशब्दश्च महान्पृथिव्यां ; नेदं कर्म त्वत्समं भारताग्र्य  ॥ ०१६  ॥

हीनप्रज्ञो दौष्कुलेयो नृशंसो ; दीर्घवैरी क्षत्रविद्यास्वधीरः ।
एवंधर्मा नापदः संतितीर्षे ;द्धीनवीर्यो यश्च भवेदशिष्टः  ॥ ०१७  ॥

कुले जातो धर्मवान्यो यशस्वी ; बहुश्रुतः सुखजीवी यतात्मा ।
धर्मार्थयोर्ग्रथितयोर्बिभर्ति ; नान्यत्र दिष्टस्य वशादुपैति  ॥ ०१८  ॥

कथं हि मन्त्राग्र्यधरो मनीषी ; धर्मार्थयोरापदि संप्रणेता ।
एवंयुक्तः सर्वमन्त्रैरहीनो ; अनानृशंस्यं कर्म कुर्यादमूढः  ॥ ०१९  ॥

तवापीमे मन्त्रविदः समेत्य ; समासते कर्मसु नित्ययुक्ताः ।
तेषामयं बलवान्निश्चयश्च ; कुरुक्षयार्थे निरयो व्यपादि  ॥ ०२०  ॥

अकालिकं कुरवो नाभविष्य ;न्पापेन चेत्पापमजातशत्रुः ।
इच्छेज्जातु त्वयि पापं विसृज्य ; निन्दा चेयं तव लोकेऽभविष्यत्  ॥ ०२१  ॥

किमन्यत्र विषयादीश्वराणां ; यत्र पार्थः परलोकं ददर्श ।
अत्यक्रामत्स तथा संमतः स्या ;न्न संशयो नास्ति मनुष्यकारः  ॥ ०२२  ॥

एतान्गुणान्कर्मकृतानवेक्ष्य ; भावाभावौ वर्तमानावनित्यौ ।
बलिर्हि राजा पारमविन्दमानो ; नान्यत्कालात्कारणं तत्र मेने ॥ ०२३ ॥

चक्षुः श्रोत्रे नासिका त्वक्क जिह्वा ; ज्ञानस्यैतान्यायतनानि जन्तोः ।
तानि प्रीतान्येव तृष्णाक्षयान्ते ; तान्यव्यथो दुःखहीनः प्रणुद्यात् ॥ ०२४ ॥

न त्वेव मन्ये पुरुषस्य कर्म ; संवर्तते सुप्रयुक्तं यथावत् ।
मातुः पितुः कर्मणाभिप्रसूतः ; संवर्धते विधिवद्भोजनेन ॥ ०२५ ॥

प्रियाप्रिये सुखदुःखे च राज ;न्निन्दाप्रशंसे च भजेत एनम् ।
परस्त्वेनं गर्हयतेऽपराधे ; प्रशंसते साधुवृत्तं तमेव ॥ ०२६ ॥

स त्वा गर्हे भारतानां विरोधा ;दन्तो नूनं भवितायं प्रजानाम् ।
नो चेदिदं तव कर्मापराधा ;त्कुरून्दहेत्कृष्णवर्त्मेव कक्षम् ॥ ०२७ ॥

त्वमेवैको जातपुत्रेषु राज ;न्वशं गन्ता सर्वलोके नरेन्द्र ।
कामात्मनां श्लाघसे द्यूतकाले ; नान्यच्छमात्पश्य विपाकमस्य ॥ ०२८ ॥

अनाप्तानां प्रग्रहात्त्वं नरेन्द्र ; तथाप्तानां निग्रहाच्चैव राजन् ।
भूमिं स्फीतां दुर्बलत्वादनन्तां ; न शक्तस्त्वं रक्षितुं कौरवेय ॥ ०२९ ॥

अनुज्ञातो रथवेगावधूतः ; श्रान्तो निपद्ये शयनं नृसिंह ।
प्रातः श्रोतारः कुरवः सभाया ;मजातशत्रोर्वचनं समेताः ॥ ०३० ॥

# प्रजागरपर्व

## अध्याय ०३३

वैशंपायन उवाच ॥

द्वाःस्थं प्राह महाप्राज्ञो धृतराष्ट्रो महीपतिः ।
विदुरं द्रष्टुमिच्छामि तमिहानय माचिरम् ॥ ००१ ॥

प्रहितो धृतराष्ट्रेण दूतः क्षत्तारमब्रवीत् ।
ईश्वरस्त्वां महाराजो महाप्राज्ञ दिदृक्षति ॥ ००२ ॥

एवमुक्तस्तु विदुरः प्राप्य राजनिवेशनम् ।
अब्रवीद्धृतराष्ट्राय द्वाःस्थ मां प्रतिवेदय ॥ ००३ ॥

द्वाःस्थ उवाच ॥

विदुरोऽयमनुप्राप्तो राजेन्द्र तव शासनात् ।
द्रष्टुमिच्छति ते पादौ किं करोतु प्रशाधि माम् ॥ ००४ ॥

धृतराष्ट्र उवाच ॥

प्रवेशय महाप्राज्ञं विदुरं दीर्घदर्शिनम् ।
अहं हि विदुरस्यास्य नाकाल्यो जातु दर्शने ॥ ००५ ॥

द्वाःस्थ उवाच ॥

प्रविशान्तःपुरं क्षत्तर्महाराजस्य धीमतः ।
न हि ते दर्शनेऽकाल्यो जातु राजा ब्रवीति माम् ॥ ००६ ॥

वैशंपायन उवाच ॥

ततः प्रविश्य विदुरो धृतराष्ट्रनिवेशनम् ।
अब्रवीत्प्राञ्जलिर्वाक्यं चिन्तयानं नराधिपम् ॥ ००७ ॥

विदुरोऽहं महाप्राज्ञ संप्राप्तस्तव शासनात् ।
यदि किञ्चन कर्तव्यमयमस्मि प्रशाधि माम् ॥ ००८ ॥

धृतराष्ट्र उवाच ॥

सञ्जयो विदुर प्राप्तो गर्हयित्वा च मां गतः ।
अजातशत्रोः श्वो वाक्यं सभामध्ये स वक्ष्यति ॥ ००९ ॥

तस्याद्य कुरुवीरस्य न विज्ञातं वचो मया ।
तन्मे दहति गात्राणि तदकार्षीत्प्रजागरम् ॥ ०१० ॥

जाग्रतो दह्यमानस्य श्रेयो यदिह पश्यसि ।
तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलो ह्यसि ॥ ०११ ॥

यतः प्राप्तः सञ्जयः पाण्डवेभ्यो ; न मे यथावन्मनसः प्रशान्तिः ।
सर्वेन्द्रियाण्यप्रकृतिं गतानि ; किं वक्ष्यतीत्येव हि मेऽद्य चिन्ता ॥ ०१२ ॥

विदुर उवाच ॥

अभियुक्तं बलवता दुर्बलं हीनसाधनम् ।
हृतस्वं कामिनं चोरमाविशन्ति प्रजागराः ॥ ०१३ ॥

कच्चिदेतैर्महादोषैर्न स्पृष्टोऽसि नराधिप ।
कच्चिन्न परवित्तेषु गृध्यन्विपरितप्यसे ॥ ०१४ ॥

धृतराष्ट्र उवाच ॥

श्रोतुमिच्छामि ते धर्म्यं परं नैःश्रेयसं वचः ।
अस्मिन्राजर्षिवंशे हि त्वमेकः प्राज्ञसंमतः ॥ ०१५ ॥

विदुर उवाच ॥

निषेवते प्रशस्तानि निन्दितानि न सेवते ।
अनास्तिकः श्रद्दधान एतत्पण्डितलक्षणम् ॥ ०१६ ॥

क्रोधो हर्षश्च दर्पश्च ह्रीस्तम्भो मान्यमानिता ।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ ०१७ ॥

यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे ।
कृतमेवास्य जानन्ति स वै पण्डित उच्यते ॥ ०१८ ॥

यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः ।
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ॥ ०१९ ॥

यस्य संसारिणी प्रज्ञा धर्मार्थावनुवर्तते ।
कामादर्थं वृणीते यः स वै पण्डित उच्यते ॥ ०२० ॥

यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते ।
न किञ्चिदवमन्यन्ते पण्डिता भरतर्षभ ॥ ०२१ ॥

क्षिप्रं विजानाति चिरं शृणोति ; विज्ञाय चार्थं भजते न कामात् ।
नासंपृष्टो व्युपयुङ्क्ते परार्थे ; तत्प्रज्ञानं प्रथमं पण्डितस्य ॥ ०२२ ॥

नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ॥ ०२३ ॥

निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः ।
अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते ॥ ०२४ ॥

आर्यकर्मणि रज्यन्ते भूतिकर्माणि कुर्वते ।
हितं च नाभ्यसूयन्ति पण्डिता भरतर्षभ ॥ ०२५ ॥

न हृष्यत्यात्मसंमाने नावमानेन तप्यते ।
गाङ्गो ह्रद इवाक्षोभ्यो यः स पण्डित उच्यते ॥ ०२६ ॥

तत्त्वज्ञः सर्वभूतानां योगज्ञः सर्वकर्मणाम् ।
उपायज्ञो मनुष्याणां नरः पण्डित उच्यते ॥ ०२७ ॥

प्रवृत्तवाक्चित्रकथ ऊहवान्प्रतिभानवान् ।
आशु ग्रन्थस्य वक्ता च स वै पण्डित उच्यते ॥ ०२८ ॥

श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा ।
असंभिन्नार्यमर्यादः पण्डिताख्यां लभेत सः ॥ ०२९ ॥

अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः ।
अर्थांश्चाकर्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः ॥ ०३० ॥

स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ।
मिथ्या चरति मित्रार्थे यश्च मूढः स उच्यते ॥ ०३१ ॥

अकामान्कामयति यः कामयानान्परिद्विषन् ।
बलवन्तं च यो द्वेष्टि तमाहुर्मूढचेतसम् ॥ ०३२ ॥

अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥ ०३३ ॥

संसारयति कृत्यानि सर्वत्र विचिकित्सते ।
चिरं करोति क्षिप्रार्थे स मूढो भरतर्षभ ॥ ०३४ ॥

अनाहूतः प्रविशति अपृष्टो बहु भाषते ।
विश्वसत्यप्रमत्तेषु मूढचेता नराधमः ॥ ०३५ ॥

परं क्षिपति दोषेण वर्तमानः स्वयं तथा ।
यश्च क्रुध्यत्यनीशः सन्स च मूढतमो नरः ॥ ०३६ ॥

आत्मनो बलमज्ञाय धर्मार्थपरिवर्जितम् ।
अलभ्यमिच्छन्नैष्कर्म्यान्मूढबुद्धिरिहोच्यते ॥ ०३७ ॥

अशिष्यं शास्ति यो राजन्यश्च शून्यमुपासते ।
कदर्यं भजते यश्च तमाहुर्मूढचेतसम् ॥ ०३८ ॥

अर्थं महान्तमासाद्य विद्यामैश्वर्यमेव वा ।
विचरत्यसमुन्नद्धो यः स पण्डित उच्यते ॥ ०३९ ॥

एकः संपन्नमश्नाति वस्ते वासश्च शोभनम् ।
योऽसंविभज्य भृत्येभ्यः को नृशंसतरस्ततः ॥ ०४० ॥

एकः पापानि कुरुते फलं भुङ्क्ते महाजनः ।
भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ॥ ०४१ ॥

एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥ ०४२ ॥

एकया द्वे विनिश्चित्य त्रींश्चतुर्भिर्वशे कुरु ।
पञ्च जित्वा विदित्वा षट्सप्त हित्वा सुखी भव ॥ ०४३ ॥

एकं विषरसो हन्ति शस्त्रेणैकश्च वध्यते ।
सराष्ट्रं सप्रजं हन्ति राजानं मन्त्रविस्रवः ॥ ०४४ ॥

एकः स्वादु न भुञ्जीत एकश्चार्थान्न चिन्तयेत् ।

एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात्  ॥ ०४५  ॥

एकमेवाद्वितीयं तद्यद्राजन्नावबुध्यसे ।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव  ॥ ०४६  ॥

एकः क्षमावतां दोषो द्वितीयो नोपलभ्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः  ॥ ०४७  ॥

एको धर्मः परं श्रेयः क्षमैका शान्तिरुत्तमा ।
विद्यैका परमा दृष्टिरहिंसैका सुखावहा  ॥ ०४८  ॥

द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम्  ॥ ०४९  ॥

द्वे कर्मणी नरः कुर्वन्नस्मि.णल्लोके विरोचते ।
अब्रुवन्परुषं किञ्चिदसतो नार्थयंस्तथा  ॥ ०५०  ॥

द्वाविमौ पुरुषव्याघ्र परप्रत्ययकारिणौ ।
स्त्रियः कामितकामिन्यो लोकः पूजितपूजकः  ॥ ०५१  ॥

द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषणौ ।
यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः  ॥ ०५२  ॥

द्वाविमौ पुरुषौ राजन्स्वर्गस्योपरि तिष्ठतः ।
प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान्  ॥ ०५३  ॥

न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ ।
अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम्  ॥ ०५४  ॥

त्रयो न्याया मनुष्याणां श्रूयन्ते भरतर्षभ ।
कनीयान्मध्यमः श्रेष्ठ इति वेदविदो विदुः  ॥ ०५५  ॥

त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः ।
नियोजयेद्यथावत्तांस्त्रिविधेष्वेव कर्मसु ॥ ०५६ ॥

त्रय एवाधना राजन्भार्या दासस्तथा सुतः ।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ ०५७ ॥

चत्वारि राज्ञा तु महाबलेन ; वर्ज्यान्याहुः पण्डितस्तानि विद्यात् ।
अल्पप्रज्ञैः सह मन्त्रं न कुर्या ;न्न दीर्घसूत्रैरलसैश्चारणैश्च ॥ ०५८ ॥

चत्वारि ते तात गृहे वसन्तु ; श्रियाभिजुष्टस्य गृहस्थधर्मे ।
वृद्धो ज्ञातिरवसन्नः कुलीनः ; सखा दरिद्रो भगिनी चानपत्या ॥ ०५९ ॥

चत्वार्याह महाराज सद्यस्कानि बृहस्पतिः ।
पृच्छते त्रिदशेन्द्राय तानीमानि निबोध मे ॥ ०६० ॥

देवतानां च सङ्कल्पमनुभावं च धीमताम् ।
विनयं कृतविद्यानां विनाशं पापकर्मणाम् ॥ ०६१ ॥

पञ्चाग्नयो मनुष्येण परिचर्याः प्रयत्नतः ।
पिता माताग्निरात्मा च गुरुश्च भरतर्षभ ॥ ०६२ ॥

पञ्चैव पूजय.ण्ल्लोके यशः प्राप्नोति केवलम् ।
देवान्पितॄन्मनुष्यांश्च भिक्षूनतिथिपञ्चमान् ॥ ०६३ ॥

पञ्च त्वानुगमिष्यन्ति यत्र यत्र गमिष्यसि ।
मित्राण्यमित्रा मध्यस्था उपजीव्योपजीविनः ॥ ०६४ ॥

पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेकमिन्द्रियम् ।
ततोऽस्य स्रवति प्रज्ञा दृतेः पादादिवोदकम् ॥ ०६५ ॥

षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्री भयं क्रोध आलस्यं दीर्घसूत्रता ॥ ०६६ ॥

षडिमान्पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ ०६७ ॥

अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥ ०६८ ॥

षडेव तु गुणाः पुंसा न हातव्याः कदाचन ।
सत्यं दानमनालस्यमनसूया क्षमा धृतिः ॥ ०६९ ॥

षण्णामात्मनि नित्यानामैश्वर्यं योऽधिगच्छति ।
न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः ॥ ०७० ॥

षडिमे षट्सु जीवन्ति सप्तमो नोपलभ्यते ।
चोराः प्रमत्ते जीवन्ति व्याधितेषु चिकित्सकाः ॥ ०७१ ॥

प्रमदाः कामयानेषु यजमानेषु याजकाः ।
राजा विवदमानेषु नित्यं मूर्खेषु पण्डिताः ॥ ०७२ ॥

सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः ।
प्रायशो यैर्विनश्यन्ति कृतमूलाश्च पार्थिवाः ॥ ०७३ ॥

स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् ।
महच्च दण्डपारुष्यमर्थदूषणमेव च ॥ ०७४ ॥

अष्टौ पूर्वनिमित्तानि नरस्य विनशिष्यतः ।
ब्राह्मणान्प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते ॥ ०७५ ॥

ब्राह्मणस्वानि चादत्ते ब्राह्मणांश्च जिघांसति ।

रमते निन्दया चैषां प्रशंसां नाभिनन्दति ॥ ०७६ ॥

नैतान्स्मरति कृत्येषु याचितश्चाभ्यसूयति ।
एतान्दोषान्नरः प्राज्ञो बुध्या बुद्धा विवर्जयेत् ॥ ०७७ ॥

अष्टाविमानि हर्षस्य नवनीतानि भारत ।
वर्तमानानि दृश्यन्ते तान्येव सुसुखान्यपि ॥ ०७८ ॥

समागमश्च सखिभिर्महांश्चैव धनागमः ।
पुत्रेण च परिष्वङ्गः संनिपातश्च मैथुने ॥ ०७९ ॥

समये च प्रियालापः स्वयूथेषु च संनतिः ।
अभिप्रेतस्य लाभश्च पूजा च जनसंसदि ॥ ०८० ॥

नवद्वारमिदं वेश्म त्रिस्थूणं पञ्चसाक्षिकम् ।
क्षेत्रज्ञाधिष्ठितं विद्वान्यो वेद स परः कविः ॥ ०८१ ॥

दश धर्मं न जानन्ति धृतराष्ट्र निबोध तान् ।
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ॥ ०८२ ॥

त्वरमाणश्च भीरुश्च लुब्धः कामी च ते दश ।
तस्मादेतेषु भावेषु न प्रसज्जेत पण्डितः ॥ ०८३ ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
पुत्रार्थमसुरेन्द्रेण गीतं चैव सुधन्वना ॥ ०८४ ॥

यः काममन्यू प्रजहाति राजा ; पात्रे प्रतिष्ठापयते धनं च ।
विशेषविच्छ्रुतवान्क्षिप्रकारी ; तं सर्वलोकः कुरुते प्रमाणम् ॥ ०८५ ॥

जानाति विश्वासयितुं मनुष्या ;न्विज्ञातदोषेषु दधाति दण्डम् ।
जानाति मात्रां च तथा क्षमां च ; तं तादृशं श्रीर्जुषते समग्रा ॥ ०८६ ॥

सुदुर्बलं नावजानाति कं चि ;द्युक्तो रिपुं सेवते बुद्धिपूर्वम् ।
न विग्रहं रोचयते बलस्थैः ; काले च यो विक्रमते स धीरः ॥ ०८७ ॥

प्राप्यापदं न व्यथते कदा चि ;दुद्योगमन्विच्छति चाप्रमत्तः ।
दुःखं च काले सहते जितात्मा ; धुरंधरस्तस्य जिताः सपत्नाः ॥ ०८८ ॥

अनर्थकं विप्रवासं गृहेभ्यः ; पापैः संधिं परदाराभिमर्शम् ।
दम्भं स्तैन्यं पैशुनं मद्यपानं ; न सेवते यः स सुखी सदैव ॥ ०८९ ॥

न संरम्भेणारभतेऽर्थवर्ग ;माकारितः शंसति तथ्यमेव ।
न मात्रार्थे रोचयते विवादं ; नापूजितः कुप्यति चाप्यमूढः ॥ ०९० ॥

न योऽभ्यसूयत्यनुकम्पते च ; न दुर्बलः प्रातिभाव्यं करोति ।
नात्याह किञ्चित्क्षमते विवादं ; सर्वत्र तादृग्लभते प्रशंसाम् ॥ ०९१ ॥

यो नोद्धतं कुरुते जातु वेषं ; न पौरुषेणापि विकत्थतेऽन्यान् ।
न मूर्च्छितः कटुकान्याह किं चि ;त्प्रियं सदा तं कुरुते जनोऽपि ॥ ०९२ ॥

न वैरमुद्दीपयति प्रशान्तं ; न दर्पमारोहति नास्तमेति ।
न दुर्गतोऽस्मीति करोति मन्युं ; तमार्यशीलं परमाहुरग्र्यम् ॥ ०९३ ॥

न स्वे सुखे वै कुरुते प्रहर्षं ; नान्यस्य दुःखे भवति प्रतीतः ।
दत्त्वा न पश्चात्कुरुतेऽनुतापं ; न कत्थते सत्पुरुषार्यशीलः ॥ ०९४ ॥

देशाचारान्समयाञ्जातिधर्मा ;न्बुभूषते यस्तु परावरज्ञः ।
स तत्र तत्राधिगतः सदैव ; महाजनस्याधिपत्यं करोति ॥ ०९५ ॥

दम्भं मोहं मत्सरं पापकृत्यं ; राजद्विष्टं पैशुनं पूगवैरम् ।
मत्तोन्मत्तैर्दुर्जनैश्चापि वादं ; यः प्रज्ञावान्वर्जयेत्स प्रधानः ॥ ०९६ ॥

दमं शौचं दैवतं मङ्गलानि ; प्रायश्चित्तं विविधा.ण्ल्लोकवादान् ।
एतानि यः कुरुते नैत्यकानि ; तस्योत्थानं देवता राधयन्ति ॥ ०९७ ॥

समैर्विवाहं कुरुते न हीनैः ; समैः सख्यं व्यवहारं कथाश्च ।
गुणैर्विशिष्टांश्च पुरोदधाति ; विपश्चितस्तस्य नयाः सुनीताः ॥ ०९८ ॥

मितं भुङ्क्ते संविभज्याश्रितेभ्यो ; मितं स्वपित्यमितं कर्म कृत्वा ।
ददात्यमित्रेष्वपि याचितः सं ;स्तमात्मवन्तं प्रजहत्यनर्थाः ॥ ०९९ ॥

चिकीर्षितं विप्रकृतं च यस्य ; नान्ये जनाः कर्म जानन्ति किञ्चित् ।
मन्त्रे गुप्ते सम्यगनुष्ठिते च ; स्वल्पो नास्य व्यथते कश्चिदर्थः ॥ १०० ॥

यः सर्वभूतप्रशमे निविष्टः ; सत्यो मृदुर्दानकृच्छुद्धभावः ।
अतीव सञ्ज्ञायते ज्ञातिमध्ये ; महामणिर्जात्य इव प्रसन्नः ॥ १०१ ॥

य आत्मनापत्रपते भृशं नरः ; स सर्वलोकस्य गुरुर्भवत्युत ।
अनन्ततेजाः सुमनाः समाहितः ; स्वतेजसा सूर्य इवावभासते ॥ १०२ ॥

वने जाताः शापदग्धस्य राज्ञः ; पाण्डोः पुत्राः पञ्च पञ्चेन्द्रकल्पाः ।
त्वयैव बाला वर्धिताः शिक्षिताश्च ; तवादेशं पालयन्त्याम्बिकेय ॥ १०३ ॥

प्रदायैषामुचितं तात राज्यं ; सुखी पुत्रैः सहितो मोदमानः ।
न देवानां नापि च मानुषाणां ; भविष्यसि त्वं तर्कणीयो नरेन्द्र ॥ १०४ ॥

---

# अध्याय ०३४

धृतराष्ट्र उवाच ॥

जाग्रतो दह्यमानस्य यत्कार्यमनुपश्यसि ।
तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलः शुचिः ॥ ००१ ॥

त्वं मां यथावद्विदुर प्रशाधि ; प्रज्ञापूर्वं सर्वमजातशत्रोः ।
यन्मन्यसे पथ्यमदीनसत्त्व ; श्रेयस्करं ब्रूहि तद्वै कुरूणाम् ॥ ००२ ॥

पापाशङ्की पापमेवानुपश्य ;न्पृच्छामि त्वां व्याकुलेनात्मनाहम् ।
कवे तन्मे ब्रूहि सर्वं यथाव ;न्मनीषितं सर्वमजातशत्रोः ॥ ००३ ॥

विदुर उवाच ॥

शुभं वा यदि वा पापं द्वेष्यं वा यदि वा प्रियम् ।
अपृष्टस्तस्य तद्ब्रूयाद्यस्य नेच्छेत्पराभवम् ॥ ००४ ॥

तस्माद्वक्ष्यामि ते राजन्भवमिच्छन्कुरून्प्रति ।
वचः श्रेयस्करं धर्म्यं ब्रुवतस्तन्निबोध मे ॥ ००५ ॥

मिथ्योपेतानि कर्माणि सिध्येयुर्यानि भारत ।
अनुपायप्रयुक्तानि मा स्म तेषु मनः कृथाः ॥ ००६ ॥

तथैव योगविहितं न सिध्येत्कर्म यन्नृप ।
उपाययुक्तं मेधावी न तत्र ग्लपयेन्मनः ॥ ००७ ॥

अनुबन्धानवेक्षेत सानुबन्धेषु कर्मसु ।
संप्रधार्य च कुर्वीत न वेगेन समाचरेत् ॥ ००८ ॥

अनुबन्धं च संप्रेक्ष्य विपाकांश्चैव कर्मणाम् ।
उत्थानमात्मनश्चैव धीरः कुर्वीत वा न वा ॥ ००९ ॥

यः प्रमाणं न जानाति स्थाने वृद्धौ तथा क्षये ।

कोशे जनपदे दण्डे न स राज्येऽवतिष्ठते ॥ ०१० ॥

यस्त्वेतानि प्रमाणानि यथोक्तान्यनुपश्यति ।
युक्तो धर्मार्थयोर्ज्ञाने स राज्यमधिगच्छति ॥ ०११ ॥

न राज्यं प्राप्तमित्येव वर्तितव्यमसांप्रतम् ।
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥ ०१२ ॥

भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो बडिशमायसम् ।
रूपाभिपाती ग्रसते नानुबन्धमवेक्षते ॥ ०१३ ॥

यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत् ।
हितं च परिणामे यत्तदद्यं भूतिमिच्छता ॥ ०१४ ॥

वनस्पतेरपक्वानि फलानि प्रचिनोति यः ।
स नाप्नोति रसं तेभ्यो बीजं चास्य विनश्यति ॥ ०१५ ॥

यस्तु पक्वमुपादत्ते काले परिणतं फलम् ।
फलाद्रसं स लभते बीजाच्चैव फलं पुनः ॥ ०१६ ॥

यथा मधु समादत्ते रक्षन्पुष्पाणि षट्पदः ।
तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया ॥ ०१७ ॥

पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् ।
मालाकार इवारामे न यथाङ्गारकारकः ॥ ०१८ ॥

किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।
इति कर्माणि सञ्चिन्त्य कुर्याद्वा पुरुषो न वा ॥ ०१९ ॥

अनारभ्या भवन्त्यर्थाः केचिन्नित्यं तथागताः ।
कृतः पुरुषकारोऽपि भवेद्येषु निरर्थकः ॥ ०२० ॥

काँश्चिदर्थान्नरः प्राज्ञो लघुमूलान्महाफलान् ।
क्षिप्रमारभते कर्तुं न विघ्नयति तादृशान्  ॥ ०२१  ॥

ऋजु पश्यति यः सर्वं चक्षुषानुपिबन्निव ।
आसीनमपि तूष्णीकमनुरज्यन्ति तं प्रजाः  ॥ ०२२  ॥

चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् ।
प्रसादयति लोकं यः तं लोकोऽनुप्रसीदति  ॥ ०२३  ॥

यस्मात्त्रस्यन्ति भूतानि मृगव्याधान्मृगा इव ।
सागरान्तामपि महीं लब्ध्वा स परिहीयते  ॥ ०२४  ॥

पितृपैतामहं राज्यं प्राप्तवान्स्वेन तेजसा ।
वायुरभ्रमिवासाद्य भ्रंशयत्यनये स्थितः  ॥ ०२५  ॥

धर्ममाचरतो राज्ञः सद्भिश्चरितमादितः ।
वसुधा वसुसंपूर्णा वर्धते भूतिवर्धनी  ॥ ०२६  ॥

अथ संत्यजतो धर्ममधर्मं चानुतिष्ठतः ।
प्रतिसंवेष्टते भूमिरग्नौ चर्माहितं यथा  ॥ ०२७  ॥

य एव यत्नः क्रियते परराष्ट्रावमर्दने ।
स एव यत्नः कर्तव्यः स्वराष्ट्रपरिपालने  ॥ ०२८  ॥

धर्मेण राज्यं विन्देत धर्मेण परिपालयेत् ।
धर्ममूलां श्रियं प्राप्य न जहाति न हीयते  ॥ ०२९  ॥

अप्युन्मत्तात्प्रलपतो बालाच्च परिसर्पतः ।
सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम्  ॥ ०३०  ॥

सुव्याहृतानि सुधियां सुकृतानि ततस्ततः ।
सञ्चिन्वन्धीर आसीत शिलाहारी शिलं यथा ॥ ०३१ ॥

गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ ०३२ ॥

भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा ।
अथ या सुदुहा राजन्नैव तां विनयन्त्यपि ॥ ०३३ ॥

यदतप्तं प्रणमति न तत्संतापयन्त्यपि ।
यच्च स्वयं नतं दारु न तत्संनामयन्त्यपि ॥ ०३४ ॥

एतयोपमया धीरः संनमेत बलीयसे ।
इन्द्राय स प्रणमते नमते यो बलीयसे ॥ ०३५ ॥

पर्जन्यनाथाः पशवो राजानो मित्रबान्धवाः ।
पतयो बान्धवाः स्त्रीणां ब्राह्मणा वेदबान्धवाः ॥ ०३६ ॥

सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते ।
मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥ ०३७ ॥

मानेन रक्ष्यते धान्यमश्वान्रक्षत्यनुक्रमः ।
अभीक्ष्णदर्शनाद्गावः स्त्रियो रक्ष्याः कुचेलतः ॥ ०३८ ॥

न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः ।
अन्त्येष्वपि हि जातानां वृत्तमेव विशिष्यते ॥ ०३९ ॥

य ईर्ष्युः परवित्तेषु रूपे वीर्ये कुलान्वये ।
सुखे सौभाग्यसत्कारे तस्य व्याधिरनन्तकः ॥ ०४० ॥

अकार्यकरणाद्भीतः कार्याणां च विवर्जनात् ।

अकाले मन्त्रभेदाच्च येन माद्येन्न तत्पिबेत्  ॥ ०४१  ॥

विद्यामदो धनमदस्तृतीयोऽभिजनो मदः ।
एते मदावलिप्तानामेत एव सतां दमाः  ॥ ०४२  ॥

असन्तोऽभ्यर्थिताः सद्भिः किञ्चित्कार्यं कदाचन ।
मन्यन्ते सन्तमात्मानमसन्तमपि विश्रुतम्  ॥ ०४३  ॥

गतिरात्मवतां सन्तः सन्त एव सतां गतिः ।
असतां च गतिः सन्तो न त्वसन्तः सतां गतिः  ॥ ०४४  ॥

जिता सभा वस्त्रवता समाशा गोमता जिता ।
अध्वा जितो यानवता सर्वं शीलवता जितम्  ॥ ०४५  ॥

शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति ।
न तस्य जीवितेनार्थो न धनेन न बन्धुभिः  ॥ ०४६  ॥

आढ्यानां मांसपरमं मध्यानां गोरसोत्तरम् ।
लवणोत्तरं दरिद्राणां भोजनं भरतर्षभ  ॥ ०४७  ॥

संपन्नतरमेवान्नं दरिद्रा भुञ्जते सदा ।
क्षुत्स्वादुतां जनयति सा चाढ्येषु सुदुर्लभा  ॥ ०४८  ॥

प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते ।
दरिद्राणां तु राजेन्द्र अपि काष्ठं हि जीर्यते  ॥ ०४९  ॥

अवृत्तिर्भयमन्त्यानां मध्यानां मरणाद्भयम् ।
उत्तमानां तु मर्त्यानामवमानात्परं भयम्  ॥ ०५०  ॥

ऐश्वर्यमदपापिष्ठा मदाः पानमदादयः ।
ऐश्वर्यमदमत्तो हि नापतित्वा विबुध्यते  ॥ ०५१  ॥

इन्द्रियैरिन्द्रियार्थेषु वर्तमानैरनिग्रहैः ।
तैरयं ताप्यते लोको नक्षत्राणि ग्रहैरिव ॥ ०५२ ॥

यो जितः पञ्चवर्गेण सहजेनात्मकर्शिना ।
आपदस्तस्य वर्धन्ते शुक्लपक्ष इवोडुराट् ॥ ०५३ ॥

अविजित्य य आत्मानममात्यान्विजिगीषते ।
अमित्रान्वाजितामात्यः सोऽवशः परिहीयते ॥ ०५४ ॥

आत्मानमेव प्रथमं देशरूपेण यो जयेत् ।
ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते ॥ ०५५ ॥

वश्येन्द्रियं जितामात्यं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ॥ ०५६ ॥

रथः शरीरं पुरुषस्य राज ;न्नात्मा नियन्तेन्द्रियाण्यस्य चाश्वाः ।
तैरप्रमत्तः कुशलः सदश्वै ;र्दान्तैः सुखं याति रथीव धीरः ॥ ०५७ ॥

एतान्यनिगृहीतानि व्यापादयितुमप्यलम् ।
अविधेया इवादान्ता हयाः पथि कुसारथिम् ॥ ०५८ ॥

अनर्थमर्थतः पश्यन्नर्थं चैवाप्यनर्थतः ।
इन्द्रियैः प्रसृतो बालः सुदुःखं मन्यते सुखम् ॥ ०५९ ॥

धर्मार्थौ यः परित्यज्य स्यादिन्द्रियवशानुगः ।
श्रीप्राणधनदारेभ्य क्षिप्रं स परिहीयते ॥ ०६० ॥

अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः ।
इन्द्रियाणामनैश्वर्यादैश्वर्याद्भ्रश्यते हि सः ॥ ०६१ ॥

आत्मनात्मानमन्विच्छेन्मनोबुद्धीन्द्रियैर्यतैः ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ०६२ ॥

क्षुद्राक्षेणेव जालेन झषावपिहितावुभौ ।
कामश्च राजन्क्रोधश्च तौ प्रज्ञानं विलुम्पतः ॥ ०६३ ॥

समवेक्ष्येह धर्मार्थौ संभारान्योऽधिगच्छति ।
स वै संभृतसंभारः सततं सुखमेधते ॥ ०६४ ॥

यः पञ्चाभ्यन्तराञ्शत्रूनविजित्य मतिक्षयान् ।
जिगीषति रिपूनन्यान्रिपवोऽभिभवन्ति तम् ॥ ०६५ ॥

दृश्यन्ते हि दुरात्मानो वध्यमानाः स्वकर्मभिः ।
इन्द्रियाणामनीशत्वाद्राजानो राज्यविभ्रमैः ॥ ०६६ ॥

असंत्यागात्पापकृतामपापां ;स्तुल्यो दण्डः स्पृशते मिश्रभावात् ।
शुष्केणार्द्रं दह्यते मिश्रभावा ;त्तस्मात्पापैः सह संधिं न कुर्यात् ॥ ०६७ ॥

निजानुत्पततः शत्रून्पञ्च पञ्चप्रयोजनान् ।
यो मोहान्न निगृह्णाति तमापद्ग्रसते नरम् ॥ ०६८ ॥

अनसूयार्जवं शौचं संतोषः प्रियवादिता ।
दमः सत्यमनायासो न भवन्ति दुरात्मनाम् ॥ ०६९ ॥

आत्मज्ञानमनायासस्तितिक्षा धर्मनित्यता ।
वाक्चैव गुप्ता दानं च नैतान्यन्त्येषु भारत ॥ ०७० ॥

आक्रोशपरिवादाभ्यां विहिंसन्त्यबुधा बुधान् ।
वक्ता पापमुपादत्ते क्षममाणो विमुच्यते ॥ ०७१ ॥

हिंसा बलमसाधूनां राज्ञां दण्डविधिर्बलम् ।

शुश्रूषा तु बलं स्त्रीणां क्षमा गुणवतां बलम्  ॥ ०७२  ॥

वाक्संयमो हि नृपते सुदुष्करतमो मतः ।
अर्थवच्च विचित्रं च न शक्यं बहु भाषितुम्  ॥ ०७३  ॥

अभ्यावहति कल्याणं विविधा वाक्सुभाषिता ।
सैव दुर्भाषिता राजन्ननर्थायोपपद्यते  ॥ ०७४  ॥

संरोहति शरैर्विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम्  ॥ ०७५  ॥

कर्णिनालीकनाराचा निर्हरन्ति शरीरतः ।
वाक्शल्यस्तु न निर्हर्तुं शक्यो हृदिशयो हि सः  ॥ ०७६  ॥

वाक्सायका वदनान्निष्पतन्ति ; यैराहतः शोचति रात्र्यहानि ।
परस्य नामर्मसु ते पतन्ति ; तान्पण्डितो नावसृजेत्परेषु  ॥ ०७७  ॥

यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।
बुद्धिं तस्यापकर्षन्ति सोऽपाचीनानि पश्यति  ॥ ०७८  ॥

बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते ।
अनयो नयसङ्काशो हृदयान्नापसर्पति  ॥ ०७९  ॥

सेयं बुद्धिः परीता ते पुत्राणां तव भारत ।
पाण्डवानां विरोधेन न चैनामवबुध्यसे  ॥ ०८०  ॥

राजा लक्षणसंपन्नस्त्रैलोक्यस्यापि यो भवेत् ।
शिष्यस्ते शासिता सोऽस्तु धृतराष्ट्र युधिष्ठिरः  ॥ ०८१  ॥

अतीव सर्वान्पुत्रांस्ते भागधेयपुरस्कृतः ।
तेजसा प्रज्ञया चैव युक्तो धर्मार्थतत्त्ववित्  ॥ ०८२  ॥

आनृशंस्यादनुक्रोशाद्योऽसौ धर्मभृतां वरः ।
गौरवात्तव राजेन्द्र बहून्क्लेशांस्तितिक्षति ॥ ०८३ ॥

---

# अध्याय ०३५

धृतराष्ट्र उवाच ॥

ब्रूहि भूयो महाबुद्धे धर्मार्थसहितं वचः ।
श्रृण्वतो नास्ति मे तृप्तिर्विचित्राणीह भाषसे ॥ ००१ ॥

विदुर उवाच ॥

सर्वतीर्थेषु वा स्नानं सर्वभूतेषु चार्जवम् ।
उभे एते समे स्यातामार्जवं वा विशिष्यते ॥ ००२ ॥

आर्जवं प्रतिपद्यस्व पुत्रेषु सततं विभो ।
इह कीर्तिं परां प्राप्य प्रेत्य स्वर्गमवाप्स्यसि ॥ ००३ ॥

यावत्कीर्तिर्मनुष्यस्य पुण्या लोकेषु गीयते ।
तावत्स पुरुषव्याघ्र स्वर्गलोके महीयते ॥ ००४ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
विरोचनस्य संवादं केशिन्यर्थे सुधन्वना ॥ ००५ ॥

केशिन्युवाच ॥

किं ब्राह्मणाः स्विच्छ्रेयांसो दितिजाः स्विद्विरोचन ।
अथ केन स्म पर्यङ्कं सुधन्वा नाधिरोहति ॥ ००६ ॥

विरोचन उवाच ॥

प्राजापत्या हि वै श्रेष्ठा वयं केशिनि सत्तमाः ।
अस्माकं खल्विमे लोकाः के देवाः के द्विजातयः ॥ ००७ ॥

केशिन्युवाच ॥

इहैवास्स्व प्रतीक्षाव उपस्थाने विरोचन ।
सुधन्वा प्रातरागन्ता पश्येयं वां समागतौ ॥ ००८ ॥

विरोचन उवाच ॥

तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे ।
सुधन्वानं च मां चैव प्रातर्द्रष्टासि सङ्गतौ ॥ ००९ ॥

सुधन्वोवाच ॥

अन्वालभे हिरण्मयं प्राह्लादेऽहं तवासनम् ।
एकत्वमुपसंपन्नो न त्वासेयं त्वया सह ॥ ०१० ॥

विरोचन उवाच ॥

अन्वाहरन्तु फलकं कूर्चं वाप्यथ वा बृसीम् ।
सुधन्वन्न त्वमर्होऽसि मया सह समासनम् ॥ ०११ ॥

सुधन्वोवाच ॥

पितापि ते समासीनमुपासीतैव मामधः ।

बालः सुखैधितो गेहे न त्वं किञ्चन बुध्यसे ॥ ०१२ ॥

विरोचन उवाच ॥

हिरण्यं च गवाश्वं च यद्वित्तमसुरेषु नः ।
सुधन्वन्विपणे तेन प्रश्नं पृच्छाव ये विदुः ॥ ०१३ ॥

सुधन्वोवाच ॥

हिरण्यं च गवाश्वं च तवैवास्तु विरोचन ।
प्राणयोस्तु पणं कृत्वा प्रश्नं पृच्छाव ये विदुः ॥ ०१४ ॥

विरोचन उवाच ॥

आवां कुत्र गमिष्यावः प्राणयोर्विपणे कृते ।
न हि देवेष्वहं स्थाता न मनुष्येषु कर्हिचित् ॥ ०१५ ॥

सुधन्वोवाच ॥

पितरं ते गमिष्यावः प्राणयोर्विपणे कृते ।
पुत्रस्यापि स हेतोर्हि प्रह्रादो नानृतं वदेत् ॥ ०१६ ॥

प्रह्राद उवाच ॥

इमौ तौ संप्रदृश्येते याभ्यां न चरितं सह ।
आशीविषाविव क्रुद्धावेकमार्गमिहागतौ ॥ ०१७ ॥

किं वै सहैव चरतो न पुरा चरतः सह ।
विरोचनैतत्पृच्छामि किं ते सख्यं सुधन्वना ॥ ०१८ ॥

विरोचन उवाच ॥

न मे सुधन्वना सख्यं प्राणयोर्विपणावहे ।
प्रह्राद तत्त्वां पृच्छामि मा प्रश्नमनृतं वदीः ॥ ०१९ ॥

प्रह्राद उवाच ॥

उदकं मधुपर्कं चाप्यानयन्तु सुधन्वने ।
ब्रह्मन्नभ्यर्चनीयोऽसि श्वेता गौः पीवरीकृता ॥ ०२० ॥

सुधन्वोवाच ॥

उदकं मधुपर्कं च पथ एवार्पितं मम ।
प्रह्राद त्वं तु नौ प्रश्नं तथ्यं प्रब्रूहि पृच्छतोः ॥ ०२१ ॥

प्रह्राद उवाच ॥

पुत्रो वान्यो भवान्ब्रह्मन्साक्ष्ये चैव भवेत्स्थितः ।
तयोर्विवदतोः प्रश्नं कथमस्मद्विधो वदेत् ॥ ०२२ ॥

अथ यो नैव प्रब्रूयात्सत्यं वा यदि वानृतम् ।
एतत्सुधन्वन्पृच्छामि दुर्विवक्ता स्म किं वसेत् ॥ ०२३ ॥

सुधन्वोवाच ॥

यां रात्रिमधिविन्ना स्त्री यां चैवाक्षपराजितः ।
यां च भाराभितप्ताङ्गो दुर्विवक्ता स्म तां वसेत् ॥ ०२४ ॥

नगरे प्रतिरुद्धः सन्बहिर्द्वारे बुभुक्षितः ।
अमित्रान्भूयसः पश्यन्दुर्विवक्ता स्म तां वसेत् ॥ ०२५ ॥

पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।

शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥ ०२६ ॥

हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदीः ॥ ०२७ ॥

प्रह्राद उवाच ॥

मत्तः श्रेयानङ्गिरा वै सुधन्वा त्वद्विरोचन ।
मातास्य श्रेयसी मातुस्तस्मात्त्वं तेन वै जितः ॥ ०२८ ॥

विरोचन सुधन्वायं प्राणानामीश्वरस्तव ।
सुधन्वन्पुनरिच्छामि त्वया दत्तं विरोचनम् ॥ ०२९ ॥

सुधन्वोवाच ॥

यद्धर्ममवृणीथास्त्वं न कामादनृतं वदीः ।
पुनर्ददामि ते तस्मात्पुत्रं प्रह्राद दुर्लभम् ॥ ०३० ॥

एष प्रह्राद पुत्रस्ते मया दत्तो विरोचनः ।
पादप्रक्षालनं कुर्यात्कुमार्याः संनिधौ मम ॥ ०३१ ॥

विदुर उवाच ॥

तस्माद्राजेन्द्र भूम्यर्थे नानृतं वक्तुमर्हसि ।
मा गमः ससुतामात्योऽत्ययं पुत्राननुभ्रमन् ॥ ०३२ ॥

न देवा यष्टिमादाय रक्षन्ति पशुपालवत् ।
यं तु रक्षितुमिच्छन्ति बुद्ध्या संविभजन्ति तम् ॥ ०३३ ॥

यथा यथा हि पुरुषः कल्याणे कुरुते मनः ।
तथा तथास्य सर्वार्थाः सिध्यन्ते नात्र संशयः ॥ ०३४ ॥

न छन्दांसि वृजिनात्तारयन्ति ; मायाविनं मायया वर्तमानम् ।
नीडं शकुन्ता इव जातपक्षा ;श्छन्दांस्येनं प्रजहत्यन्तकाले ॥ ०३५ ॥

मत्तापानं कलहं पूगवैरं ; भार्यापत्योरन्तरं ज्ञातिभेदम् ।
राजद्विष्टं स्त्रीपुमांसोर्विवादं ; वर्ज्यान्याहुर्यश्च पन्थाः प्रदुष्टः ॥ ०३६ ॥

सामुद्रिकं वणिजं चोरपूर्वं ; शलाकधूर्तं च चिकित्सकं च ।
अरिं च मित्रं च कुशीलवं च ; नैतान्साक्ष्येष्वधिकुर्वीत सप्त ॥ ०३७ ॥

मानाग्निहोत्रमुत मानमौनं ; मानेनाधीतमुत मानयज्ञः ।
एतानि चत्वार्यभयङ्कराणि ; भयं प्रयच्छन्त्ययथाकृतानि ॥ ०३८ ॥

अगारदाही गरदः कुण्डाशी सोमविक्रयी ।
पर्वकारश्च सूची च मित्रध्रुक्पारदारिकः ॥ ०३९ ॥

भ्रूणहा गुरुतल्पी च यश्च स्यात्पानपो द्विजः ।
अतितीक्ष्णश्च काकश्च नास्तिको वेदनिन्दकः ॥ ०४० ॥

स्रुवप्रग्रहणो व्रात्यः कीनाशश्चार्थवानपि ।
रक्षेत्युक्तश्च यो हिंस्यात्सर्वे ब्रह्महणैः समाः ॥ ०४१ ॥

तृणोल्कया ज्ञायते जातरूपं ; युगे भद्रो व्यवहारेण साधुः ।
शूरो भयेष्वर्थकृच्छ्रेषु धीरः ; कृच्छ्रास्वापत्सु सुहृदश्चारयश्च ॥ ०४२ ॥

जरा रूपं हरति हि धैर्यमाशा ; मृत्युः प्राणान्धर्मचर्यामसूया ।
क्रोधः श्रियं शीलमनार्यसेवा ; ह्रियं कामः सर्वमेवाभिमानः ॥ ०४३ ॥

श्रीर्मङ्गलात्प्रभवति प्रागल्भ्यात्संप्रवर्धते ।
दाक्ष्यात्तु कुरुते मूलं संयमात्प्रतितिष्ठति ॥ ०४४ ॥

अष्टौ गुणाः पुरुषं दीपयन्ति ; प्रज्ञा च कौल्यं च दमः श्रुतं च ।
पराक्रमश्चाबहुभाषिता च ; दानं यथाशक्ति कृतज्ञता च ॥ ०४५ ॥

एतान्गुणांस्तात महानुभावा ;नेको गुणः संश्रयते प्रसह्य ।
राजा यदा सत्कुरुते मनुष्यं ; सर्वान्गुणानेष गुणोऽतिभाति ॥ ०४६ ॥

अष्टौ नृपेमानि मनुष्यलोके ; स्वर्गस्य लोकस्य निदर्शनानि ।
चत्वार्येषामन्ववेतानि सद्भि ;श्चत्वार्येषामन्ववयन्ति सन्तः ॥ ०४७ ॥

यज्ञो दानमध्ययनं तपश्च ; चत्वार्येतान्यन्ववेतानि सद्भिः ।
दमः सत्यमार्जवमानृशंस्यं ; चत्वार्येतान्यन्ववयन्ति सन्तः ॥ ०४८ ॥

न सा सभा यत्र न सन्ति वृद्धा ; न ते वृद्धा ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न सत्यमस्ति ; न तत्सत्यं यच्छलेनानुविद्धम् ॥ ०४९ ॥

सत्यं रूपं श्रुतं विद्या कौल्यं शीलं बलं धनम् ।
शौर्यं च चित्रभाष्यं च दश संसर्गयोनयः ॥ ०५० ॥

पापं कुर्वन्पापकीर्तिः पापमेवाश्नुते फलम् ।
पुण्यं कुर्वन्पुण्यकीर्तिः पुण्यमेवाश्नुते फलम् ॥ ०५१ ॥

पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः ।
नष्टप्रज्ञः पापमेव नित्यमारभते नरः ॥ ०५२ ॥

पुण्यं प्रज्ञां वर्धयति क्रियमाणं पुनः पुनः ।
वृद्धप्रज्ञः पुण्यमेव नित्यमारभते नरः ॥ ०५३ ॥

असूयको दन्दशूको निष्ठुरो वैरकृन्नरः ।
स कृच्छ्रं महदाप्नोति नचिरात्पापमाचरन् ॥ ०५४ ॥

अनसूयः कृतप्रज्ञः शोभनान्याचरन्सदा ।

अकृच्छ्रात्सुखमाप्नोति सर्वत्र च विराजते ॥ ०५५ ॥

प्रज्ञामेवागमयति यः प्राज्ञेभ्यः स पण्डितः ।
प्राज्ञो ह्यवाप्य धर्मार्थौ शक्नोति सुखमेधितुम् ॥ ०५६ ॥

दिवसेनैव तत्कुर्याद्येन रात्रौ सुखं वसेत् ।
अष्टमासेन तत्कुर्याद्येन वर्षाः सुखं वसेत् ॥ ०५७ ॥

पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत् ।
यावज्जीवेन तत्कुर्याद्येन प्रेत्य सुखं वसेत् ॥ ०५८ ॥

जीर्णमन्नं प्रशंसन्ति भार्यां च गतयौवनाम् ।
शूरं विगतसङ्ग्रामं गतपारं तपस्विनम् ॥ ०५९ ॥

धनेनाधर्मलब्धेन यच्छिद्रमपिधीयते ।
असंवृतं तद्भवति ततोऽन्यदवदीर्यते ॥ ०६० ॥

गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम् ।
अथ प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥ ०६१ ॥

ऋषीणां च नदीनां च कुलानां च महात्मनाम् ।
प्रभवो नाधिगन्तव्यः स्त्रीणां दुश्चरितस्य च ॥ ०६२ ॥

द्विजातिपूजाभिरतो दाता ज्ञातिषु चार्जवी ।
क्षत्रियः स्वर्गभाग्राजंश्चिरं पालयते महीम् ॥ ०६३ ॥

सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ ०६४ ॥

बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत ।
तानि जङ्घाजघन्यानि भारप्रत्यवराणि च ॥ ०६५ ॥

दुर्योधने च शकुनौ मूढे दुःशासने तथा ।
कर्णे चैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि ॥ ०६६ ॥

सर्वैर्गुणैरुपेताश्च पाण्डवा भरतर्षभ ।
पितृवत्त्वयि वर्तन्ते तेषु वर्तस्व पुत्रवत् ॥ ०६७ ॥

---

# अध्याय ०३६

विदुर उवाच ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
आत्रेयस्य च संवादं साध्यानां चेति नः श्रुतम् ॥ ००१ ॥

चरन्तं हंसरूपेण महर्षिं संशितव्रतम् ।
साध्या देवा महाप्राज्ञं पर्यपृच्छन्त वै पुरा ॥ ००२ ॥

साध्या देवा वयमस्मो महर्षे ; दृष्ट्वा भवन्तं न शक्नुमोऽनुमातुम् ।
श्रुतेन धीरो बुद्धिमांस्त्वं मतो नः ; काव्यां वाचं वक्तुमर्हस्युदाराम् ॥ ००३ ॥

हंस उवाच ॥

एतत्कार्यममराः संश्रुतं मे ; धृतिः शमः सत्यधर्मानुवृत्तिः ।
ग्रन्थिं विनीय हृदयस्य सर्वं ; प्रियाप्रिये चात्मवशं नयीत ॥ ००४ ॥

आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षितः ।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥ ००५ ॥

नाक्रोशी स्यान्नावमानी परस्य ; मित्रद्रोही नोत नीचोपसेवी ।
न चातिमानी न च हीनवृत्तो ; रूक्षां वाचं रुशतीं वर्जयीत ॥ ००६ ॥

मर्माण्यस्थीनि हृदयं तथासू ;न्घोरा वाचो निर्दहन्तीह पुंसाम् ।
तस्माद्वाचं रुशतीं रूक्षरूपां ; धर्मारामो नित्यशो वर्जयीत ॥ ००७ ॥

अरुंतुदं परुषं रूक्षवाचं ; वाक्कण्टकैर्वितुदन्तं मनुष्यान् ।
विद्यादलक्ष्मीकतमं जनानां ; मुखे निबद्धां निर्ऋतिं वहन्तम् ॥ ००८ ॥

परश्चेदेनमधिविध्येत बाणै ;र्भृशं सुतीक्ष्णैरनलार्कदीप्तैः ।
विरिच्यमानोऽप्यतिरिच्यमानो ; विद्यात्कविः सुकृतं मे दधाति ॥ ००९ ॥

यदि सन्तं सेवते यद्यसन्तं ; तपस्विनं यदि वा स्तेनमेव ।
वासो यथा रङ्गवशं प्रयाति ; तथा स तेषां वशमभ्युपैति ॥ ०१० ॥

वादं तु यो न प्रवदेन्न वादये ;द्यो नाहतः प्रतिहन्यान्न घातयेत् ।
यो हन्तुकामस्य न पापमिच्छे ;त्तस्मै देवाः स्पृहयन्त्यागताय ॥ ०११ ॥

अव्याहृतं व्याहृताच्छ्रेय आहुः ; सत्यं वदेद्व्याहृतं तद्द्वितीयम् ।
प्रियं वदेद्व्याहृतं तत्तृतीयं ; धर्म्यं वदेद्व्याहृतं तच्चतुर्थम् ॥ ०१२ ॥

यादृशैः संविवदते यादृशांश्चोपसेवते ।
यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः ॥ ०१३ ॥

यतो यतो निवर्तते ततस्ततो विमुच्यते ।
निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि ॥ ०१४ ॥

न जीयते नोत जिगीषतेऽन्या ;न्न वैरकृच्चाप्रतिघातकश्च ।
निन्दाप्रशंसासु समस्वभावो ; न शोचते हृष्यति नैव चायम् ॥ ०१५ ॥

भावमिच्छति सर्वस्य नाभावे कुरुते मतिम् ।
सत्यवादी मृदुर्दान्तो यः स उत्तमपूरुषः ॥ ०१६ ॥

नानर्थकं सान्त्वयति प्रतिज्ञाय ददाति च ।
राद्धापराद्धे जानाति यः स मध्यमपूरुषः ॥ ०१७ ॥

दुःशासनस्तूपहन्ता न शास्ता ; नावर्तते मन्युवशात्कृतघ्नः ।
न कस्यचिन्मित्रमथो दुरात्मा ; कलाश्चैता अधमस्येह पुंसः ॥ ०१८ ॥

न श्रद्दधाति कल्याणं परेभ्योऽप्यात्मशङ्कितः ।
निराकरोति मित्राणि यो वै सोऽधमपूरुषः ॥ ०१९ ॥

उत्तमानेव सेवेत प्राप्ते काले तु मध्यमान् ।
अधमांस्तु न सेवेत य इच्छेच्छ्रेय आत्मनः ॥ ०२० ॥

प्राप्नोति वै वित्तमसद्बलेन ; नित्योत्थानात्प्रज्ञया पौरुषेण ।
न त्वेव सम्यग्लभते प्रशंसां ; न वृत्तमाप्नोति महाकुलानाम् ॥ ०२१ ॥

धृतराष्ट्र उवाच ॥

महाकुलानां स्पृहयन्ति देवा ; धर्मार्थवृद्धाश्च बहुश्रुताश्च ।
पृच्छामि त्वां विदुर प्रश्नमेतं ; भवन्ति वै कानि महाकुलानि ॥ ०२२ ॥

विदुर उवाच ॥

तपो दमो ब्रह्मवित्त्वं वितानाः ; पुण्या विवाहाः सततान्नदानम् ।
येष्वेवैते सप्त गुणा भवन्ति ; सम्यग्वृत्तास्तानि महाकुलानि ॥ ०२३ ॥

येषां न वृत्तं व्यथते न योनि ;र्वृत्तप्रसादेन चरन्ति धर्मम् ।
ये कीर्तिमिच्छन्ति कुले विशिष्टां ; त्यक्तानृतास्तानि महाकुलानि ॥ ०२४ ॥

अनिज्ययाविवाहैश्च वेदस्योत्सादनेन च ।
कुलान्यकुलतां यान्ति धर्मस्यातिक्रमेण च ॥ ०२५ ॥

देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ ०२६ ॥

ब्राह्मणानां परिभवात्परिवादाच्च भारत ।
कुलान्यकुलतां यान्ति न्यासापहरणेन च ॥ ०२७ ॥

कुलानि समुपेतानि गोभिः पुरुषतोऽश्वतः ।
कुलसंख्यां न गच्छन्ति यानि हीनानि वृत्ततः ॥ ०२८ ॥

वृत्ततस्त्वविहीनानि कुलान्यल्पधनान्यपि ।
कुलसंख्यां तु गच्छन्ति कर्षन्ति च महद्यशः ॥ ०२९ ॥

मा नः कुले वैरकृत्कश्चिदस्तु ; राजामात्यो मा परस्वापहारी ।
मित्रद्रोही नैकृतिकोऽनृती वा ; पूर्वाशी वा पितृदेवातिथिभ्यः ॥ ०३० ॥

यश्च नो ब्राह्मणं हन्याद्यश्च नो ब्राह्मणान्द्विषेत् ।
न नः स समितिं गच्छेद्यश्च नो निर्वपेत्कृषिम् ॥ ०३१ ॥

तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥ ०३२ ॥

श्रद्धया परया राजन्नुपनीतानि सत्कृतिम् ।
प्रवृत्तानि महाप्राज्ञ धर्मिणां पुण्यकर्मणाम् ॥ ०३३ ॥

सूक्ष्मोऽपि भारं नृपते स्यन्दनो वै ; शक्तो वोढुं न तथान्ये महीजाः ।
एवं युक्ता भारसहा भवन्ति ; महाकुलीना न तथान्ये मनुष्याः ॥ ०३४ ॥

न तन्मित्रं यस्य कोपाद्बिभेति ; यद्वा मित्रं शङ्कितेनोपचर्यम् ।

यस्मिन्मित्रे पितरीवाश्वसीत ; तद्वै मित्रं सङ्गतानीतराणि ॥ ०३५ ॥

यदि चेदप्यसंबन्धो मित्रभावेन वर्तते ।
स एव बन्धुस्तन्मित्रं सा गतिस्तत्परायणम् ॥ ०३६ ॥

चलचित्तस्य वै पुंसो वृद्धाननुपसेवतः ।
पारिप्लवमतेर्नित्यमध्रुवो मित्रसङ्ग्रहः ॥ ०३७ ॥

चलचित्तमनात्मानमिन्द्रियाणां वशानुगम् ।
अर्थाः समतिवर्तन्ते हंसाः शुष्कं सरो यथा ॥ ०३८ ॥

अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः ।
शीलमेतदसाधूनामभ्रं पारिप्लवं यथा ॥ ०३९ ॥

सत्कृताश्च कृतार्थाश्च मित्राणां न भवन्ति ये ।
तान्मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ॥ ०४० ॥

अर्थयेदेव मित्राणि सति वासति वा धने ।
नानर्थयन्विजानाति मित्राणां सारफल्गुताम् ॥ ०४१ ॥

संतापाद्भ्रश्यते रूपं संतापाद्भ्रश्यते बलम् ।
संतापाद्भ्रश्यते ज्ञानं संतापाद्व्याधिमृच्छति ॥ ०४२ ॥

अनवाप्यं च शोकेन शरीरं चोपतप्यते ।
अमित्राश्च प्रहृष्यन्ति मा स्म शोके मनः कृथाः ॥ ०४३ ॥

पुनर्नरो म्रियते जायते च ; पुनर्नरो हीयते वर्धते पुनः ।
पुनर्नरो याचति याच्यते च ; पुनर्नरः शोचति शोच्यते पुनः ॥ ०४४ ॥

सुखं च दुःखं च भवाभवौ च ; लाभालाभौ मरणं जीवितं च ।
पर्यायशः सर्वमिह स्पृशन्ति ; तस्माद्धीरो नैव हृष्येन्न शोचेत् ॥ ०४५ ॥

चलानि हीमानि षडिन्द्रियाणि ; तेषां यद्यद्वर्तते यत्र यत्र ।
ततस्ततः स्रवते बुद्धिरस्य ; छिद्रोदकुम्भादिव नित्यमम्भः ॥ ०४६ ॥

धृतराष्ट्र उवाच ॥

तनुरुच्छः शिखी राजा मिथ्योपचरितो मया ।
मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ॥ ०४७ ॥

नित्योद्विग्नमिदं सर्वं नित्योद्विग्नमिदं मनः ।
यत्तत्पदमनुद्विग्नं तन्मे वद महामते ॥ ०४८ ॥

विदुर उवाच ॥

नान्यत्र विद्यातपसोर्नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र लोभसंत्यागाच्छान्तिं पश्यामि तेऽनघ ॥ ०४९ ॥

बुद्ध्या भयं प्रणुदति तपसा विन्दते महत् ।
गुरुशुश्रूषया ज्ञानं शान्तिं त्यागेन विन्दति ॥ ०५० ॥

अनाश्रिता दानपुण्यं वेदपुण्यमनाश्रिताः ।
रागद्वेषविनिर्मुक्ता विचरन्तीह मोक्षिणः ॥ ०५१ ॥

स्वधीतस्य सुयुद्धस्य सुकृतस्य च कर्मणः ।
तपसश्च सुतप्तस्य तस्यान्ते सुखमेधते ॥ ०५२ ॥

स्वास्तीर्णानि शयनानि प्रपन्ना ; न वै भिन्ना जातु निद्रां लभन्ते ।
न स्त्रीषु राजन्रतिमाप्नुवन्ति ; न मागधैः स्तूयमाना न सूतैः ॥ ०५३ ॥

न वै भिन्ना जातु चरन्ति धर्मं ; न वै सुखं प्राप्नुवन्तीह भिन्नाः ।
न वै भिन्ना गौरवं मानयन्ति ; न वै भिन्नाः प्रशमं रोचयन्ति ॥ ०५४ ॥

न वै तेषां स्वदते पथ्यमुक्तं ; योगक्षेमं कल्पते नोत तेषाम् ।
भिन्नानां वै मनुजेन्द्र परायणं ; न विद्यते किञ्चिदन्यद्विनाशात् ॥ ०५५ ॥

संभाव्यं गोषु संपन्नं संभाव्यं ब्राह्मणे तपः ।
संभाव्यं स्त्रीषु चापल्यं संभाव्यं ज्ञातितो भयम् ॥ ०५६ ॥

तन्तवोऽप्यायता नित्यं तन्तवो बहुलाः समाः ।
बहून्बहुत्वादायासान्सहन्तीत्युपमा सताम् ॥ ०५७ ॥

धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च ।
धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ ०५८ ॥

ब्राह्मणेषु च ये शूराः स्त्रीषु ज्ञातिषु गोषु च ।
वृन्तादिव फलं पक्वं धृतराष्ट्र पतन्ति ते ॥ ०५९ ॥

महानप्येकजो वृक्षो बलवान्सुप्रतिष्ठितः ।
प्रसह्य एव वातेन शाखास्कन्धं विमर्दितुम् ॥ ०६० ॥

अथ ये सहिता वृक्षाः संघशः सुप्रतिष्ठिताः ।
ते हि शीघ्रतमान्वातान्सहन्तेऽन्योन्यसंश्रयात् ॥ ०६१ ॥

एवं मनुष्यमप्येकं गुणैरपि समन्वितम् ।
शक्यं द्विषन्तो मन्यन्ते वायुर्द्रुममिवैकजम् ॥ ०६२ ॥

अन्योन्यसमुपष्टम्भादन्योन्यापाश्रयेण च ।
ज्ञातयः संप्रवर्धन्ते सरसीवोत्पलान्युत ॥ ०६३ ॥

अवध्या ब्राह्मणा गावः स्त्रियो बालाश्च ज्ञातयः ।
येषां चान्नानि भुञ्जीत ये च स्युः शरणागताः ॥ ०६४ ॥

न मनुष्ये गुणः कश्चिदन्यो धनवतामपि ।
अनातुरत्वाद्भद्रं ते मृतकल्पा हि रोगिणः ॥ ०६५ ॥

अव्याधिजं कटुकं शीर्षरोगं ; पापानुबन्धं परुषं तीक्ष्णमुग्रम् ।
सतां पेयं यन्न पिबन्त्यसन्तो ; मन्युं महाराज पिब प्रशाम्य ॥ ०६६ ॥

रोगार्दिता न फलान्याद्रियन्ते ; न वै लभन्ते विषयेषु तत्त्वम् ।
दुःखोपेता रोगिणो नित्यमेव ; न बुध्यन्ते धनभोगान्न सौख्यम् ॥ ०६७ ॥

पुरा ह्युक्तो नाकरोस्त्वं वचो मे ; द्यूते जितां द्रौपदीं प्रेक्ष्य राजन् ।
दुर्योधनं वारयेत्यक्षवत्यां ; कितवत्वं पण्डिता वर्जयन्ति ॥ ०६८ ॥

न तद्बलं यन्मृदुना विरुध्यते ; मिश्रो धर्मस्तरसा सेवितव्यः ।
प्रध्वंसिनी क्रूरसमाहिता श्री ;मृदुप्रौढा गच्छति पुत्रपौत्रान् ॥ ०६९ ॥

धार्तराष्ट्राः पाण्डवान्पालयन्तु ; पाण्डोः सुतास्तव पुत्रांश्च पान्तु ।
एकारिमित्राः कुरवो ह्येकमन्त्रा ; जीवन्तु राजन्सुखिनः समृद्धाः ॥ ०७० ॥

मेढीभूतः कौरवाणां त्वमद्य ; त्वय्याधीनं कुरुकुलमाजमीढ ।
पार्थान्बालान्वनवासप्रतप्ता ;न्गोपायस्व स्वं यशस्तात रक्षन् ॥ ०७१ ॥

संधत्स्व त्वं कौरवान्पाण्डुपुत्रै ;र्मा तेऽन्तरं रिपवः प्रार्थयन्तु ।
सत्ये स्थितास्ते नरदेव सर्वे ; दुर्योधनं स्थापय त्वं नरेन्द्र ॥ ०७२ ॥

---

# अध्याय ०३७

विदुर उवाच ॥

सप्तदशेमान्राजेन्द्र मनुः स्वायंभुवोऽब्रवीत् ।
वैचित्रवीर्य पुरुषानाकाशं मुष्टिभिर्घ्नतः ॥ ००१ ॥

तानेवेन्द्रस्य हि धनुरनाम्यं नमतोऽब्रवीत् ।
अथो मरीचिनः पादाननाम्यान्नमतस्तथा ॥ ००२ ॥

यश्चाशिष्यं शासति यश्च कुप्यते ; यश्चातिवेलं भजते द्विषन्तम् ।
स्त्रियश्च योऽरक्षति भद्रमस्तु ते ; यश्चायाच्यं याचति यश्च कत्थते ॥ ००३ ॥

यश्चाभिजातः प्रकरोत्यकार्यं ; यश्चाबलो बलिना नित्यवैरी ।
अश्रद्दधानाय च यो ब्रवीति ; यश्चाकाम्यं कामयते नरेन्द्र ॥ ००४ ॥

वध्वा हासं श्वशुरो यश्च मन्यते ; वध्वा वसन्नुत यो मानकामः ।
परक्षेत्रे निर्वपति यश्च बीजं ; स्त्रियं च यः परिवदतेऽतिवेलम् ॥ ००५ ॥

यश्चैव लब्ध्वा न स्मरामीत्युवाच ; दत्त्वा च यः कत्थति याच्यमानः ।
यश्चासतः सान्त्वमुपासतीह ; एतेऽनुयान्त्यनिलं पाशहस्ताः ॥ ००६ ॥

यस्मिन्यथा वर्तते यो मनुष्य ;स्तस्मिंस्तथा वर्तितव्यं स धर्मः ।
मायाचारो मायया वर्तितव्यः ; साध्वाचारः साधुना प्रत्युदेयः ॥ ००७ ॥

धृतराष्ट्र उवाच ॥

शतायुरुक्तः पुरुषः सर्ववेदेषु वै यदा ।
नाप्नोत्यथ च तत्सर्वमायुः केनेह हेतुना ॥ ००८ ॥

विदुर उवाच ॥

अतिवादोऽतिमानश्च तथात्यागो नराधिप ।
क्रोधश्चातिविवित्सा च मित्रद्रोहश्च तानि षट् ॥ ००९ ॥

एत एवासयस्तीक्ष्णाः कृन्तन्त्यायूंषि देहिनाम् ।
एतानि मानवान्घ्नन्ति न मृत्युर्भद्रमस्तु ते ॥ ०१० ॥

विश्वस्तस्यैति यो दारान्यश्चापि गुरुतल्पगः ।
वृषलीपतिर्द्विजो यश्च पानपश्चैव भारत ॥ ०११ ॥

शरणागतहा चैव सर्वे ब्रह्महणैः समाः ।
एतैः समेत्य कर्तव्यं प्रायश्चित्तमिति श्रुतिः ॥ ०१२ ॥

गृही वदान्योऽनपविद्धवाक्यः ; शेषान्नभोक्ताप्यविहिंसकश्च ।
नानर्थकृत्त्यक्तकलिः कृतज्ञः ; सत्यो मृदुः स्वर्गमुपैति विद्वान् ॥ ०१३ ॥

सुलभाः पुरुषा राजन्सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ ०१४ ॥

यो हि धर्मं व्यपाश्रित्य हित्वा भर्तुः प्रियाप्रिये ।
अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥ ०१५ ॥

त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ०१६ ॥

आपदर्थं धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ ०१७ ॥

उक्तं मया द्यूतकालेऽपि राज ;न्नैवं युक्तं वचनं प्रातिपीय ।
तदौषधं पथ्यमिवातुरस्य ; न रोचते तव वैचित्रवीर्य ॥ ०१८ ॥

काकैरिमांश्चित्रबर्हान्मयूरा ;न्पराजैष्ठाः पाण्डवान्धार्तराष्ट्रैः ।
हित्वा सिंहान्क्रोष्टुकान्गूहमानः ; प्राप्ते काले शोचिता त्वं नरेन्द्र ॥ ०१९ ॥

यस्तात न क्रुध्यति सर्वकालं ; भृत्यस्य भक्तस्य हिते रतस्य ।
तस्मिन्भृत्या भर्तरि विश्वसन्ति ; न चैनमापत्सु परित्यजन्ति ॥ ०२० ॥

न भृत्यानां वृत्तिसंरोधनेन ; बाह्यं जनं सञ्जिघृक्षेदपूर्वम् ।
त्यजन्ति ह्येनमुचितावरुद्धाः ; स्निग्धा ह्यमात्याः परिहीनभोगाः ॥ ०२१ ॥

कृत्यानि पूर्वं परिसंख्याय सर्वा ;ण्यायव्ययावनुरूपां च वृत्तिम् ।
सङ्गृह्णीयादनुरूपान्सहाया ;न्सहायसाध्यानि हि दुष्कराणि ॥ ०२२ ॥

अभिप्रायं यो विदित्वा तु भर्तुः ; सर्वाणि कार्याणि करोत्यतन्द्रीः ।
वक्ता हितानामनुरक्त आर्यः ; शक्तिज्ञ आत्मेव हि सोऽनुकम्प्यः ॥ ०२३ ॥

वाक्यं तु यो नाद्रियतेऽनुशिष्टः ; प्रत्याह यश्चापि नियुज्यमानः ।
प्रज्ञाभिमानी प्रतिकूलवादी ; त्याज्यः स तादृक्त्वरयैव भृत्यः ॥ ०२४ ॥

अस्तब्धमक्लीबमदीर्घसूत्रं ; सानुक्रोशं श्लक्ष्णमहार्यमन्यैः ।
अरोगजातीयमुदारवाक्यं ; दूतं वदन्त्यष्टगुणोपपन्नम् ॥ ०२५ ॥

न विश्वासाज्जातु परस्य गेहं ; गच्छेन्नरश्चेतयानो विकाले ।
न चत्वरे निशि तिष्ठेन्निगूढो ; न राजन्यां योषितं प्रार्थयीत ॥ ०२६ ॥

न निह्नवं सत्रगतस्य गच्छे ;त्संसृष्टमन्त्रस्य कुसङ्गतस्य ।
न च ब्रूयान्नाश्वसामि त्वयीति ; सकारणं व्यपदेशं तु कुर्यात् ॥ ०२७ ॥

घृणी राजा पुंश्चली राजभृत्यः ; पुत्रो भ्राता विधवा बालपुत्रा ।
सेनाजीवी चोद्धृतभक्त एव ; व्यवहारे वै वर्जनीयाः स्युरेते ॥ ०२८ ॥

गुणा दश स्नानशीलं भजन्ते ; बलं रूपं स्वरवर्णप्रशुद्धिः ।
स्पर्शश्च गन्धश्च विशुद्धता च ; श्रीः सौकुमार्यं प्रवराश्च नार्यः ॥ ०२९ ॥

गुणाश्च षण्मितभुक्तं भजन्ते ; आरोग्यमायुश्च सुखं बलं च ।

अनाविलं चास्य भवेदपत्यं ; न चैनमाद्यून इति क्षिपन्ति ॥ ०३० ॥

अकर्मशीलं च महाशनं च ; लोकद्विष्टं बहुमायं नृशंसम् ।
अदेशकालज्ञमनिष्टवेष ;मेतान्गृहे न प्रतिवासयीत ॥ ०३१ ॥

कदर्यमाक्रोशकमश्रुतं च ; वराकसंभूतममान्यमानिनम् ।
निष्ठूरिणं कृतवैरं कृतघ्न ;मेतान्भृशार्तोऽपि न जातु याचेत् ॥ ०३२ ॥

सङ्क्लिष्टकर्माणमतिप्रवादं ; नित्यानृतं चादृढभक्तिकं च ।
विकृष्टरागं बहुमानिनं चा ;प्येतान्न सेवेत नराधमान्षट् ॥ ०३३ ॥

सहायबन्धना ह्यर्थाः सहायाश्चार्थबन्धनाः ।
अन्योन्यबन्धनावेतौ विनान्योन्यं न सिध्यतः ॥ ०३४ ॥

उत्पाद्य पुत्राननृणांश्च कृत्वा ; वृत्तिं च तेभ्योऽनुविधाय काञ्चित् ।
स्थाने कुमारीः प्रतिपाद्य सर्वा ; अरण्यसंस्थो मुनिवद्बुभूषेत् ॥ ०३५ ॥

हितं यत्सर्वभूतानामात्मनश्च सुखावहम् ।
तत्कुर्यादीश्वरो ह्येतन्मूलं धर्मार्थसिद्धये ॥ ०३६ ॥

बुद्धिः प्रभावस्तेजश्च सत्त्वमुत्थानमेव च ।
व्यवसायश्च यस्य स्यात्तस्यावृत्तिभयं कुतः ॥ ०३७ ॥

पश्य दोषान्पाण्डवैर्विग्रहे त्वं ; यत्र व्यथेरन्नपि देवाः सशक्राः ।
पुत्रैर्वैरं नित्यमुद्विग्नवासो ; यशःप्रणाशो द्विषतां च हर्षः ॥ ०३८ ॥

भीष्मस्य कोपस्तव चेन्द्रकल्प ; द्रोणस्य राज्ञश्च युधिष्ठिरस्य ।
उत्सादयेल्लोकमिमं प्रवृद्धः ; श्वेतो ग्रहस्तिर्यगिवापतन्खे ॥ ०३९ ॥

तव पुत्रशतं चैव कर्णः पञ्च च पाण्डवाः ।
पृथिवीमनुशासेयुरखिलां सागराम्बराम् ॥ ०४० ॥

धार्तराष्ट्रा वनं राजन्व्याघ्राः पाण्डुसुता मताः ।
मा वनं छिन्धि सव्याघ्रं मा व्याघ्रान्नीनशो वनात् ॥ ०४१ ॥

न स्याद्वनमृते व्याघ्रान्व्याघ्रा न स्युर्ऋते वनम् ।
वनं हि रक्ष्यते व्याघ्रैर्व्याघ्रान्रक्षति काननम् ॥ ०४२ ॥

न तथेच्छन्त्यकल्याणाः परेषां वेदितुं गुणान् ।
यथैषां ज्ञातुमिच्छन्ति नैर्गुण्यं पापचेतसः ॥ ०४३ ॥

अर्थसिद्धिं परामिच्छन्धर्ममेवादितश्चरेत् ।
न हि धर्मादपैत्यर्थः स्वर्गलोकादिवामृतम् ॥ ०४४ ॥

यस्यात्मा विरतः पापात्कल्याणे च निवेशितः ।
तेन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या ॥ ०४५ ॥

यो धर्ममर्थं कामं च यथाकालं निषेवते ।
धर्मार्थकामसंयोगं सोऽमुत्रेह च विन्दति ॥ ०४६ ॥

संनियच्छति यो वेगमुत्थितं क्रोधहर्षयोः ।
स श्रियो भाजनं राजन्यश्चापत्सु न मुह्यति ॥ ०४७ ॥

बलं पञ्चविधं नित्यं पुरुषाणां निबोध मे ।
यत्तु बाहुबलं नाम कनिष्ठं बलमुच्यते ॥ ०४८ ॥

अमात्यलाभो भद्रं ते द्वितीयं बलमुच्यते ।
धनलाभस्तृतीयं तु बलमाहुर्जिगीषवः ॥ ०४९ ॥

यत्त्वस्य सहजं राजन्पितृपैतामहं बलम् ।
अभिजातबलं नाम तच्चतुर्थं बलं स्मृतम् ॥ ०५० ॥

येन त्वेतानि सर्वाणि सङ्गृहीतानि भारत ।
यद्बलानां बलं श्रेष्ठं तत्प्रज्ञाबलमुच्यते ॥ ०५१ ॥

महते योऽपकाराय नरस्य प्रभवेन्नरः ।
तेन वैरं समासज्य दूरस्थोऽस्मीति नाश्वसेत् ॥ ०५२ ॥

स्त्रीषु राजसु सर्पेषु स्वाध्याये शत्रुसेविषु ।
भोगे चायुषि विश्वासं कः प्राज्ञः कर्तुमर्हति ॥ ०५३ ॥

प्रज्ञाशरेणाभिहतस्य जन्तो ;श्चिकित्सकाः सन्ति न चौषधानि ।
न होममन्त्रा न च मङ्गलानि ; नाथर्वणा नाप्यगदाः सुसिद्धाः ॥ ०५४ ॥

सर्पश्चाग्निश्च सिंहश्च कुलपुत्रश्च भारत ।
नावज्ञेया मनुष्येण सर्वे ते ह्यतितेजसः ॥ ०५५ ॥

अग्निस्तेजो महल्लोके गूढस्तिष्ठति दारुषु ।
न चोपयुङ्क्ते तद्दारु यावन्नो दीप्यते परैः ॥ ०५६ ॥

स एव खलु दारुभ्यो यदा निर्मथ्य दीप्यते ।
तदा तच्च वनं चान्यन्निर्दहत्याशु तेजसा ॥ ०५७ ॥

एवमेव कुले जाताः पावकोपमतेजसः ।
क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते ॥ ०५८ ॥

लताधर्मा त्वं सपुत्रः शालाः पाण्डुसुता मताः ।
न लता वर्धते जातु महाद्रुममनाश्रिता ॥ ०५९ ॥

वनं राजंस्त्वं सपुत्रोऽम्बिकेय ; सिंहान्वने पाण्डवांस्तात विद्धि ।
सिंहैर्विहीनं हि वनं विनश्ये ;त्सिंहा विनश्येयुर्ऋते वनेन ॥ ०६० ॥

# अध्याय ०३८

विदुर उवाच ॥

ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥ ००१ ॥

पीठं दत्त्वा साधवेऽभ्यागताय ; आनीयापः परिनिर्णिज्य पादौ ।
सुखं पृष्ट्वा प्रतिवेद्यात्मसंस्थं ; ततो दद्यादन्नमवेक्ष्य धीरः ॥ ००२ ॥

यस्योदकं मधुपर्कं च गां च ; नमन्त्रवित्प्रतिगृह्णाति गेहे ।
लोभाद्भयादर्थकार्पण्यतो वा ; तस्यानर्थं जीवितमाहुरार्याः ॥ ००३ ॥

चिकित्सकः शल्यकर्तावकीर्णी ; स्तेनः क्रूरो मद्यपो भ्रूणहा च ।
सेनाजीवी श्रुतिविक्रायकश्च ; भृशं प्रियोऽप्यतिथिर्नोदकार्हः ॥ ००४ ॥

अविक्रेयं लवणं पक्वमन्नं ; दधि क्षीरं मधु तैलं घृतं च ।
तिला मांसं मूलफलानि शाकं ; रक्तं वासः सर्वगन्धा गुडश्च ॥ ००५ ॥

अरोषणो यः समलोष्टकाञ्चनः ; प्रहीणशोको गतसंधिविग्रहः ।
निन्दाप्रशंसोपरतः प्रियाप्रिये ; चरन्नुदासीनवदेष भिक्षुकः ॥ ००६ ॥

नीवारमूलेङ्गुदशाकवृत्तिः ; सुसंयतात्माग्निकार्येष्वचोद्यः ।
वने वसन्नतिथिष्वप्रमत्तो ; धुरंधरः पुण्यकृदेष तापसः ॥ ००७ ॥

अपकृत्वा बुद्धिमतो दूरस्थोऽस्मीति नाश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥ ००८ ॥

न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ ००९ ॥

अनीर्ष्युर्गुप्तदारः स्यात्संविभागी प्रियंवदः ।
श्लक्ष्णो मधुरवाक्स्त्रीणां न चासां वशगो भवेत् ॥ ०१० ॥

पूजनीया महाभागाः पुण्याश्च गृहदीप्तयः ।
स्त्रियः श्रियो गृहस्योक्तास्तस्माद्रक्ष्या विशेषतः ॥ ०११ ॥

पितुरन्तःपुरं दद्यान्मातुर्दद्यान्महानसम् ।
गोषु चात्मसमं दद्यात्स्वयमेव कृषिं व्रजेत् ॥ ०१२ ॥

भृत्यैर्वणिज्याचारं च पुत्रैः सेवेत ब्राह्मणान् ॥ ०१२ ॥

अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ ०१३ ॥

नित्यं सन्तः कुले जाताः पावकोपमतेजसः ।
क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते ॥ ०१४ ॥

यस्य मन्त्रं न जानन्ति बाह्याश्चाभ्यन्तराश्च ये ।
स राजा सर्वतश्चक्षुश्चिरमैश्वर्यमश्नुते ॥ ०१५ ॥

करिष्यन्न प्रभाषेत कृतान्येव च दर्शयेत् ।
धर्मकामार्थकार्याणि तथा मन्त्रो न भिद्यते ॥ ०१६ ॥

गिरिपृष्ठमुपारुह्य प्रासादं वा रहोगतः ।
अरण्ये निःशलाके वा तत्र मन्त्रो विधीयते ॥ ०१७ ॥

नासुहृत्परमं मन्त्रं भारतार्हति वेदितुम् ।
अपण्डितो वापि सुहृत्पण्डितो वाप्यनात्मवान् ॥ ०१८ ॥

अमात्ये ह्यर्थलिप्सा च मन्त्ररक्षणमेव च ॥ ०१८ ॥

कृतानि सर्वकार्याणि यस्य वा पार्षदा विदुः ।
गूढमन्त्रस्य नृपतेस्तस्य सिद्धिरसंशयम् ॥ ०१९ ॥

अप्रशस्तानि कर्माणि यो मोहादनुतिष्ठति ।
स तेषां विपरिभ्रंशे भ्रश्यते जीवितादपि ॥ ०२० ॥

कर्मणां तु प्रशस्तानामनुष्ठानं सुखावहम् ।
तेषामेवाननुष्ठानं पश्चात्तापकरं महत् ॥ ०२१ ॥

स्थानवृद्धिक्षयज्ञस्य षाड्गुण्यविदितात्मनः ।
अनवज्ञातशीलस्य स्वाधीना पृथिवी नृप ॥ ०२२ ॥

अमोघक्रोधहर्षस्य स्वयं कृत्यान्ववेक्षिणः ।
आत्मप्रत्ययकोशस्य वसुधेयं वसुंधरा ॥ ०२३ ॥

नाममात्रेण तुष्येत छत्रेण च महीपतिः ।
भृत्येभ्यो विसृजेदर्थान्नैकः सर्वहरो भवेत् ॥ ०२४ ॥

ब्राह्मणो ब्राह्मणं वेद भर्ता वेद स्त्रियं तथा ।
अमात्यं नृपतिर्वेद राजा राजानमेव च ॥ ०२५ ॥

न शत्रुरङ्कमापन्नो मोक्तव्यो वध्यतां गतः ।
अहताद्धि भयं तस्माज्जायते नचिरादिव ॥ ०२६ ॥

दैवतेषु च यत्नेन राजसु ब्राह्मणेषु च ।
नियन्तव्यः सदा क्रोधो वृद्धबालातुरेषु च ॥ ०२७ ॥

निरर्थं कलहं प्राज्ञो वर्जयेन्मूढसेवितम् ।

कीर्तिं च लभते लोके न चानर्थेन युज्यते ॥ ०२८ ॥

प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः ।
न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः ॥ ०२९ ॥

न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये ।
लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः ॥ ०३० ॥

विद्याशीलवयोवृद्धान्बुद्धिवृद्धांश्च भारत ।
धनाभिजनवृद्धांश्च नित्यं मूढोऽवमन्यते ॥ ०३१ ॥

अनार्यवृत्तमप्राज्ञमसूयकमधार्मिकम् ।
अनर्थाः क्षिप्रमायान्ति वाग्दुष्टं क्रोधनं तथा ॥ ०३२ ॥

अविसंवादनं दानं समयस्याव्यतिक्रमः ।
आवर्तयन्ति भूतानि सम्यक्प्रणिहिता च वाक् ॥ ०३३ ॥

अविसंवादको दक्षः कृतज्ञो मतिमानृजुः ।
अपि सङ्क्षीणकोशोऽपि लभते परिवारणम् ॥ ०३४ ॥

धृतिः शमो दमः शौचं कारुण्यं वागनिष्ठुरा ।
मित्राणां चानभिद्रोहः सप्तैताः समिधः श्रियः ॥ ०३५ ॥

असंविभागी दुष्टात्मा कृतघ्नो निरपत्रपः ।
तादृङ्नराधमो लोके वर्जनीयो नराधिप ॥ ०३६ ॥

न स रात्रौ सुखं शेते ससर्प इव वेश्मनि ।
यः कोपयति निर्दोषं सदोषोऽभ्यन्तरं जनम् ॥ ०३७ ॥

येषु दुष्टेषु दोषः स्याद्योगक्षेमस्य भारत ।
सदा प्रसादनं तेषां देवतानामिवाचरेत् ॥ ०३८ ॥

येऽर्थाः स्त्रीषु समासक्ताः प्रथमोत्पतितेषु च ।
ये चानार्यसमासक्ताः सर्वे ते संशयं गताः ॥ ०३९ ॥

यत्र स्त्री यत्र कितवो यत्र बालोऽनुशास्ति च ।
मज्जन्ति तेऽवशा देशा नद्यामश्मप्लवा इव ॥ ०४० ॥

प्रयोजनेषु ये सक्ता न विशेषेषु भारत ।
तानहं पण्डितान्मन्ये विशेषा हि प्रसङ्गिनः ॥ ०४१ ॥

यं प्रशंसन्ति कितवा यं प्रशंसन्ति चारणाः ।
यं प्रशंसन्ति बन्धक्यो न स जीवति मानवः ॥ ०४२ ॥

हित्वा तान्परमेष्वासान्पाण्डवानमितौजसः ।
आहितं भारतैश्वर्यं त्वया दुर्योधने महत् ॥ ०४३ ॥

तं द्रक्ष्यसि परिभ्रष्टं तस्मात्त्वं नचिरादिव ।
ऐश्वर्यमदसंमूढं बलिं लोकत्रयादिव ॥ ०४४ ॥

---

# अध्याय ०३९

धृतराष्ट्र उवाच ॥

अनीश्वरोऽयं पुरुषो भवाभवे ; सूत्रप्रोता दारुमयीव योषा ।
धात्रा तु दिष्टस्य वशे किलायं ; तस्माद्वद त्वं श्रवणे धृतोऽहम् ॥ ००१ ॥

विदुर उवाच ॥

अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन् ।
लभते बुद्ध्यवज्ञानमवमानं च भारत ॥ ००२ ॥

प्रियो भवति दानेन प्रियवादेन चापरः ।
मन्त्रं मूलबलेनान्यो यः प्रियः प्रिय एव सः ॥ ००३ ॥

द्वेष्यो न साधुर्भवति न मेधावी न पण्डितः ।
प्रिये शुभानि कर्माणि द्वेष्ये पापानि भारत ॥ ००४ ॥

न स क्षयो महाराज यः क्षयो वृद्धिमावहेत् ।
क्षयः स त्विह मन्तव्यो यं लब्ध्वा बहु नाशयेत् ॥ ००५ ॥

समृद्धा गुणतः केचिद्भवन्ति धनतोऽपरे ।
धनवृद्धान्गुणैर्हीनान्धृतराष्ट्र विवर्जयेत् ॥ ००६ ॥

धृतराष्ट्र उवाच ॥

सर्वं त्वमायतीयुक्तं भाषसे प्राज्ञसंमतम् ।
न चोत्सहे सुतं त्यक्तुं यतो धर्मस्ततो जयः ॥ ००७ ॥

विदुर उवाच ॥

स्वभावगुणसंपन्नो न जातु विनयान्वितः ।
सुसूक्ष्ममपि भूतानामुपमर्दं प्रयोक्ष्यते ॥ ००८ ॥

परापवादनिरताः परदुःखोदयेषु च ।
परस्परविरोधे च यतन्ते सततोत्थिताः ॥ ००९ ॥

सदोषं दर्शनं येषां संवासे सुमहद्भयम् ।
अर्थादाने महान्दोषः प्रदाने च महद्भयम् ॥ ०१० ॥

ये पापा इति विख्याताः संवासे परिगर्हिताः ।
युक्ताश्चान्यैर्महादोषैर्ये नरास्तान्विवर्जयेत् ॥ ०११ ॥

निवर्तमाने सौहार्दे प्रीतिर्नीचे प्रणश्यति ।
या चैव फलनिर्वृत्तिः सौहृदे चैव यत्सुखम् ॥ ०१२ ॥

यतते चापवादाय यत्नमारभते क्षये ।
अल्पेऽप्यपकृते मोहान्न शान्तिमुपगच्छति ॥ ०१३ ॥

तादृशैः सङ्गतं नीचैर्नृशंसैरकृतात्मभिः ।
निशाम्य निपुणं बुद्ध्या विद्वान्दूराद्विवर्जयेत् ॥ ०१४ ॥

यो ज्ञातिमनुगृह्णाति दरिद्रं दीनमातुरम् ।
स पुत्रपशुभिर्वृद्धिं यशश्चाव्ययमश्नुते ॥ ०१५ ॥

ज्ञातयो वर्धनीयास्तैर्य इच्छन्त्यात्मनः शुभम् ।
कुलवृद्धिं च राजेन्द्र तस्मात्साधु समाचर ॥ ०१६ ॥

श्रेयसा योक्ष्यसे राजन्कुर्वाणो ज्ञातिसत्क्रियाम् ।
विगुणा ह्यपि संरक्ष्या ज्ञातयो भरतर्षभ ॥ ०१७ ॥

किं पुनर्गुणवन्तस्ते त्वत्प्रसादाभिकाङ्क्षिणः ।
प्रसादं कुरु दीनानां पाण्डवानां विशां पते ॥ ०१८ ॥

दीयन्तां ग्रामकाः केचित्तेषां वृत्त्यर्थमीश्वर ।
एवं लोके यशःप्राप्तो भविष्यसि नराधिप ॥ ०१९ ॥

वृद्धेन हि त्वया कार्यं पुत्राणां तात रक्षणम् ।
मया चापि हितं वाच्यं विद्धि मां त्वद्धितैषिणम् ॥ ०२० ॥

ज्ञातिभिर्विग्रहस्तात न कर्तव्यो भवार्थिना ।

सुखानि सह भोज्यानि ज्ञातिभिर्भरतर्षभ ॥ ०२१ ॥

संभोजनं सङ्कथनं संप्रीतिश्च परस्परम् ।
ज्ञातिभिः सह कार्याणि न विरोधः कथञ्चन ॥ ०२२ ॥

ज्ञातयस्तारयन्तीह ज्ञातयो मज्जयन्ति च ।
सुवृत्तास्तारयन्तीह दुर्वृत्ता मज्जयन्ति च ॥ ०२३ ॥

सुवृत्तो भव राजेन्द्र पाण्डवान्प्रति मानद ।
अधर्षणीयः शत्रूणां तैर्वृतस्त्वं भविष्यसि ॥ ०२४ ॥

श्रीमन्तं ज्ञातिमासाद्य यो ज्ञातिरवसीदति ।
दिग्धहस्तं मृग इव स एनस्तस्य विन्दति ॥ ०२५ ॥

पश्चादपि नरश्रेष्ठ तव तापो भविष्यति ।
तान्वा हतान्सुतान्वापि श्रुत्वा तदनुचिन्तय ॥ ०२६ ॥

येन खट्वां समारूढः परितप्येत कर्मणा ।
आदावेव न तत्कुर्यादध्रुवे जीविते सति ॥ ०२७ ॥

न कश्चिन्नापनयते पुमानन्यत्र भार्गवात् ।
शेषसंप्रतिपत्तिस्तु बुद्धिमत्स्वेव तिष्ठति ॥ ०२८ ॥

दुर्योधनेन यद्येतत्पापं तेषु पुरा कृतम् ।
त्वया तत्कुलवृद्धेन प्रत्यानेयं नरेश्वर ॥ ०२९ ॥

तांस्त्वं पदे प्रतिष्ठाप्य लोके विगतकल्मषः ।
भविष्यसि नरश्रेष्ठ पूजनीयो मनीषिणाम् ॥ ०३० ॥

सुव्याहृतानि धीराणां फलतः प्रविचिन्त्य यः ।
अध्यवस्यति कार्येषु चिरं यशसि तिष्ठति ॥ ०३१ ॥

अवृत्तिं विनयो हन्ति हन्त्यनर्थं पराक्रमः ।
हन्ति नित्यं क्षमा क्रोधमाचारो हन्त्यलक्षणम्  ॥ ०३२  ॥

परिच्छदेन क्षेत्रेण वेश्मना परिचर्यया ।
परीक्षेत कुलं राजन्भोजनाच्छादनेन च  ॥ ०३३  ॥

ययोश्चित्तेन वा चित्तं नैभृतं नैभृतेन वा ।
समेति प्रज्ञया प्रज्ञा तयोर्मैत्री न जीर्यते  ॥ ०३४  ॥

दुर्बुद्धिमकृतप्रज्ञं छन्नं कूपं तृणैरिव ।
विवर्जयीत मेधावी तस्मिन्मैत्री प्रणश्यति  ॥ ०३५  ॥

अवलिप्तेषु मूर्खेषु रौद्रसाहसिकेषु च ।
तथैवापेतधर्मेषु न मैत्रीमाचरेद्बुधः  ॥ ०३६  ॥

कृतज्ञं धार्मिकं सत्यमक्षुद्रं दृढभक्तिकम् ।
जितेन्द्रियं स्थितं स्थित्यां मित्रमत्यागि चेष्यते  ॥ ०३७  ॥

इन्द्रियाणामनुत्सर्गो मृत्युना न विशिष्यते ।
अत्यर्थं पुनरुत्सर्गः सादयेद्दैवतान्यपि  ॥ ०३८  ॥

मार्दवं सर्वभूतानामनसूया क्षमा धृतिः ।
आयुष्याणि बुधाः प्राहुर्मित्राणां चाविमानना  ॥ ०३९  ॥

अपनीतं सुनीतेन योऽर्थं प्रत्यानिनीषते ।
मतिमास्थाय सुदृढां तदकापुरुषव्रतम्  ॥ ०४०  ॥

आयत्यां प्रतिकारज्ञस्तदात्वे दृढनिश्चयः ।
अतीते कार्यशेषज्ञो नरोऽर्थैर्न प्रहीयते  ॥ ०४१  ॥

कर्मणा मनसा वाचा यदभीक्ष्णं निषेवते ।
तदेवापहरत्येनं तस्मात्कल्याणमाचरेत् ॥ ०४२ ॥

मङ्गलालम्भनं योगः श्रुतमुत्थानमार्जवम् ।
भूतिमेतानि कुर्वन्ति सतां चाभीक्ष्णदर्शनम् ॥ ०४३ ॥

अनिर्वेदः श्रियो मूलं दुःखनाशे सुखस्य च ।
महान्भवत्यनिर्विण्णः सुखं चात्यन्तमश्नुते ॥ ०४४ ॥

नातः श्रीमत्तरं किञ्चिदन्यत्पथ्यतमं तथा ।
प्रभविष्णोर्यथा तात क्षमा सर्वत्र सर्वदा ॥ ०४५ ॥

क्षमेदशक्तः सर्वस्य शक्तिमान्धर्मकारणात् ।
अर्थानर्थौ समौ यस्य तस्य नित्यं क्षमा हिता ॥ ०४६ ॥

यत्सुखं सेवमानोऽपि धर्मार्थाभ्यां न हीयते ।
कामं तदुपसेवेत न मूढव्रतमाचरेत् ॥ ०४७ ॥

दुःखार्तेषु प्रमत्तेषु नास्तिकेष्वलसेषु च ।
न श्रीर्वसत्यदान्तेषु ये चोत्साहविवर्जिताः ॥ ०४८ ॥

आर्जवेन नरं युक्तमार्जवात्सव्यपत्रपम् ।
अशक्तिमन्तं मन्यन्तो धर्षयन्ति कुबुद्धयः ॥ ०४९ ॥

अत्यार्यमतिदातारमतिशूरमतिव्रतम् ।
प्रज्ञाभिमानिनं चैव श्रीर्भयान्नोपसर्पति ॥ ०५० ॥

अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम् ।
रतिपुत्रफला दारा दत्तभुक्तफलं धनम् ॥ ०५१ ॥

अधर्मोपार्जितैरर्थैर्यः करोत्यौर्ध्वदेहिकम् ।

न स तस्य फलं प्रेत्य भुङ्क्तेऽर्थस्य दुरागमात् ॥ ०५२ ॥

कान्तारवनदुर्गेषु कृच्छ्रास्वापत्सु संभ्रमे ।
उद्यतेषु च शस्त्रेषु नास्ति शेषवतां भयम् ॥ ०५३ ॥

उत्थानं संयमो दाक्ष्यमप्रमादो धृतिः स्मृतिः ।
समीक्ष्य च समारम्भो विद्धि मूलं भवस्य तत् ॥ ०५४ ॥

तपो बलं तापसानां ब्रह्म ब्रह्मविदां बलम् ।
हिंसा बलमसाधूनां क्षमा गुणवतां बलम् ॥ ०५५ ॥

अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥ ०५६ ॥

न तत्परस्य संदध्यात्प्रतिकूलं यदात्मनः ।
सङ्ग्रहेणैष धर्मः स्यात्कामादन्यः प्रवर्तते ॥ ०५७ ॥

अक्रोधेन जयेत्क्रोधमसाधुं साधुना जयेत् ।
जयेत्कदर्यं दानेन जयेत्सत्येन चानृतम् ॥ ०५८ ॥

स्त्रीधूर्तकेऽलसे भीरौ चण्डे पुरुषमानिनि ।
चौरे कृतघ्ने विश्वासो न कार्यो न च नास्तिके ॥ ०५९ ॥

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि संप्रवर्धन्ते कीर्तिरायुर्यशोबलम् ॥ ०६० ॥

अतिक्लेशेन येऽर्थाः स्युर्धर्मस्यातिक्रमेण च ।
अरेर्वा प्रणिपातेन मा स्म तेषु मनः कृथाः ॥ ०६१ ॥

अविद्यः पुरुषः शोच्यः शोच्यं मिथुनमप्रजम् ।
निराहाराः प्रजाः शोच्याः शोच्यं राष्ट्रमराजकम् ॥ ०६२ ॥

अध्वा जरा देहवतां पर्वतानां जलं जरा ।
असंभोगो जरा स्त्रीणां वाक्शल्यं मनसो जरा ॥ ०६३ ॥

अनाम्नायमला वेदा ब्राह्मणस्याव्रतं मलम् ।
कौतूहलमला साध्वी विप्रवासमलाः स्त्रियः ॥ ०६४ ॥

सुवर्णस्य मलं रूप्यं रूप्यस्यापि मलं त्रपु ।
ज्ञेयं त्रपुमलं सीसं सीसस्यापि मलं मलम् ॥ ०६५ ॥

न स्वप्नेन जयेन्निद्रां न कामेन स्त्रियं जयेत् ।
नेन्धनेन जयेदग्निं न पानेन सुरां जयेत् ॥ ०६६ ॥

यस्य दानजितं मित्रममित्रा युधि निर्जिताः ।
अन्नपानजिता दाराः सफलं तस्य जीवितम् ॥ ०६७ ॥

सहस्रिणोऽपि जीवन्ति जीवन्ति शतिनस्तथा ।
धृतराष्ट्रं विमुञ्चेच्छां न कथञ्चिन्न जीव्यते ॥ ०६८ ॥

यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तत्सर्वमिति पश्यन्न मुह्यति ॥ ०६९ ॥

राजन्भूयो ब्रवीमि त्वां पुत्रेषु सममाचर ।
समता यदि ते राजन्स्वेषु पाण्डुसुतेषु च ॥ ०७० ॥

---

# अध्याय ०४०

विदुर उवाच ॥

योऽभ्यर्थितः सद्भिरसज्जमानः ; करोत्यर्थं शक्तिमहापयित्वा ।
क्षिप्रं यशस्तं समुपैति सन्तमलं ; प्रसन्ना हि सुखाय सन्तः ॥ ००१ ॥

महान्तमप्यर्थमधर्मयुक्तं ; यः संत्यजत्यनुपाकृष्ट एव ।
सुखं स दुःखान्यवमुच्य शेते ; जीर्णां त्वचं सर्प इवावमुच्य ॥ ००२ ॥

अनृतं च समुत्कर्षे राजगामि च पैशुनम् ।
गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ॥ ००३ ॥

असूयैकपदं मृत्युरतिवादः श्रियो वधः ।
अशुश्रूषा त्वरा श्लाघा विद्यायाः शत्रवस्त्रयः ॥ ००४ ॥

सुखार्थिनः कुतो विद्या नास्ति विद्यार्थिनः सुखम् ।
सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा सुखं त्यजेत् ॥ ००५ ॥

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥ ००६ ॥

आशा धृतिं हन्ति समृद्धिमन्तकः ; क्रोधः श्रियं हन्ति यशः कदर्यता ।
अपालनं हन्ति पशूंश्च राज ;न्नेकः क्रुद्धो ब्राह्मणो हन्ति राष्ट्रम् ॥ ००७ ॥

अजश्च कांस्यं च रथश्च नित्यं ; मध्वाकर्षः शकुनिः श्रोत्रियश्च ।
वृद्धो ज्ञातिरवसन्नो वयस्य ; एतानि ते सन्तु गृहे सदैव ॥ ००८ ॥

अजोक्षा चन्दनं वीणा आदर्शो मधुसर्पिषी ।
विषमौदुम्बरं शङ्खः स्वर्णं नाभिश्च रोचना ॥ ००९ ॥

गृहे स्थापयितव्यानि धन्यानि मनुरब्रवीत् ।
देवब्राह्मणपूजार्थमतिथीनां च भारत ॥ ०१० ॥

इदं च त्वां सर्वपरं ब्रवीमि ; पुण्यं पदं तात महाविशिष्टम् ।
न जातु कामान्न भयान्न लोभा ;द्धर्मं त्यजेज्जीवितस्यापि हेतोः ॥ ०११ ॥

नित्यो धर्मः सुखदुःखे त्वनित्ये ; नित्यो जीवो धातुरस्य त्वनित्यः ।
त्यक्त्वानित्यं प्रतितिष्ठस्व नित्ये ; संतुष्य त्वं तोषपरो हि लाभः ॥ ०१२ ॥

महाबलान्पश्य महानुभावा ;न्प्रशास्य भूमिं धनधान्यपूर्णाम् ।
राज्यानि हित्वा विपुलांश्च भोगा ;न्गतान्नरेन्द्रान्वशमन्तकस्य ॥ ०१३ ॥

मृतं पुत्रं दुःखपुष्टं मनुष्या ; उत्क्षिप्य राजन्स्वगृहान्निर्हरन्ति ।
तं मुक्तकेशाः करुणं रुदन्त ;श्चितामध्ये काष्ठमिव क्षिपन्ति ॥ ०१४ ॥

अन्यो धनं प्रेतगतस्य भुङ्क्ते ; वयांसि चाग्निश्च शरीरधातून् ।
द्वाभ्यामयं सह गच्छत्यमुत्र ; पुण्येन पापेन च वेष्ट्यमानः ॥ ०१५ ॥

उत्सृज्य विनिवर्तन्ते ज्ञातयः सुहृदः सुताः ।
अग्नौ प्रास्तं तु पुरुषं कर्मान्वेति स्वयङ्कृतम् ॥ ०१६ ॥

अस्माल्लोकादूर्ध्वममुष्य चाधो ; महत्तमस्तिष्ठति ह्यन्धकारम् ।
तद्वै महामोहनमिन्द्रियाणां ; बुध्यस्व मा त्वां प्रलभेत राजन् ॥ ०१७ ॥

इदं वचः शक्ष्यसि चेद्यथाव ;न्निशम्य सर्वं प्रतिपत्तुमेवम् ।
यशः परं प्राप्स्यसि जीवलोके ; भयं न चामुत्र न चेह तेऽस्ति ॥ ०१८ ॥

आत्मा नदी भारत पुण्यतीर्था ; सत्योदका धृतिकूला दमोर्मिः ।
तस्यां स्नातः पूयते पुण्यकर्मा ; पुण्यो ह्यात्मा नित्यमम्भोऽम्भ एव ॥ ०१९ ॥

कामक्रोधग्राहवतीं पञ्चेन्द्रियजलां नदीम् ।
कृत्वा धृतिमयीं नावं जन्मदुर्गाणि संतर ॥ ०२० ॥

प्रज्ञावृद्धं धर्मवृद्धं स्वबन्धुं ; विद्यावृद्धं वयसा चापि वृद्धम् ।

कार्याकार्ये पूजयित्वा प्रसाद्य ; यः संपृच्छेन्न स मुह्येत्कदाचित् ॥ ०२१ ॥

धृत्या शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा ।
चक्षुःश्रोत्रे च मनसा मनो वाचं च कर्मणा ॥ ०२२ ॥

नित्योदकी नित्ययज्ञोपवीती ; नित्यस्वाध्यायी पतितान्नवर्जी ।
ऋतं ब्रुवन्गुरवे कर्म कुर्व ;न्न ब्राह्मणश्च्यवते ब्रह्मलोकात् ॥ ०२३ ॥

अधीत्य वेदान्परिसंस्तीर्य चाग्नी ;निष्ट्वा यज्ञैः पालयित्वा प्रजाश्च ।
गोब्राह्मणार्थे शस्त्रपूतान्तरात्मा ; हतः सङ्ग्रामे क्षत्रियः स्वर्गमेति ॥ ०२४ ॥

वैश्योऽधीत्य ब्राह्मणान्क्षत्रियांश्च ; धनैः काले संविभज्याश्रितांश्च ।
त्रेतापूतं धूममाघ्राय पुण्यं ; प्रेत्य स्वर्गे देवसुखानि भुङ्क्ते ॥ ०२५ ॥

ब्रह्मक्षत्रं वैश्यवर्णं च शूद्रः ; क्रमेणैतान्न्यायतः पूजयानः ।
तुष्टेष्वेतेष्वव्यथो दग्धपाप ;स्त्यक्त्वा देहं स्वर्गसुखानि भुङ्क्ते ॥ ०२६ ॥

चातुर्वर्ण्यस्यैष धर्मस्तवोक्तो ; हेतुं चात्र ब्रुवतो मे निबोध ।
क्षात्राद्धर्माद्धीयते पाण्डुपुत्र ;स्तं त्वं राजन्राजधर्मे नियुङ्क्ष्व ॥ ०२७ ॥

धृतराष्ट्र उवाच ॥

एवमेतद्यथा मां त्वमनुशाससि नित्यदा ।
ममापि च मतिः सौम्य भवत्येवं यथात्थ माम् ॥ ०२८ ॥

सा तु बुद्धिः कृताप्येवं पाण्डवान्प्रति मे सदा ।
दुर्योधनं समासाद्य पुनर्विपरिवर्तते ॥ ०२९ ॥

न दिष्टमभ्यतिक्रान्तुं शक्यं मर्त्येन केनचित् ।
दिष्टमेव कृतं मन्ये पौरुषं तु निरर्थकम् ॥ ०३० ॥

# अध्याय ०४१

धृतराष्ट्र उवाच ॥

अनुक्तं यदि ते किञ्चिद्वाचा विदुर विद्यते ।
तन्मे शुश्रूषवे ब्रूहि विचित्राणि हि भाषसे ॥ ००१ ॥

विदुर उवाच ॥

धृतराष्ट्र कुमारो वै यः पुराणः सनातनः ।
सनत्सुजातः प्रोवाच मृत्युर्नास्तीति भारत ॥ ००२ ॥

स ते गुह्यान्प्रकाशांश्च सर्वान्हृदयसंश्रयान् ।
प्रवक्ष्यति महाराज सर्वबुद्धिमतां वरः ॥ ००३ ॥

धृतराष्ट्र उवाच ॥

किं त्वं न वेद तद्भूयो यन्मे ब्रूयात्सनातनः ।
त्वमेव विदुर ब्रूहि प्रज्ञाशेषोऽस्ति चेत्तव ॥ ००४ ॥

विदुर उवाच ॥

शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे ।
कुमारस्य तु या बुद्धिर्वेद तां शाश्वतीमहम् ॥ ००५ ॥

ब्राह्मीं हि योनिमापन्नः सुगुह्यमपि यो वदेत् ।
न तेन गर्ह्यो देवानां तस्मादेतद्ब्रवीमि ते ॥ ००६ ॥

धृतराष्ट्र उवाच ॥

ब्रवीहि विदुर त्वं मे पुराणं तं सनातनम् ।
कथमेतेन देहेन स्यादिहैव समागमः ॥ ००७ ॥

वैशंपायन उवाच ॥

चिन्तयामास विदुरस्तमृषिं संशितव्रतम् ।
स च तच्चिन्तितं ज्ञात्वा दर्शयामास भारत ॥ ००८ ॥

स चैनं प्रतिजग्राह विधिदृष्टेन कर्मणा ।
सुखोपविष्टं विश्रान्तमथैनं विदुरोऽब्रवीत् ॥ ००९ ॥

भगवन्संशयः कश्चिद्धृतराष्ट्रस्य मानसे ।
यो न शक्यो मया वक्तुं तमस्मै वक्तुमर्हसि ॥ ०१० ॥

यं श्रुत्वायं मनुष्येन्द्रः सुखदुःखातिगो भवेत् ॥ ०१० ॥

लाभालाभौ प्रियद्वेष्यौ यथैनं न जरान्तकौ ।
विषहेरन्भयामर्षौ क्षुत्पिपासे मदोद्भवौ ॥ ०११ ॥

अरतिश्चैव तन्द्री च कामक्रोधौ क्षयोदयौ ॥ ०११ ॥

# सनत्सुजातपर्व

## अध्याय ०४२

वैशंपायन उवाच ॥

ततो राजा धृतराष्ट्रो मनीषी ; संपूज्य वाक्यं विदुरेरितं तत् ।
सनत्सुजातं रहिते महात्मा ; पप्रच्छ बुद्धिं परमां बुभूषन् ॥ ००१ ॥

धृतराष्ट्र उवाच ॥

सनत्सुजात यदीदं शृणोमि ; मृत्युर्हि नास्तीति तवोपदेशम् ।
देवासुरा ह्याचरन्ब्रह्मचर्य ;ममृत्यवे तत्कतरन्नु सत्यम् ॥ ००२ ॥

सनत्सुजात उवाच ॥

अमृत्युः कर्मणा केचिन्मृत्युर्नास्तीति चापरे ।
शृणु मे ब्रुवतो राजन्यथैतन्मा विशङ्किथाः ॥ ००३ ॥

उभे सत्ये क्षत्रियाद्यप्रवृत्ते ; मोहो मृत्युः संमतो यः कवीनाम् ।
प्रमादं वै मृत्युमहं ब्रवीमि ; सदाप्रमादममृतत्वं ब्रवीमि ॥ ००४ ॥

प्रमादाद्वै असुराः पराभव ;न्नप्रमादाद्ब्रह्मभूता भवन्ति ।
न वै मृत्युर्व्याघ्र इवात्ति जन्तू ;न्न ह्यस्य रूपमुपलभ्यते ह ॥ ००५ ॥

यमं त्वेके मृत्युमतोऽन्यमाहु ;रात्मावसन्नममृतं ब्रह्मचर्यम् ।
पितृलोके राज्यमनुशास्ति देवः ; शिवः शिवानामशिवोऽशिवानाम् ॥ ००६ ॥

आस्यादेष निःसरते नराणां ; क्रोधः प्रमादो मोहरूपश्च मृत्युः ।
ते मोहितास्तद्वशे वर्तमाना ; इतः प्रेतास्तत्र पुनः पतन्ति ॥ ००७ ॥

ततस्तं देवा अनु विप्लवन्ते ; अतो मृत्युर्मरणाख्यामुपैति ।
कर्मोदये कर्मफलानुरागा ;स्तत्रानु यान्ति न तरन्ति मृत्युम्  ॥ ००८  ॥

योऽभिध्यायन्नुत्पतिष्णून्निहन्या ;दनादरेणाप्रतिबुध्यमानः ।
स वै मृत्युर्मृत्युरिवात्ति भूत्वा ; एवं विद्वान्यो विनिहन्ति कामान्  ॥ ००९  ॥

कामानुसारी पुरुषः कामाननु विनश्यति ।
कामान्व्युदस्य धुनुते यत्किञ्चित्पुरुषो रजः  ॥ ०१०  ॥

तमोऽप्रकाशो भूतानां नरकोऽयं प्रदृश्यते ।
गृह्यन्त इव धावन्ति गच्छन्तः श्वभ्रमुन्मुखाः  ॥ ०११  ॥

अभिध्या वै प्रथमं हन्ति चैनं ; कामक्रोधौ गृह्य चैनं तु पश्चात् ।
एते बालान्मृत्यवे प्रापयन्ति ; धीरास्तु धैर्येण तरन्ति मृत्युम्  ॥ ०१२  ॥

अमन्यमानः क्षत्रिय किञ्चिदन्य ;न्नाधीयते तार्ण इवास्य व्याघ्रः ।
क्रोधाल्लोभान्मोहमयान्तरात्मा ; स वै मृत्युस्त्वच्छरीरे य एषः  ॥ ०१३  ॥

एवं मृत्युं जायमानं विदित्वा ; ज्ञाने तिष्ठन्न बिभेतीह मृत्योः ।
विनश्यते विषये तस्य मृत्यु ;र्मृत्योर्यथा विषयं प्राप्य मर्त्यः  ॥ ०१४  ॥

धृतराष्ट्र उवाच  ॥

येऽस्मिन्धर्मान्नाचरन्तीह के चि ;त्तथा धर्मान्केचिदिहाचरन्ति ।
धर्मः पापेन प्रतिहन्यते स्म ; उताहो धर्मः प्रतिहन्ति पापम्  ॥ ०१५  ॥

सनत्सुजात उवाच  ॥

उभयमेव तत्रोपभुज्यते फलं ; धर्मस्यैवेतरस्य च ।
धर्मेणाधर्मं प्रणुदतीह विद्वा ;न्धर्मो बलीयानिति तस्य विद्धि  ॥ ०१६  ॥

धृतराष्ट्र उवाच ॥

यानिमानाहुः स्वस्य धर्मस्य लोका ;न्द्विजातीनां पुण्यकृतां सनातनान् ।
तेषां परिक्रमान्कथयन्तस्ततोऽन्या ;न्नैतद्विद्वन्नैव कृतं च कर्म ॥ ०१७ ॥

सनत्सुजात उवाच ॥

येषां बले न विस्पर्धा बले बलवतामिव ।
ते ब्राह्मणा इतः प्रेत्य स्वर्गलोके प्रकाशते ॥ ०१८ ॥

यत्र मन्येत भूयिष्ठं प्रावृषीव तृणोलपम् ।
अन्नं पानं च ब्राह्मणस्तज्जीवन्नानुसञ्ज्वरेत् ॥ ०१९ ॥

यत्राकथयमानस्य प्रयच्छत्यशिवं भयम् ।
अतिरिक्तमिवाकुर्वन्स श्रेयान्नेतरो जनः ॥ ०२० ॥

यो वाकथयमानस्य आत्मानं नानुसञ्ज्वरेत् ।
ब्रह्मस्वं नोपभुञ्जेद्वा तदन्नं संमतं सताम् ॥ ०२१ ॥

यथा स्वं वान्तमश्नाति श्वा वै नित्यमभूतये ।
एवं ते वान्तमश्नन्ति स्ववीर्यस्योपजीवनात् ॥ ०२२ ॥

नित्यमज्ञातचर्या मे इति मन्येत ब्राह्मणः ।
ज्ञातीनां तु वसन्मध्ये नैव विद्येत किञ्चन ॥ ०२३ ॥

को ह्येवमन्तरात्मानं ब्राह्मणो हन्तुमर्हति ।
तस्माद्धि किञ्चित्क्षत्रिय ब्रह्मावसति पश्यति ॥ ०२४ ॥

अश्रान्तः स्यादनादानात्संमतो निरुपद्रवः ।
शिष्टो न शिष्टवत्स स्याद्ब्राह्मणो ब्रह्मवित्कविः ॥ ०२५ ॥

अनाढ्या मानुषे वित्ते आढ्या वेदेषु ये द्विजाः ।
ते दुर्धर्षा दुष्प्रकम्प्या विद्यात्तान्ब्रह्मणस्तनुम् ॥ ०२६ ॥

सर्वान्स्विष्टकृतो देवान्विद्याद्य इह कश्चन ।
न समानो ब्राह्मणस्य यस्मिन्प्रयतते स्वयम् ॥ ०२७ ॥

यमप्रयतमानं तु मानयन्ति स मानितः ।
न मान्यमानो मन्येत नामानादभिसञ्ज्वरेत् ॥ ०२८ ॥

विद्वांसो मानयन्तीह इति मन्येत मानितः ।
अधर्मविदुषो मूढा लोकशास्त्रविशारदाः ॥ ०२९ ॥

न मान्यं मानयिष्यन्ति इति मन्येदमानितः ॥ ०२९ ॥

न वै मानं च मौनं च सहितौ चरतः सदा ।
अयं हि लोको मानस्य असौ मानस्य तद्विदुः ॥ ०३० ॥

श्रीः सुखस्येह संवासः सा चापि परिपन्थिनी ।
ब्राह्मी सुदुर्लभा श्रीर्हि प्रज्ञाहीनेन क्षत्रिय ॥ ०३१ ॥

द्वाराणि तस्या हि वदन्ति सन्तो ; बहुप्रकाराणि दुरावराणि ।
सत्यार्जवे ह्रीर्दमशौचविद्याः ; षण्मानमोहप्रतिबाधनानि ॥ ०३२ ॥

---

# अध्याय ०४३

धृतराष्ट्र उवाच ॥

ऋचो यजूंष्यधीते यः सामवेदं च यो द्विजः ।
पापानि कुर्वन्पापेन लिप्यते न स लिप्यते ॥ ००१ ॥

सनत्सुजात उवाच ॥

नैनं सामान्यृचो वापि न यजूंषि विचक्षण ।
त्रायन्ते कर्मणः पापान्न ते मिथ्या ब्रवीम्यहम् ॥ ००२ ॥

न छन्दांसि वृजिनात्तारयन्ति ; मायाविनं मायया वर्तमानम् ।
नीडं शकुन्ता इव जातपक्षा ;श्छन्दांस्येनं प्रजहत्यन्तकाले ॥ ००३ ॥

धृतराष्ट्र उवाच ॥

न चेद्वेदा वेदविदं शक्तास्त्रातुं विचक्षण ।
अथ कस्मात्प्रलापोऽयं ब्राह्मणानां सनातनः ॥ ००४ ॥

सनत्सुजात उवाच ॥

अस्मि.ण्ल्लोके तपस्तप्तं फलमन्यत्र दृश्यते ।
ब्राह्मणानामिमे लोका ऋद्धे तपसि संयताः ॥ ००५ ॥

धृतराष्ट्र उवाच ॥

कथं समृद्धमप्यृद्धं तपो भवति केवलम् ।
सनत्सुजात तद्ब्रूहि यथा विद्याम तद्वयम् ॥ ००६ ॥

सनत्सुजात उवाच ॥

क्रोधादयो द्वादश यस्य दोषा ;स्तथा नृशंसादि षडत्र राजन् ।
धर्मादयो द्वादश चातताना: ; शास्त्रे गुणा ये विदिता द्विजानाम् ॥ ००७ ॥

क्रोधः कामो लोभमोहौ विवित्सा ;कृपासूया मानशोकौ स्पृहा च ।
ईर्ष्या जुगुप्सा च मनुष्यदोषा ; वर्ज्याः सदा द्वादशैते नरेण ॥ ००८ ॥

एकैकमेते राजेन्द्र मनुष्यान्पर्युपासते ।
लिप्समानोऽन्तरं तेषां मृगाणामिव लुब्धकः ॥ ००९ ॥

विकत्थनः स्पृहयालुर्मनस्वी ; बिभ्रत्कोपं चपलोऽरक्षणश्च ।
एते प्राप्ताः षण्नरान्पापधर्मा ;न्प्रकुर्वते नोत सन्तः सुदुर्गे ॥ ०१० ॥

संभोगसंविद्विषमेधमानो ; दत्तानुतापी कृपणोऽबलीयान् ।
वर्गप्रशंसी वनितासु द्वेष्टा ; एतेऽपरे सप्त नृशंसधर्माः ॥ ०११ ॥

धर्मश्च सत्यं च दमस्तपश्च ; अमात्सर्यं ह्रीस्तितिक्षानसूया ।
यज्ञश्च दानं च धृतिः श्रुतं च ; महाव्रता द्वादश ब्राह्मणस्य ॥ ०१२ ॥

यस्त्वेतेभ्यः प्रवसेद्द्वादशेभ्यः ; सर्वामपीमां पृथिवीं प्रशिष्यात् ।
त्रिभिर्द्वाभ्यामेकतो वा विशिष्टो ; नास्य स्वमस्तीति स वेदितव्यः ॥ ०१३ ॥

दमस्त्यागोऽप्रमादश्च एतेष्वमृतमाहितम् ।
तानि सत्यमुखान्याहुर्ब्राह्मणा ये मनीषिणः ॥ ०१४ ॥

दमोऽष्टादशदोषः स्यात्प्रतिकूलं कृताकृते ।
अनृतं चाभ्यसूया च कामार्थौ च तथा स्पृहा ॥ ०१५ ॥

क्रोधः शोकस्तथा तृष्णा लोभः पैशुन्यमेव च ।
मत्सरश्च विवित्सा च परितापस्तथा रतिः ॥ ०१६ ॥

अपस्मारः सातिवादस्तथा संभावनात्मनि ।
एतैर्विमुक्तो दोषैर्यः स दमः सद्भिरुच्यते ॥ ०१७ ॥

श्रेयांस्तु षड्विधस्त्यागः प्रियं प्राप्य न हृष्यति ।

अप्रिये तु समुत्पन्ने व्यथां जातु न चार्च्छति ॥ ०१८ ॥

इष्टान्दारांश्च पुत्रांश्च न चान्यं यद्वचो भवेत् ।
अर्हते याचमानाय प्रदेयं तद्वचो भवेत् ॥ ०१९ ॥

अप्यवाच्यं वदत्येव स तृतीयो गुणः स्मृतः ॥ ०१९ ॥

त्यक्तैर्द्रव्यैर्यो भवति नोपयुङ्क्ते च कामतः ।
न च कर्मसु तद्धीनः शिष्यबुद्धिर्नरो यथा ॥ ०२० ॥

सर्वैरेव गुणैर्युक्तो द्रव्यवानपि यो भवेत् ॥ ०२० ॥

अप्रमादोऽष्टदोषः स्यात्तान्दोषान्परिवर्जयेत् ।
इन्द्रियेभ्यश्च पञ्चभ्यो मनसश्चैव भारत ॥ ०२१ ॥

अतीतानागतेभ्यश्च मुक्तो ह्येतैः सुखी भवेत् ॥ ०२१ ॥

दोषैरेतैर्विमुक्तं तु गुणैरेतैः समन्वितम् ।
एतत्समृद्धमप्यृद्धं तपो भवति केवलम् ॥ ०२२ ॥

यन्मां पृच्छसि राजेन्द्र किं भूयः श्रोतुमिच्छसि ॥ ०२२ ॥

धृतराष्ट्र उवाच ॥

आख्यानपञ्चमैर्वेदैर्भूयिष्ठं कथ्यते जनः ।
तथैवान्ये चतुर्वेदास्त्रिवेदाश्च तथापरे ॥ ०२३ ॥

द्विवेदाश्चैकवेदाश्च अनृचश्च तथापरे ।
तेषां तु कतमः स स्याद्यमहं वेद ब्राह्मणम् ॥ ०२४ ॥

सनत्सुजात उवाच ॥

एकस्य वेदस्याज्ञानाद्वेदास्ते बहवोऽभवन् ।
सत्यस्यैकस्य राजेन्द्र सत्ये कश्चिदवस्थितः ॥ ०२५ ॥

एवं वेदमनुत्साद्य प्रज्ञां महति कुर्वते ॥ ०२५ ॥

दानमध्ययनं यज्ञो लोभादेतत्प्रवर्तते ।
सत्यात्प्रच्यवमानानां सङ्कल्पो वितथो भवेत् ॥ ०२६ ॥

ततो यज्ञः प्रतायेत सत्यस्यैवावधारणात् ।
मनसान्यस्य भवति वाचान्यस्योत कर्मणा ॥ ०२७ ॥

सङ्कल्पसिद्धः पुरुषः सङ्कल्पानधितिष्ठति ॥ ०२७ ॥

अनैभृत्येन वै तस्य दीक्षितव्रतमाचरेत् ।
नामैतद्धातुनिर्वृत्तं सत्यमेव सतां परम् ॥ ०२८ ॥

ज्ञानं वै नाम प्रत्यक्षं परोक्षं जायते तपः ॥ ०२८ ॥

विद्याद्बहु पठन्तं तु बहुपाठीति ब्राह्मणम् ।
तस्मात्क्षत्रिय मा मंस्था जल्पितेनैव ब्राह्मणम् ॥ ०२९ ॥

य एव सत्यान्नापैति स ज्ञेयो ब्राह्मणस्त्वया ॥ ०२९ ॥

छन्दांसि नाम क्षत्रिय तान्यथर्वा ; जगौ पुरस्तादृषिसर्ग एषः ।
छन्दोविदस्ते य उ तानधीत्य ; न वेद्यवेदस्य विदुर्न वेद्यम् ॥ ०३० ॥

न वेदानां वेदिता कश्चिदस्ति ; कश्चिद्वेदान्बुध्यते वापि राजन् ।
यो वेद वेदान्न स वेद वेद्यं ; सत्ये स्थितो यस्तु स वेद वेद्यम् ॥ ०३१ ॥

अभिजानामि ब्राह्मणमाख्यातारं विचक्षणम् ।

यश्छिन्नविचिकित्सः सन्नाचष्टे सर्वसंशयान्  ॥ ०३२  ॥

तस्य पर्येषणं गच्छेत्प्राचीनं नोत दक्षिणम् ।
नार्वाचीनं कुतस्तिर्यङ्नादिशं तु कथञ्चन  ॥ ०३३  ॥

तूष्णींभूत उपासीत न चेष्टेन्मनसा अपि ।
अभ्यावर्तेत ब्रह्मास्य अन्तरात्मनि वै श्रितम्  ॥ ०३४  ॥

मौनाद्धि स मुनिर्भवति नारण्यवसनान्मुनिः ।
अक्षरं तत्तु यो वेद स मुनिः श्रेष्ठ उच्यते  ॥ ०३५  ॥

सर्वार्थानां व्याकरणाद्वैयाकरण उच्यते ।
प्रत्यक्षदर्शी लोकानां सर्वदर्शी भवेन्नरः  ॥ ०३६  ॥

सत्ये वै ब्राह्मणस्तिष्ठन्ब्रह्म पश्यति क्षत्रिय ।
वेदानां चानुपूर्व्येण एतद्विद्वन्ब्रवीमि ते  ॥ ०३७  ॥

---

# अध्याय ०४४

धृतराष्ट्र उवाच  ॥

सनत्सुजात यदिमां परार्थां ; ब्राह्मीं वाचं प्रवदसि विश्वरूपाम् ।
परां हि कामेषु सुदुर्लभां कथां ; तद्ब्रूहि मे वाक्यमेतत्कुमार  ॥ ००१  ॥

सनत्सुजात उवाच  ॥

नैतद्ब्रह्म त्वरमाणेन लभ्यं ; यन्मां पृच्छस्यभिहृष्यस्यतीव ।
अव्यक्तविद्यामभिधास्ये पुराणीं ; बुद्ध्या च तेषां ब्रह्मचर्येण सिद्धाम्  ॥ ००२  ॥

धृतराष्ट्र उवाच ॥

अव्यक्तविद्यामिति यत्सनातनीं ; ब्रवीषि त्वं ब्रह्मचर्येण सिद्धाम् ।
अनारभ्या वसतीहार्य काले ; कथं ब्राह्मण्यममृतत्वं लभेत ॥ ००३ ॥

सनत्सुजात उवाच ॥

येऽस्मिं.ल्लोके विजयन्तीह कामा ;न्ब्राह्मीं स्थितिमनुतितिक्षमाणाः ।
त आत्मानं निर्हरन्तीह देहा ;न्मुञ्जादिषीकामिव सत्त्वसंस्थाः ॥ ००४ ॥

शरीरमेतौ कुरुतः पिता माता च भारत ।
आचार्यशास्ता या जातिः सा सत्या साजरामरा ॥ ००५ ॥

आचार्ययोनिमिह ये प्रविश्य ; भूत्वा गर्भं ब्रह्मचर्यं चरन्ति ।
इहैव ते शास्त्रकारा भवन्ति ; प्रहाय देहं परमं यान्ति योगम् ॥ ००६ ॥

य आवृणोत्यवितथेन कर्णा ;वृतं कुर्वन्नमृतं संप्रयच्छन् ।
तं मन्येत पितरं मातरं च ; तस्मै न द्रुह्येत्कृतमस्य जानन् ॥ ००७ ॥

गुरुं शिष्यो नित्यमभिमन्यमानः ; स्वाध्यायमिच्छेच्छुचिरप्रमत्तः ।
मानं न कुर्यान्न दधीत रोष ;मेष प्रथमो ब्रह्मचर्यस्य पादः ॥ ००८ ॥

आचार्यस्य प्रियं कुर्यात्प्राणैरपि धनैरपि ।
कर्मणा मनसा वाचा द्वितीयः पाद उच्यते ॥ ००९ ॥

समा गुरौ यथा वृत्तिर्गुरुपत्न्यां तथा भवेत् ।
यथोक्तकारी प्रियकृत्तृतीयः पाद उच्यते ॥ ०१० ॥

नाचार्यायेहोपकृत्वा प्रवादं ; प्राज्ञः कुर्वीत नैतदहं करोमि ।
इतीव मन्येत न भाषयेत ; स वै चतुर्थो ब्रह्मचर्यस्य पादः ॥ ०११ ॥

एवं वसन्तं यदुपप्लवेद्धन ;माचार्याय तदनुप्रयच्छेत् ।
सतां वृत्तिं बहुगुणामेवमेति ; गुरोः पुत्रे भवति च वृत्तिरेषा ॥ ०१२ ॥

एवं वसन्सर्वतो वर्धतीह ; बह्वन्पुत्रा.ण्लभते च प्रतिष्ठाम् ।
वर्षन्ति चास्मै प्रदिशो दिशश्च ; वसन्त्यस्मिन्ब्रह्मचर्ये जनाश्च ॥ ०१३ ॥

एतेन ब्रह्मचर्येण देवा देवत्वमाप्नुवन् ।
ऋषयश्च महाभागा ब्रह्मलोकं मनीषिणः ॥ ०१४ ॥

गन्धर्वाणामनेनैव रूपमप्सरसामभूत् ।
एतेन ब्रह्मचर्येण सूर्यो अह्नाय जायते ॥ ०१५ ॥

य आशयेत्पाटयेच्चापि राज ;न्सर्वं शरीरं तपसा तप्यमानः ।
एतेनासौ बाल्यमत्येति विद्वा ;न्मृत्युं तथा रोधयत्यन्तकाले ॥ ०१६ ॥

अन्तवन्तः क्षत्रिय ते जयन्ति ; लोकाञ्जनाः कर्मणा निर्मितेन ।
ब्रह्मैव विद्वांस्तेन अभ्येति सर्वं ; नान्यः पन्था अयनाय विद्यते ॥ ०१७ ॥

धृतराष्ट्र उवाच ॥

आभाति शुक्लमिव लोहितमिव ; अथो कृष्णमथाञ्जनं काद्रवं वा ।
तद्ब्राह्मणः पश्यति योऽत्र विद्वा ;न्कथंरूपं तदमृतमक्षरं पदम् ॥ ०१८ ॥

सनत्सुजात उवाच ॥

नाभाति शुक्लमिव लोहितमिव ; अथो कृष्णमायसमर्कवर्णम् ।
न पृथिव्यां तिष्ठति नान्तरिक्षे ; नैतत्समुद्रे सलिलं बिभर्ति ॥ ०१९ ॥

न तारकासु न च विद्युदाश्रितं ; न चाभ्रेषु दृश्यते रूपमस्य ।
न चापि वायौ न च देवतासु ; न तच्चन्द्रे दृश्यते नोत सूर्ये ॥ ०२० ॥

नैवर्क्षु तन्न यजुःषु नाप्यथर्वसु ; न चैव दृश्यत्यमलेषु सामसु ।
रथंतरे बार्हते चापि राज ;न्महाव्रते नैव दृश्येद्ध्रुवं तत् ॥ ०२१ ॥

अपारणीयं तमसः परस्ता ;त्तदन्तकोऽप्येति विनाशकाले ।
अणीयरूपं क्षुरधारया त ;न्महच्च रूपं त्वपि पर्वतेभ्यः ॥ ०२२ ॥

सा प्रतिष्ठा तदमृतं लोकास्तद्ब्रह्म तद्यशः ।
भूतानि जज्ञिरे तस्मात्प्रलयं यान्ति तत्र च ॥ ०२३ ॥

अनामयं तन्महदुद्यतं यशो ; वाचो विकारान्कवयो वदन्ति ।
तस्मिञ्जगत्सर्वमिदं प्रतिष्ठितं ; ये तद्विदुरमृतास्ते भवन्ति ॥ ०२४ ॥

---

# अध्याय ०४५

सनत्सुजात उवाच ॥

यत्तच्छुक्रं महज्ज्योतिर्दीप्यमानं महद्यशः ।
तद्वै देवा उपासन्ते यस्मादर्को विराजते ॥ ००१ ॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ००१ ॥

शुक्राद्ब्रह्म प्रभवति ब्रह्म शुक्रेण वर्धते ।
तच्छुक्रं ज्योतिषां मध्येऽतप्तं तपति तापनम् ॥ ००२ ॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ००२ ॥

आपोऽथ अद्भ्यः सलिलस्य मध्ये ; उभौ देवौ शिश्रियातेऽन्तरिक्षे ।

स सध्रीचीः स विषूचीर्वसाना ; उभे बिभर्ति पृथिवीं दिवं च ॥ ००३ ॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ००३ ॥

उभौ च देवौ पृथिवीं दिवं च ; दिशश्च शुक्रं भुवनं बिभर्ति ।
तस्माद्दिशः सरितश्च स्रवन्ति ; तस्मात्समुद्रा विहिता महान्तः ॥ ००४ ॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ००४ ॥

चक्रे रथस्य तिष्ठन्तं ध्रुवस्याव्ययकर्मणः ।
केतुमन्तं वहन्त्यश्वास्तं दिव्यमजरं दिवि ॥ ००५ ॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ००५ ॥

न सादृश्ये तिष्ठति रूपमस्य ; न चक्षुषा पश्यति कश्चिदेनम् ।
मनीषयाथो मनसा हृदा च ; य एवं विदुरमृतास्ते भवन्ति ॥ ००६ ॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ००६ ॥

द्वादशपूगां सरितं देवरक्षितम् ।
मधु ईशन्तस्तदा सञ्चरन्ति घोरम् ॥ ००७ ॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ००७ ॥

तदर्धमासं पिबति सञ्चित्य भ्रमरो मधु ।
ईशानः सर्वभूतेषु हविर्भूतमकल्पयत् ॥ ००८ ॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ००८ ॥

हिरण्यपर्णमश्वत्थमभिपत्य अपक्षकाः ।
ते तत्र पक्षिणो भूत्वा प्रपतन्ति यथादिशम् ॥ ००९ ॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्  ॥ ००९  ॥

पूर्णात्पूर्णान्युद्धरन्ति पूर्णात्पूर्णानि चक्रिरे ।
हरन्ति पूर्णात्पूर्णानि पूर्णमेवावशिष्यते  ॥ ०१०  ॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्  ॥ ०१०  ॥

तस्माद्वै वायुरायातस्तस्मिंश्च प्रयतः सदा ।
तस्मादग्निश्च सोमश्च तस्मिंश्च प्राण आततः  ॥ ०११  ॥

सर्वमेव ततो विद्यात्तत्तद्वक्तुं न शक्नुमः ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्  ॥ ०१२  ॥

अपानं गिरति प्राणः प्राणं गिरति चन्द्रमाः ।
आदित्यो गिरते चन्द्रमादित्यं गिरते परः  ॥ ०१३  ॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्  ॥ ०१३  ॥

एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन् ।
तं चेत्सततमृत्विजं न मृत्युर्नामृतं भवेत्  ॥ ०१४  ॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्  ॥ ०१४  ॥

एवं देवो महात्मा स पावकं पुरुषो गिरन् ।
यो वै तं पुरुषं वेद तस्येहात्मा न रिष्यते  ॥ ०१५  ॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्  ॥ ०१५  ॥

यः सहस्रं सहस्राणां पक्षान्संतत्य संपतेत् ।
मध्यमे मध्य आगच्छेदपि चेत्स्यान्मनोजवः  ॥ ०१६  ॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्  ॥ ०१६  ॥

न दर्शने तिष्ठति रूपमस्य ; पश्यन्ति चैनं सुविशुद्धसत्त्वाः ।
हितो मनीषी मनसाभिपश्ये ;द्ये तं श्रयेयुरमृतास्ते भवन्ति  ॥ ०१७  ॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्  ॥ ०१७  ॥

गूहन्ति सर्पा इव गह्वराणि ; स्वशिक्षया स्वेन वृत्तेन मर्त्याः ।
तेषु प्रमुह्यन्ति जना विमूढा ; यथाध्वानं मोहयन्ते भयाय  ॥ ०१८  ॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्  ॥ ०१८  ॥

सदा सदासत्कृतः स्यान्न मृत्युरमृतं कुतः ।
सत्यानृते सत्यसमानबन्धने ; सतश्च योनिरसतश्चैक एव  ॥ ०१९  ॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्  ॥ ०१९  ॥

न साधुना नोत असाधुना वा ; समानमेतद्दृश्यते मानुषेषु ।
समानमेतदमृतस्य विद्या ;देवंयुक्तो मधु तद्वै परीप्सेत्  ॥ ०२०  ॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्  ॥ ०२०  ॥

नास्यातिवादा हृदयं तापयन्ति ; नानधीतं नाहुतमग्निहोत्रम् ।
मनो ब्राह्मीं लघुतामादधीत ; प्रज्ञानमस्य नाम धीरा लभन्ते  ॥ ०२१  ॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्  ॥ ०२१  ॥

एवं यः सर्वभूतेषु आत्मानमनुपश्यति ।
अन्यत्रान्यत्र युक्तेषु किं स शोचेत्ततः परम्  ॥ ०२२  ॥

यथोदपाने महति सर्वतः संप्लुतोदके ।
एवं सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ०२३ ॥

अङ्गुष्ठमात्रः पुरुषो महात्मा ; न दृश्यतेऽसौ हृदये निविष्टः ।
अजश्चरो दिवारात्रमतन्द्रितश्च ; स तं मत्वा कविरास्ते प्रसन्नः ॥ ०२४ ॥

अहमेवास्मि वो माता पिता पुत्रोऽस्म्यहं पुनः ।
आत्माहमपि सर्वस्य यच्च नास्ति यदस्ति च ॥ ०२५ ॥

पितामहोऽस्मि स्थविरः पिता पुत्रश्च भारत ।
ममैव यूयमात्मस्था न मे यूयं न वोऽप्यहम् ॥ ०२६ ॥

आत्मैव स्थानं मम जन्म चात्मा ; वेदप्रोक्तोऽहमजरप्रतिष्ठः ।
अणोरणीयान्सुमनाः सर्वभूतेषु जागृमि ।
पितरं सर्वभूतानां पुष्करे निहितं विदुः ॥ ०२८ ॥

---

# यानसंधिपर्व

## अध्याय ०४६

वैशंपायन उवाच ॥

एवं सनत्सुजातेन विदुरेण च धीमता ।
सार्धं कथयतो राज्ञः सा व्यतीयाय शर्वरी ॥ ००१ ॥

तस्यां रजन्यां व्युष्टायां राजानः सर्व एव ते ।
सभामाविविशुर्हृष्टाः सूतस्योपदिदृक्षया ॥ ००२ ॥

शुश्रूषमाणाः पार्थानां वचो धर्मार्थसंहितम् ।
धृतराष्ट्रमुखाः सर्वे ययू राजसभां शुभाम्  ॥ ००३  ॥

सुधावदातां विस्तीर्णां कनकाजिरभूषिताम् ।
चन्द्रप्रभां सुरुचिरां सिक्तां परमवारिणा  ॥ ००४  ॥

रुचिरैरासनैः स्तीर्णां काञ्चनैर्दारवैरपि ।
अश्मसारमयैर्दान्तैः स्वास्तीर्णैः सोत्तरच्छदैः  ॥ ००५  ॥

भीष्मो द्रोणः कृपः शल्यः कृतवर्मा जयद्रथः ।
अश्वत्थामा विकर्णश्च सोमदत्तश्च बाह्लिकः  ॥ ००६  ॥

विदुरश्च महाप्राज्ञो युयुत्सुश्च महारथः ।
सर्वे च सहिताः शूराः पार्थिवा भरतर्षभ  ॥ ००७  ॥

धृतराष्ट्रं पुरस्कृत्य विविशुस्तां सभां शुभाम्  ॥ ००७  ॥

दुःशासनश्चित्रसेनः शकुनिश्चापि सौबलः ।
दुर्मुखो दुःसहः कर्ण उलूकोऽथ विविंशतिः  ॥ ००८  ॥

कुरुराजं पुरस्कृत्य दुर्योधनममर्षणम् ।
विविशुस्तां सभां राजन्सुराः शक्रसदो यथा  ॥ ००९  ॥

आविशद्भिस्तदा राजञ्शूरैः परिघबाहुभिः ।
शुशुभे सा सभा राजन्सिंहैरिव गिरेर्गुहा  ॥ ०१०  ॥

ते प्रविश्य महेष्वासाः सभां समितिशोभनाः ।
आसनानि महार्हाणि भेजिरे सूर्यवर्चसः  ॥ ०११  ॥

आसनस्थेषु सर्वेषु तेषु राजसु भारत ।

द्वाःस्थो निवेदयामास सूतपुत्रमुपस्थितम्  ॥ ०१२  ॥

अयं स रथ आयाति योऽयासीत्पाण्डवान्प्रति ।
दूतो नस्तूर्णमायातः सैन्धवैः साधुवाहिभिः  ॥ ०१३  ॥

उपयाय तु स क्षिप्रं रथात्प्रस्कन्द्य कुण्डली ।
प्रविवेश सभां पूर्णां महीपालैर्महात्मभिः  ॥ ०१४  ॥

सञ्जय उवाच  ॥

प्राप्तोऽस्मि पाण्डवान्गत्वा तद्विजानीत कौरवाः ।
यथावयः कुरून्सर्वान्प्रतिनन्दन्ति पाण्डवाः  ॥ ०१५  ॥

अभिवादयन्ति वृद्धांश्च वयस्यांश्च वयस्यवत् ।
यूनश्चाभ्यवदन्पार्थाः प्रतिपूज्य यथावयः  ॥ ०१६  ॥

यथाहं धृतराष्ट्रेण शिष्टः पूर्वमितो गतः ।
अब्रुवं पाण्डवान्गत्वा तन्निबोधत पार्थिवाः  ॥ ०१७  ॥

---

# अध्याय ०४७

धृतराष्ट्र उवाच  ॥

पृच्छामि त्वां सञ्जय राजमध्ये ; किमब्रवीद्वाक्यमदीनसत्त्वः ।
धनञ्जयस्तात युधां प्रणेता ; दुरात्मनां जीवितच्छिन्महात्मा  ॥ ००१  ॥

सञ्जय उवाच  ॥

दुर्योधनो वाचमिमां श्रृणोतु ; यदब्रवीदर्जुनो योत्स्यमानः ।
युधिष्ठिरस्यानुमते महात्मा ; धनञ्जयः श्रृण्वतः केशवस्य ॥ ००२ ॥

अन्वत्रस्तो बाहुवीर्यं विदान ; उपह्वरे वासुदेवस्य धीरः ।
अवोचन्मां योत्स्यमानः किरीटी ; मध्ये ब्रूया धार्तराष्ट्रं कुरूणाम् ॥ ००३ ॥

ये वै राजानः पाण्डवायोधनाय ; समानीताः श्रृण्वतां चापि तेषाम् ।
यथा समग्रं वचनं मयोक्तं ; सहामात्यं श्रावयेथा नृपं तम् ॥ ००४ ॥

यथा नूनं देवराजस्य देवाः ; शुश्रूषन्ते वज्रहस्तस्य सर्वे ।
तथाश्रृण्वन्पाण्डवाः सृञ्जयाश्च ; किरीटिना वाचमुक्तां समर्थाम् ॥ ००५ ॥

इत्यब्रवीदर्जुनो योत्स्यमानो ; गाण्डीवधन्वा लोहितपद्मनेत्रः ।
न चेद्राज्यं मुञ्चति धार्तराष्ट्रो ; युधिष्ठिरस्याजमीढस्य राज्ञः ॥ ००६ ॥

अस्ति नूनं कर्म कृतं पुरस्ता ;दनिर्विष्टं पापकं धार्तराष्ट्रैः ॥ ००६ ॥

येषां युद्धं भीमसेनार्जुनाभ्यां ; तथाश्विभ्यां वासुदेवेन चैव ।
शैनेयेन ध्रुवमात्तायुधेन ; धृष्टद्युम्नेनाथ शिखण्डिना च ॥ ००७ ॥

युधिष्ठिरेणेन्द्रकल्पेन चैव ; योऽपध्यानान्निर्दहेद्गां दिवं च ॥ ००७ ॥

तैश्चेद्युद्धं मन्यते धार्तराष्ट्रो ; निर्वृत्तोऽर्थः सकलः पाण्डवानाम् ।
मा तत्कार्षीः पाण्डवार्थाय हेतो ;रुपैहि युद्धं यदि मन्यसे त्वम् ॥ ००८ ॥

यां तां वने दुःखशय्यामुवास ; प्रव्राजितः पाण्डवो धर्मचारी ।
आशिष्यते दुःखतरामनर्थां ;मन्त्यां शय्यां धार्तराष्ट्रः परासुः ॥ ००९ ॥

ह्रिया ज्ञानेन तपसा दमेन ; क्रोधेनाथो धर्मगुप्त्या धनेन ।
अन्यायवृत्तः कुरुपाण्डवेया ;नध्यातिष्ठद्धार्तराष्ट्रो दुरात्मा ॥ ०१० ॥

मायोपधः प्रणिधानार्जवाभ्यां ; तपोदमाभ्यां धर्मगुप्त्या बलेन ।
सत्यं ब्रुवन्प्रीतियुक्त्यानृतेन ; तितिक्षमाणः क्लिश्यमानोऽतिवेलम् ॥ ०११ ॥

यदा ज्येष्ठः पाण्डवः संशितात्मा ; क्रोधं यत्तं वर्षपूगान्सुघोरम् ।
अवस्रष्टा कुरुषूद्वृत्तचेता ;स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०१२ ॥

कृष्णवर्त्मेव ज्वलितः समिद्धो ; यथा दहेत्कक्षमग्निर्निदाघे ।
एवं दग्धा धार्तराष्ट्रस्य सेनां ; युधिष्ठिरः क्रोधदीप्तोऽनुवीक्ष्य ॥ ०१३ ॥

यदा द्रष्टा भीमसेनं रणस्थं ; गदाहस्तं क्रोधविषं वमन्तम् ।
दुर्मर्षणं पाण्डवं भीमवेगं ; तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०१४ ॥

महासिंहो गाव इव प्रविश्य ; गदापाणिर्धार्तराष्ट्रानुपेत्य ।
यदा भीमो भीमरूपो निहन्ता ; तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०१५ ॥

महाभये वीतभयः कृतास्त्रः ; समागमे शत्रुबलावमर्दी ।
सकृद्रथेन प्रतियाद्रथौघा ;न्पदातिसंघान्गदयाभिनिघ्नन् ॥ ०१६ ॥

सैन्याननेकांस्तरसा विमृद्न ;न्यदा क्षेप्ता धार्तराष्ट्रस्य सैन्यम् ।
छिन्दन्वनं परशुनेव शूर ;स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०१७ ॥

तृणप्रायं ज्वलनेनेव दग्धं ; ग्रामं यथा धार्तराष्ट्रः समीक्ष्य ।
पक्वं सस्यं वैद्युतेनेव दग्धं ; परासिक्तं विपुलं स्वं बलौघम् ॥ ०१८ ॥

हतप्रवीरं विमुखं भयार्तं ; पराङ्मुखं प्रायशोऽधृष्टयोधम् ।
शस्त्रार्चिषा भीमसेनेन दग्धं ; तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०१९ ॥

उपासङ्गादुद्धरन्दक्षिणेन ; परःशतान्नकुलश्चित्रयोधी ।
यदा रथाग्र्यो रथिनः प्रचेता ; तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०२० ॥

सुखोचितो दुःखशय्यां वनेषु ; दीर्घं कालं नकुलो यामशेत ।

आशीविषः क्रुद्ध इव श्वसन्भृशं ; तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०२१ ॥

त्यक्तात्मानः पार्थिवायोधनाय ; समादिष्टा धर्मराजेन वीराः ।
रथैः शुभ्रैः सैन्यमभिद्रवन्तो ; दृष्ट्वा पश्चात्तप्स्यते धार्तराष्ट्रः ॥ ०२२ ॥

शिशून्कृतास्त्रानशिशुप्रकाशा ;न्यदा द्रष्टा कौरवः पञ्च शूरान् ।
त्यक्त्वा प्राणान्केकयानाद्रवन्त ;स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०२३ ॥

यदा गतोद्वाहमकूजनाक्षं ; सुवर्णतारं रथमाततायी ।
दान्तैर्युक्तं सहदेवोऽधिरूढः ; शिरांसि राज्ञां क्षेप्स्यते मार्गणौघैः ॥ ०२४ ॥

महाभये संप्रवृत्ते रथस्थं ; विवर्तमानं समरे कृतास्त्रम् ।
सर्वां दिशं संपतन्तं समीक्ष्य ; तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०२५ ॥

ह्रीनिषेधो निपुणः सत्यवादी ; महाबलः सर्वधर्मोपपन्नः ।
गान्धारिमार्च्छंस्तुमुले क्षिप्रकारी ; क्षेप्ता जनान्सहदेवस्तरस्वी ॥ ०२६ ॥

यदा द्रष्टा द्रौपदेयान्महेषू ;ञ्शूरान्कृतास्त्रान्रथयुद्धकोविदान् ।
आशीविषान्घोरविषानिवायत ;स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०२७ ॥

यदाभिमन्युः परवीरघाती ; शरैः परान्मेघ इवाभिवर्षन् ।
विगाहिता कृष्णसमः कृतास्त्र ;स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०२८ ॥

यदा द्रष्टा बालमबालवीर्यं ; द्विषच्चमूं मृत्युमिवापतन्तम् ।
सौभद्रमिन्द्रप्रतिमं कृतास्त्रं ; तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०२९ ॥

प्रभद्रकाः शीघ्रतरा युवानो ; विशारदाः सिंहसमानवीर्याः ।
यदा क्षेप्तारो धार्तराष्ट्रान्ससैन्यां ;स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०३० ॥

वृद्धौ विराटद्रुपदौ महारथौ ; पृथक्चमूभ्यामभिवर्तमानौ ।

यदा द्रष्टारौ धार्तराष्ट्रान्ससैन्यां ;स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०३१ ॥

यदा कृतास्त्रो द्रुपदः प्रचिन्व ;ञ्शिरांसि यूनां समरे रथस्थः ।
क्रुद्धः शरैश्छेत्स्यति चापमुक्तै ;स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०३२ ॥

यदा विराटः परवीरघाती ; मर्मान्तरे शत्रुचमूं प्रवेष्टा ।
मत्स्यैः सार्धमनृशंसरूपै ;स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०३३ ॥

ज्येष्ठं मात्स्यानामनृशंसरूपं ; विराटपुत्रं रथिनं पुरस्तात् ।
यदा द्रष्टा दंशितं पाण्डवार्थे ; तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०३४ ॥

रणे हते कौरवाणां प्रवीरे ; शिखण्डिना सत्तमे शंतनूजे ।
न जातु नः शत्रवो धारयेयु ;रसंशयं सत्यमेतद्ब्रवीमि ॥ ०३५ ॥

यदा शिखण्डी रथिनः प्रचिन्व ;न्भीष्मं रथेनाभियाता वरूथी ।
दिव्यैर्हयैरवमृद्नन्रथौघां ;स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०३६ ॥

यदा द्रष्टा सृञ्जयानामनीके ; धृष्टद्युम्नं प्रमुखे रोचमानम् ।
अस्त्रं यस्मै गुह्यमुवाच धीमा ;न्द्रोणस्तदा तप्स्यति धार्तराष्ट्रः ॥ ०३७ ॥

यदा स सेनापतिरप्रमेयः ; पराभवन्निषुभिर्धार्तराष्ट्रान् ।
द्रोणं रणे शत्रुसहोऽभियाता ; तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०३८ ॥

ह्रीमान्मनीषी बलवान्मनस्वी ; स लक्ष्मीवान्सोमकानां प्रबर्हः ।
न जातु तं शत्रवोऽन्ये सहेर ;न्येषां स स्यादग्रणीर्वृष्णिसिंहः ॥ ०३९ ॥

ब्रूयाच्च मा प्रवृणीष्वेति लोके ; युद्धेऽद्वितीयं सचिवं रथस्थम् ।
शिनेर्नप्तारं प्रवृणीम सात्यकिं ; महाबलं वीतभयं कृतास्त्रम् ॥ ०४० ॥

यदा शिनीनामधिपो मयोक्तः ; शरैः परान्मेघ इव प्रवर्षन् ।
प्रच्छादयिष्यञ्शरजालेन योधां ;स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०४१ ॥

यदा धृतिं कुरुते योत्स्यमानः ; स दीर्घबाहुर्दृढधन्वा महात्मा ।
सिंहस्येव गन्धमाघ्राय गावः ; संवेष्टन्ते शत्रवोऽस्माद्यथाग्नेः ॥ ०४२ ॥

स दीर्घबाहुर्दृढधन्वा महात्मा ; भिन्द्याद्गिरीन्संहरेत्सर्वलोकान् ।
अस्त्रे कृती निपुणः क्षिप्रहस्तो ; दिवि स्थितः सूर्य इवाभिभाति ॥ ०४३ ॥

चित्रः सूक्ष्मः सुकृतो यादवस्य ; अस्त्रे योगो वृष्णिसिंहस्य भूयान् ।
यथाविधं योगमाहुः प्रशस्तं ; सर्वैर्गुणैः सात्यकिस्तैरुपेतः ॥ ०४४ ॥

हिरण्मयं श्वेतहयैश्चतुर्भि ;र्यदा युक्तं स्यन्दनं माधवस्य ।
द्रष्टा युद्धे सात्यकेर्वै सुयोधन ;स्तदा तप्स्यत्यकृतात्मा स मन्दः ॥ ०४५ ॥

यदा रथं हेममणिप्रकाशं ; श्वेताश्वयुक्तं वानरकेतुमुग्रम् ।
द्रष्टा रणे संयतं केशवेन ; तदा तप्स्यत्यकृतात्मा स मन्दः ॥ ०४६ ॥

यदा मौर्व्यास्तलनिष्पेषमुग्रं ; महाशब्दं वज्रनिष्पेषतुल्यम् ।
विधूयमानस्य महारणे मया ; गाण्डीवस्य श्रोष्यति मन्दबुद्धिः ॥ ०४७ ॥

तदा मूढो धृतराष्ट्रस्य पुत्र ;स्तप्ता युद्धे दुर्मतिर्दुःसहायः ।
दृष्ट्वा सैन्यं बाणवर्षान्धकारं ; प्रभज्यन्तं गोकुलवद्रणाग्रे ॥ ०४८ ॥

बलाहकादुच्चरन्तीव विद्यु ;त्सहस्रघ्नी द्विषतां सङ्गमेषु ।
अस्थिच्छिदो मर्मभिदो वमेच्छरां ;स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०४९ ॥

यदा द्रष्टा ज्यामुखाद्बाणसंघा ;न्गाण्डीवमुक्तान्पततः शिताग्रान् ।
नागान्हयान्वर्मिणश्चाददानां ;स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०५० ॥

यदा मन्दः परबाणान्विमुक्ता ;न्ममेषुभिर्ह्रियमाणान्प्रतीपम् ।
तिर्यग्विद्धांश्छिद्यमानान्क्षुरप्रै ;स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०५१ ॥

यदा विपाठा मद्भुजविप्रमुक्ता ; द्विजाः फलानीव महीरुहाग्रात् ।
प्रच्छेत्तार उत्तमाङ्गानि यूनां ; तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०५२ ॥

यदा द्रष्टा पततः स्यन्दनेभ्यो ; महागजेभ्योऽश्वगतांश्च योधान् ।
शरैर्हतान्पातितांश्चैव रङ्गे ; तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ०५३ ॥

पदातिसंघात्रथसंघान्समन्ता ;द्व्यात्ताननः काल इवाततेषुः ।
प्रणोत्स्यामि ज्वलितैर्बाणवर्षैः ; शत्रूंस्तदा तप्स्यति मन्दबुद्धिः ॥ ०५४ ॥

सर्वा दिशः संपतता रथेन ; रजोध्वस्तं गाण्डिवेनापकृत्तम् ।
यदा द्रष्टा स्वबलं संप्रमूढं ; तदा पश्चात्तप्स्यति मन्दबुद्धिः ॥ ०५५ ॥

कांदिग्भूतं छिन्नगात्रं विसञ्ज्ञं ; दुर्योधनो द्रक्ष्यति सर्वसैन्यम् ।
हताश्ववीराग्र्यनरेन्द्रनागं ; पिपासितं श्रान्तपत्रं भयार्तम् ॥ ०५६ ॥

आर्तस्वरं हन्यमानं हतं च ; विकीर्णकेशास्थिकपालसंघम् ।
प्रजापतेः कर्म यथार्धनिष्ठितं ; तदा दृष्ट्वा तप्स्यते मन्दबुद्धिः ॥ ०५७ ॥

यदा रथे गाण्डिवं वासुदेवं ; दिव्यं शङ्खं पाञ्चजन्यं हयांश्च ।
तूणावक्षय्यौ देवदत्तं च मां च ; द्रष्टा युद्धे धार्तराष्ट्रः समेतान् ॥ ०५८ ॥

उद्वर्तयन्दस्युसंघान्समेता ;न्प्रवर्तयन्युगमन्यद्युगान्ते ।
यदा धक्ष्याम्यग्निवत्कौरवेयां ;स्तदा तप्ता धृतराष्ट्रः सपुत्रः ॥ ०५९ ॥

सहभ्राता सहपुत्रः ससैन्यो ; भ्रष्टैश्वर्यः क्रोधवशोऽल्पचेताः ।
दर्पस्यान्ते विहिते वेपमानः ; पश्चान्मन्दस्तप्स्यति धार्तराष्ट्रः ॥ ०६० ॥

पूर्वाह्णे मां कृतजप्यं कदा चि ;द्विप्रः प्रोवाचोदकान्ते मनोज्ञम् ।
कर्तव्यं ते दुष्करं कर्म पार्थ ; योद्धव्यं ते शत्रुभिः सव्यसाचिन् ॥ ०६१ ॥

इन्द्रो वा ते हरिवान्वज्रहस्तः ; पुरस्ताद्यातु समरेऽरीन्विनिघ्नन् ।

सुग्रीवयुक्तेन रथेन वा ते ; पश्चात्कृष्णो रक्षतु वासुदेवः ॥ ०६२ ॥

वव्रे चाहं वज्रहस्तान्महेन्द्रा ;दस्मिन्युद्धे वासुदेवं सहायम् ।
स मे लब्धो दस्युवधाय कृष्णो ; मन्ये चैतद्विहितं दैवतैर्मे ॥ ०६३ ॥

अयुध्यमानो मनसापि यस्य ; जयं कृष्णः पुरुषस्याभिनन्देत् ।
ध्रुवं सर्वान्सोऽभ्यतीयादमित्रा ;न्सेन्द्रान्देवान्मानुषे नास्ति चिन्ता ॥ ०६४ ॥

स बाहुभ्यां सागरमुत्तितीर्षे ;न्महोदधिं सलिलस्याप्रमेयम् ।
तेजस्विनं कृष्णमत्यन्तशूरं ; युद्धेन यो वासुदेवं जिगीषेत् ॥ ०६५ ॥

गिरिं य इच्छेत तलेन भेत्तुं ; शिलोच्चयं श्वेतमतिप्रमाणम् ।
तस्यैव पाणिः सनखो विशीर्ये ;न्न चापि किञ्चित्स गिरेस्तु कुर्यात् ॥ ०६६ ॥

अग्निं समिद्धं शमयेद्भुजाभ्यां ; चन्द्रं च सूर्यं च निवारयेत ।
हरेद्देवानाममृतं प्रसह्य ; युद्धेन यो वासुदेवं जिगीषेत् ॥ ०६७ ॥

यो रुक्मिणीमेकरथेन भोज्या ;मुत्साद्य राज्ञां विषयं प्रसह्य ।
उवाह भार्यां यशसा ज्वलन्तीं ; यस्यां जज्ञे रौक्मिणेयो महात्मा ॥ ०६८ ॥

अयं गान्धारांस्तरसा संप्रमथ्य ; जित्वा पुत्रान्नग्नजितः समग्रान् ।
बद्धं मुमोच विनदन्तं प्रसह्य ; सुदर्शनीयं देवतानां ललामम् ॥ ०६९ ॥

अयं कवाटे निजघान पाण्ड्यं ; तथा कलिङ्गान्दन्तकूरे ममर्द ।
अनेन दग्धा वर्षपूगान्विनाथा ; वाराणसी नगरी संबभूव ॥ ०७० ॥

यं स्म युद्धे मन्यतेऽन्यैरजेय ;मेकलव्यं नाम निषादराजम् ।
वेगेनेव शैलमभिहत्य जम्भः ; शेते स कृष्णेन हतः परासुः ॥ ०७१ ॥

तथोग्रसेनस्य सुतं प्रदुष्टं ; वृष्ण्यन्धकानां मध्यगां तपन्तम् ।
अपातयद्बलदेवद्वितीयो ; हत्वा ददौ चोग्रसेनाय राज्यम् ॥ ०७२ ॥

अयं सौभं योधयामास खस्थं ; विभीषणं मायया शाल्वराजम् ।
सौभद्वारि प्रत्यगृह्णाच्छतघ्नीं ; दोर्भ्यां क एनं विषहेत मर्त्यः ॥ ०७३ ॥

प्राग्ज्योतिषं नाम बभूव दुर्गं ; पुरं घोरमसुराणामसह्यम् ।
महाबलो नरकस्तत्र भौमो ; जहारादित्या मणिकुण्डले शुभे ॥ ०७४ ॥

न तं देवाः सह शक्रेण सेहिरे ; समागता आहरणाय भीताः ।
दृष्ट्वा च ते विक्रमं केशवस्य ; बलं तथैवास्त्रमवारणीयम् ॥ ०७५ ॥

जानन्तोऽस्य प्रकृतिं केशवस्य ; न्ययोजयन्दस्युवधाय कृष्णम् ।
स तत्कर्म प्रतिशुश्राव दुष्कर ;मैश्वर्यवान्सिद्धिषु वासुदेवः ॥ ०७६ ॥

निर्मोचने षट्सहस्राणि हत्वा ; संछिद्य पाशान्सहसा क्षुरान्तान् ।
मुरं हत्वा विनिहत्यौघराक्षसं ; निर्मोचनं चापि जगाम वीरः ॥ ०७७ ॥

तत्रैव तेनास्य बभूव युद्धं ; महाबलेनातिबलस्य विष्णोः ।
शेते स कृष्णेन हतः परासु ;र्वातेनेव मथितः कर्णिकारः ॥ ०७८ ॥

आहृत्य कृष्णो मणिकुण्डले ते ; हत्वा च भौमं नरकं मुरं च ।
श्रिया वृतो यशसा चैव धीमा ;न्प्रत्याजगामाप्रतिमप्रभावः ॥ ०७९ ॥

तस्मै वरानददंस्तत्र देवा ; दृष्ट्वा भीमं कर्म रणे कृतं तत् ।
श्रमश्च ते युध्यमानस्य न स्या ;दाकाशे वा अप्सु चैव क्रमः स्यात् ॥ ०८० ॥

शस्त्राणि गात्रे च न ते क्रमेर ;न्नित्येव कृष्णश्च ततः कृतार्थः ।
एवंरूपे वासुदेवेऽप्रमेये ; महाबले गुणसंपत्सदैव ॥ ०८१ ॥

तमसह्यं विष्णुमनन्तवीर्य ;माशंसते धार्तराष्ट्रो बलेन ।
यदा ह्येनं तर्कयते दुरात्मा ; तच्चाप्ययं सहतेऽस्मान्समीक्ष्य ॥ ०८२ ॥

पर्यागतं मम कृष्णस्य चैव ; यो मन्यते कलहं संप्रयुज्य ।
शक्यं हर्तुं पाण्डवानां ममत्वं ; तद्वेदिता संयुगं तत्र गत्वा ॥ ०८३ ॥

नमस्कृत्वा शांतनवाय राज्ञे ; द्रोणायाथो सहपुत्राय चैव ।
शारद्वतायाप्रतिद्वन्द्विने च ; योत्स्याम्यहं राज्यमभीप्समानः ॥ ०८४ ॥

धर्मेणास्त्रं नियतं तस्य मन्ये ; यो योत्स्यते पाण्डवैर्धर्मचारी ।
मिथ्याग्लहे निर्जिता वै नृशंसैः ; संवत्सरान्द्वादश पाण्डुपुत्राः ॥ ०८५ ॥

अवाप्य कृच्छ्रं विहितं ह्यरण्ये ; दीर्घं कालं चैकमज्ञातचर्याम् ।
ते ह्यकस्माज्जीवितं पाण्डवानां ; न मृष्यन्ते धार्तराष्ट्राः पदस्थाः ॥ ०८६ ॥

ते चेदस्मान्युध्यमानाञ्जयेयु ;र्देवैरपीन्द्रप्रमुखैः सहायैः ।
धर्मादधर्मश्चरितो गरीया ;निति ध्रुवं नास्ति कृतं न साधु ॥ ०८७ ॥

न चेदिमं पुरुषं कर्मबद्धं ; न चेदस्मान्मन्यतेऽसौ विशिष्टान् ।
आशंसेऽहं वासुदेवद्वितीयो ; दुर्योधनं सानुबन्धं निहन्तुम् ॥ ०८८ ॥

न चेदिदं कर्म नरेषु बद्धं ; न विद्यते पुरुषस्य स्वकर्म ।
इदं च तच्चापि समीक्ष्य नूनं ; पराजयो धार्तराष्ट्रस्य साधुः ॥ ०८९ ॥

प्रत्यक्षं वः कुरवो यद्ब्रवीमि ; युध्यमाना धार्तराष्ट्रा न सन्ति ।
अन्यत्र युद्धात्कुरवः परीप्स ;न्न युध्यतां शेष इहास्ति कश्चित् ॥ ०९० ॥

हत्वा त्वहं धार्तराष्ट्रान्सकर्णा ;न्राज्यं कुरूणामवजेता समग्रम् ।
यद्वः कार्यं तत्कुरुध्वं यथास्व ;मिष्टान्दारानात्मजांश्चोपभुङ्क्त ॥ ०९१ ॥

अप्येवं नो ब्राह्मणाः सन्ति वृद्धा ; बहुश्रुताः शीलवन्तः कुलीनाः ।
सांवत्सरा ज्योतिषि चापि युक्ता ; नक्षत्रयोगेषु च निश्चयज्ञाः ॥ ०९२ ॥

उच्चावचं दैवयुक्तं रहस्यं ; दिव्याः प्रश्ना मृगचक्रा मुहूर्ताः ।

क्षयं महान्तं कुरुसृञ्जयानां ; निवेदयन्ते पाण्डवानां जयं च ॥ ०९३ ॥

तथा हि नो मन्यतेऽजातशत्रुः ; संसिद्धार्थो द्विषतां निग्रहाय ।
जनार्दनश्चाप्यपरोक्षविद्यो ; न संशयं पश्यति वृष्णिसिंहः ॥ ०९४ ॥

अहं च जानामि भविष्यरूपं ; पश्यामि बुद्ध्या स्वयमप्रमत्तः ।
दृष्टिश्च मे न व्यथते पुराणी ; युध्यमाना धार्तराष्ट्रा न सन्ति ॥ ०९५ ॥

अनालब्धं जृम्भति गाण्डिवं धनु ;रनालब्धा कम्पति मे धनुर्ज्या ।
बाणाश्च मे तूणमुखाद्विसृज्य ; मुहुर्मुहुर्गन्तुमुशन्ति चैव ॥ ०९६ ॥

सैक्यः कोशान्निःसरति प्रसन्नो ; हित्वेव जीर्णामुरगस्त्वचं स्वाम् ।
ध्वजे वाचो रौद्ररूपा वदन्ति ; कदा रथो योक्ष्यते ते किरीटिन् ॥ ०९७ ॥

गोमायुसंघाश्च वदन्ति रात्रौ ; रक्षांस्यथो निष्पतन्त्यन्तरिक्षात् ।
मृगाः शृगालाः शितिकण्ठाश्च काका ; गृध्रा बडाश्चैव तरक्षवश्च ॥ ०९८ ॥

सुपर्णपाताश्च पतन्ति पश्चा ;द्दृष्ट्वा रथं श्वेतहयप्रयुक्तम् ।
अहं ह्येकः पार्थिवान्सर्वयोधा ;ञ्शरान्वर्षन्मृत्युलोकं नयेयम् ॥ ०९९ ॥

समाददानः पृथगस्त्रमार्गा ;न्यथाग्निरिद्धो गहनं निदाघे ।
स्थूणाकर्णं पाशुपतं च घोरं ; तथा ब्रह्मास्त्रं यच्च शक्रो विवेद ॥ १०० ॥

वधे धृतो वेगवतः प्रमुञ्च ;न्नाहं प्रजाः किंचिदिवावशिष्ये ।
शान्तिं लप्स्ये परमो ह्येष भावः ; स्थिरो मम ब्रूहि गावल्गणे तान् ॥ १०१ ॥

नित्यं पुनः सचिवैर्यैरवोच ;द्देवानपीन्द्रप्रमुखान्सहायान् ।
तैर्मन्यते कलहं संप्रयुज्य ; स धार्तराष्ट्रः पश्यत मोहमस्य ॥ १०२ ॥

वृद्धो भीष्मः शांतनवः कृपश्च ; द्रोणः सपुत्रो विदुरश्च धीमान् ।
एते सर्वे यद्वदन्ते तदस्तु ; आयुष्मन्तः कुरवः सन्तु सर्वे ॥ १०३ ॥

# अध्याय ०४८

वैशंपायन उवाच ॥

समवेतेषु सर्वेषु तेषु राजसु भारत ।
दुर्योधनमिदं वाक्यं भीष्मः शांतनवोऽब्रवीत् ॥ ००१ ॥

बृहस्पतिश्चोशना च ब्रह्माणं पर्युपस्थितौ ।
मरुतश्च सहेन्द्रेण वसवश्च सहाश्विनौ ॥ ००२ ॥

आदित्याश्चैव साध्याश्च ये च सप्तर्षयो दिवि ।
विश्वावसुश्च गन्धर्वः शुभाश्चाप्सरसां गणाः ॥ ००३ ॥

नमस्कृत्वोपजग्मुस्ते लोकवृद्धं पितामहम् ।
परिवार्य च विश्वेशं पर्यासत दिवौकसः ॥ ००४ ॥

तेषां मनश्च तेजश्चाप्याददानौ दिवौकसाम् ।
पूर्वदेवौ व्यतिक्रान्तौ नरनारायणावृषी ॥ ००५ ॥

बृहस्पतिश्च पप्रच्छ ब्राह्मणं काविमाविति ।
भवन्तं नोपतिष्ठेते तौ नः शंस पितामह ॥ ००६ ॥

ब्रह्मोवाच ॥

यावेतौ पृथिवीं द्यां च भासयन्तौ तपस्विनौ ।
ज्वलन्तौ रोचमानौ च व्याप्यातीतौ महाबलौ ॥ ००७ ॥

नरनारायणावेतौ लोकाल्लोकं समास्थितौ ।
ऊर्जितौ स्वेन तपसा महासत्त्वपराक्रमौ ॥ ००८ ॥

एतौ हि कर्मणा लोकान्नन्दयामासतुर्ध्रुवौ ।
असुराणामभावाय देवगन्धर्वपूजितौ ॥ ००९ ॥

वैशंपायन उवाच ॥

जगाम शक्रस्तच्छ्रुत्वा यत्र तौ तेपतुस्तपः ।
सार्धं देवगणैः सर्वैर्बृहस्पतिपुरोगमैः ॥ ०१० ॥

तदा देवासुरे घोरे भये जाते दिवौकसाम् ।
अयाचत महात्मानौ नरनारायणौ वरम् ॥ ०११ ॥

तावब्रूतां वृणीष्वेति तदा भरतसत्तम ।
अथैतावब्रवीच्छक्रः साह्यं नः क्रियतामिति ॥ ०१२ ॥

ततस्तौ शक्रमब्रूतां करिष्यावो यदिच्छसि ।
ताभ्यां च सहितः शक्रो विजिग्ये दैत्यदानवान् ॥ ०१३ ॥

नर इन्द्रस्य सङ्ग्रामे हत्वा शत्रून्परंतपः ।
पौलोमान्कालखञ्जांश्च सहस्राणि शतानि च ॥ ०१४ ॥

एष भ्रान्ते रथे तिष्ठन्भल्लेनापहरच्छिरः ।
जम्भस्य ग्रसमानस्य यज्ञमर्जुन आहवे ॥ ०१५ ॥

एष पारे समुद्रस्य हिरण्यपुरमारुजत् ।
हत्वा षष्टिसहस्राणि निवातकवचान्रणे ॥ ०१६ ॥

एष देवान्सहेन्द्रेण जित्वा परपुरञ्जयः ।
अतर्पयन्महाबाहुरर्जुनो जातवेदसम् ॥ ०१७ ॥

नारायणस्तथैवात्र भूयसोऽन्याञ्जघान ह ॥ ०१७ ॥

एवमेतौ महावीर्यौ तौ पश्यत समागतौ ।
वासुदेवार्जुनौ वीरौ समवेतौ महारथौ ॥ ०१८ ॥

नरनारायणौ देवौ पूर्वदेवाविति श्रुतिः ।
अजेयौ मानुषे लोके सेन्द्रैरपि सुरासुरैः ॥ ०१९ ॥

एष नारायणः कृष्णः फल्गुनस्तु नरः स्मृतः ।
नारायणो नरश्चैव सत्त्वमेकं द्विधाकृतम् ॥ ०२० ॥

एतौ हि कर्मणा लोकानश्नुवातेऽक्षयान्ध्रुवान् ।
तत्र तत्रैव जायेते युद्धकाले पुनः पुनः ॥ ०२१ ॥

तस्मात्कर्मैव कर्तव्यमिति होवाच नारदः ।
एतद्धि सर्वमाचष्ट वृष्णिचक्रस्य वेदवित् ॥ ०२२ ॥

शङ्खचक्रगदाहस्तं यदा द्रक्ष्यसि केशवम् ।
पर्याददानं चास्त्राणि भीमधन्वानमर्जुनम् ॥ ०२३ ॥

सनातनौ महात्मानौ कृष्णावेकरथे स्थितौ ।
दुर्योधन तदा तात स्मर्तासि वचनं मम ॥ ०२४ ॥

नो चेदयमभावः स्यात्कुरूणां प्रत्युपस्थितः ।
अर्थाच्च तात धर्माच्च तव बुद्धिरुपप्लुता ॥ ०२५ ॥

न चेद्ग्रहीष्यसे वाक्यं श्रोतासि सुबहून्हतान् ।
तवैव हि मतं सर्वे कुरवः पर्युपासते ॥ ०२६ ॥

त्रयाणामेव च मतं तत्त्वमेकोऽनुमन्यसे ।

रामेण चैव शप्तस्य कर्णस्य भरतर्षभ ॥ ०२७ ॥

दुर्जातेः सूतपुत्रस्य शकुनेः सौबलस्य च ।
तथा क्षुद्रस्य पापस्य भ्रातुर्दुःशासनस्य च ॥ ०२८ ॥

कर्ण उवाच ॥

नैवमायुष्मता वाच्यं यन्मामात्थ पितामह ।
क्षत्रधर्मे स्थितो ह्यस्मि स्वधर्मादनपेयिवान् ॥ ०२९ ॥

किं चान्यन्मयि दुर्वृत्तं येन मां परिगर्हसे ।
न हि मे वृजिनं किञ्चिद्धार्तराष्ट्रा विदुः क्वचित् ॥ ०३० ॥

राज्ञो हि धृतराष्ट्रस्य सर्वं कार्यं प्रियं मया ।
तथा दुर्योधनस्यापि स हि राज्ये समाहितः ॥ ०३१ ॥

वैशंपायन उवाच ॥

कर्णस्य तु वचः श्रुत्वा भीष्मः शांतनवः पुनः ।
धृतराष्ट्रं महाराजमाभाष्येदं वचोऽब्रवीत् ॥ ०३२ ॥

यदयं कत्थते नित्यं हन्ताहं पाण्डवानिति ।
नायं कलापि संपूर्णा पाण्डवानां महात्मनाम् ॥ ०३३ ॥

अनयो योऽयमागन्ता पुत्राणां ते दुरात्मनाम् ।
तदस्य कर्म जानीहि सूतपुत्रस्य दुर्मतेः ॥ ०३४ ॥

एनमाश्रित्य पुत्रस्ते मन्दबुद्धिः सुयोधनः ।
अवमन्यत तान्वीरान्देवपुत्रानरिंदमान् ॥ ०३५ ॥

किं चाप्यनेन तत्कर्म कृतं पूर्वं सुदुष्करम् ।

तैर्यथा पाण्डवैः सर्वैरेकैकेन कृतं पुरा ॥ ०३६ ॥

दृष्ट्वा विराटनगरे भ्रातरं निहतं प्रियम् ।
धनञ्जयेन विक्रम्य किमनेन तदा कृतम् ॥ ०३७ ॥

सहितान्हि कुरून्सर्वानभियातो धनञ्जयः ।
प्रमथ्य चाच्छिनद्वासः किमयं प्रोषितस्तदा ॥ ०३८ ॥

गन्धर्वैर्घोषयात्रायां ह्रियते यत्सुतस्तव ।
क्व तदा सूतपुत्रोऽभूद्य इदानीं वृषायते ॥ ०३९ ॥

ननु तत्रापि पार्थेन भीमेन च महात्मना ।
यमाभ्यामेव चागम्य गन्धर्वास्ते पराजिताः ॥ ०४० ॥

एतान्यस्य मृषोक्तानि बहूनि भरतर्षभ ।
विकत्थनस्य भद्रं ते सदा धर्मार्थलोपिनः ॥ ०४१ ॥

भीष्मस्य तु वचः श्रुत्वा भारद्वाजो महामनाः ।
धृतराष्ट्रमुवाचेदं राजमध्येऽभिपूजयन् ॥ ०४२ ॥

यदाह भरतश्रेष्ठो भीष्मस्तत्क्रियतां नृप ।
न काममर्थलिप्सूनां वचनं कर्तुमर्हसि ॥ ०४३ ॥

पुरा युद्धात्साधु मन्ये पाण्डवैः सह सङ्गमम् ।
यद्वाक्यमर्जुनेनोक्तं सञ्जयेन निवेदितम् ॥ ०४४ ॥

सर्वं तदभिजानामि करिष्यति च पाण्डवः ।
न ह्यस्य त्रिषु लोकेषु सदृशोऽस्ति धनुर्धरः ॥ ०४५ ॥

अनादृत्य तु तद्वाक्यमर्थवद्द्रोणभीष्मयोः ।
ततः स सञ्जयं राजा पर्यपृच्छत पाण्डवम् ॥ ०४६ ॥

तदैव कुरवः सर्वे निराशा जीवितेऽभवन् ।
भीष्मद्रोणौ यदा राजा न सम्यगनुभाषते ॥ ०४७ ॥

---

# अध्याय ०४९

धृतराष्ट्र उवाच ॥

किमसौ पाण्डवो राजा धर्मपुत्रोऽभ्यभाषत ।
श्रुत्वेमा बहुलाः सेनाः प्रत्यर्थेन समागताः ॥ ००१ ॥

किमिच्छत्यभिसंरम्भाद्योत्स्यमानो युधिष्ठिरः ।
कस्य स्विद्भ्रातृपुत्राणां चिन्तासु मुखमीक्षते ॥ ००२ ॥

के स्विदेनं वारयन्ति शाम्य युध्येति वा पुनः ।
निकृत्या कोपितं मन्दैर्धर्मज्ञं धर्मचारिणम् ॥ ००३ ॥

सञ्जय उवाच ॥

राज्ञो मुखमुदीक्षन्ते पाञ्चालाः पाण्डवैः सह ।
युधिष्ठिरस्य भद्रं ते स सर्वाननुशास्ति च ॥ ००४ ॥

पृथग्भूताः पाण्डवानां पाञ्चालानां रथव्रजाः ।
आयान्तमभिनन्दन्ति कुन्तीपुत्रं युधिष्ठिरम् ॥ ००५ ॥

तमः सूर्यमिवोद्यन्तं कौन्तेयं दीप्ततेजसम् ।
पाञ्चालाः प्रतिनन्दन्ति तेजोराशिमिवोद्यतम् ॥ ००६ ॥

आ गोपालाविपालेभ्यो नन्दमानं युधिष्ठिरम् ।
पाञ्चालाः केकया मत्स्याः प्रतिनन्दन्ति पाण्डवम्  ॥ ००७  ॥

ब्राह्मण्यो राजपुत्र्यश्च विशां दुहितरश्च याः ।
क्रीडन्त्योऽभिसमायान्ति पार्थं संनद्धमीक्षितुम्  ॥ ००८  ॥

धृतराष्ट्र उवाच  ॥

सञ्जयाचक्ष्व केनास्मान्पाण्डवा अभ्ययुञ्जत ।
धृष्टद्युम्नेन सेनान्या सोमकाः किंबला इव  ॥ ००९  ॥

वैशंपायन उवाच  ॥

गावल्गणिस्तु तत्पृष्टः सभायां कुरुसंसदि ।
निःश्वस्य सुभृशं दीर्घं मुहुः सञ्चिन्तयन्निव  ॥ ०१०  ॥

तत्रानिमित्ततो दैवात्सूतं कश्मलमाविशत्  ॥ ०१०  ॥

तदाचचक्षे पुरुषः सभायां राजसंसदि ।
सञ्जयोऽयं महाराज मूर्च्छितः पतितो भुवि  ॥ ०११  ॥

वाचं न सृजते काञ्चिद्धीनप्रज्ञोऽल्पचेतनः  ॥ ०११  ॥

धृतराष्ट्र उवाच  ॥

अपश्यत्सञ्जयो नूनं कुन्तीपुत्रान्महारथान् ।
तैरस्य पुरुषव्याघ्रैर्भृशमुद्वेजितं मनः  ॥ ०१२  ॥

वैशंपायन उवाच  ॥

सञ्जयश्चेतनां लब्ध्वा प्रत्याश्वस्येदमब्रवीत् ।
धृतराष्ट्रं महाराज सभायां कुरुसंसदि ॥ ०१३ ॥

दृष्टवानस्मि राजेन्द्र कुन्तीपुत्रान्महारथान् ।
मत्स्यराजगृहावासादवरोधेन कर्शितान् ॥ ०१४ ॥

शृणु यैर्हि महाराज पाण्डवा अभ्ययुञ्जत ॥ ०१४ ॥

यो नैव रोषान्न भयान्न कामान्नार्थकारणात् ।
न हेतुवादाद्धर्मात्मा सत्यं जह्यात्कथञ्चन ॥ ०१५ ॥

यः प्रमाणं महाराज धर्मे धर्मभृतां वरः ।
अजातशत्रुणा तेन पाण्डवा अभ्ययुञ्जत ॥ ०१६ ॥

यस्य बाहुबले तुल्यः पृथिव्यां नास्ति कश्चन ।
यो वै सर्वान्महीपालान्वशे चक्रे धनुर्धरः ॥ ०१७ ॥

तेन वो भीमसेनेन पाण्डवा अभ्ययुञ्जत ॥ ०१७ ॥

निःसृतानां जतुगृहाद्धिडिम्बात्पुरुषादकात् ।
य एषामभवद्वीपः कुन्तीपुत्रो वृकोदरः ॥ ०१८ ॥

याज्ञसेनीमथो यत्र सिन्धुराजोऽपकृष्टवान् ।
तत्रैषामभवद्वीपः कुन्तीपुत्रो वृकोदरः ॥ ०१९ ॥

यश्च तान्सङ्गतान्सर्वान्पाण्डवान्वारणावते ।
दह्यतो मोचयामास तेन वस्तेऽभ्ययुञ्जत ॥ ०२० ॥

कृष्णायाश्चरता प्रीतिं येन क्रोधवशा हताः ।
प्रविश्य विषमं घोरं पर्वतं गन्धमादनम् ॥ ०२१ ॥

यस्य नागायुतं वीर्यं भुजयोः सारमर्पितम् ।
तेन वो भीमसेनेन पाण्डवा अभ्ययुञ्जत ॥ ०२२ ॥

कृष्णाद्द्वितीयो विक्रम्य तुष्ट्यर्थं जातवेदसः ।
अजयद्यः पुरा वीरो युध्यमानं पुरंदरम् ॥ ०२३ ॥

यः स साक्षान्महादेवं गिरिशं शूलपाणिनम् ।
तोषयामास युद्धेन देवदेवमुमापतिम् ॥ ०२४ ॥

यश्च सर्वान्वशे चक्रे लोकपालान्धनुर्धरः ।
तेन वो विजयेनाजौ पाण्डवा अभ्ययुञ्जत ॥ ०२५ ॥

यः प्रतीचीं दिशं चक्रे वशे म्लेच्छगणायुताम् ।
स तत्र नकुलो योद्धा चित्रयोधी व्यवस्थितः ॥ ०२६ ॥

तेन वो दर्शनीयेन वीरेणातिधनुर्भृता ।
माद्रीपुत्रेण कौरव्य पाण्डवा अभ्ययुञ्जत ॥ ०२७ ॥

यः काशीनङ्गमगधान्कलिङ्गांश्च युधाजयत् ।
तेन वः सहदेवेन पाण्डवा अभ्ययुञ्जत ॥ ०२८ ॥

यस्य वीर्येण सदृशाश्चत्वारो भुवि मानवाः ।
अश्वत्थामा धृष्टकेतुः प्रद्युम्नो रुक्मिरेव च ॥ ०२९ ॥

तेन वः सहदेवेन पाण्डवा अभ्ययुञ्जत ।
यवीयसा नृवीरेण माद्रीनन्दिकरेण च ॥ ०३० ॥

तपश्चचार या घोरं काशिकन्या पुरा सती ।
भीष्मस्य वधमिच्छन्ती प्रेत्यापि भरतर्षभ ॥ ०३१ ॥

पाञ्चालस्य सुता जज्ञे दैवाच्च स पुनः पुमान् ।

स्त्रीपुंसोः पुरुषव्याघ्र यः स वेद गुणागुणान्  ॥ ०३२  ॥

यः कलिङ्गान्समापेदे पाञ्चालो युद्धदुर्मदः ।
शिखण्डिना वः कुरवः कृतास्त्रेणाभ्ययुञ्जत  ॥ ०३३  ॥

यां यक्षः पुरुषं चक्रे भीष्मस्य निधने किल ।
महेष्वासेन रौद्रेण पाण्डवा अभ्ययुञ्जत  ॥ ०३४  ॥

महेष्वासा राजपुत्रा भ्रातरः पञ्च केकयाः ।
सुमृष्टकवचाः शूरास्तैश्च वस्तेऽभ्ययुञ्जत  ॥ ०३५  ॥

यो दीर्घबाहुः क्षिप्रास्त्रो धृतिमान्सत्यविक्रमः ।
तेन वो वृष्णिवीरेण युयुधानेन सङ्गरः  ॥ ०३६  ॥

य आसीच्छरणं काले पाण्डवानां महात्मनाम् ।
रणे तेन विराटेन पाण्डवा अभ्ययुञ्जत  ॥ ०३७  ॥

यः स काशिपती राजा वाराणस्यां महारथः ।
स तेषामभवद्योद्धा तेन वस्तेऽभ्ययुञ्जत  ॥ ०३८  ॥

शिशुभिर्दुर्जयैः संख्ये द्रौपदेयैर्महात्मभिः ।
आशीविषसमस्पर्शैः पाण्डवा अभ्ययुञ्जत  ॥ ०३९  ॥

यः कृष्णसदृशो वीर्ये युधिष्ठिरसमो दमे ।
तेनाभिमन्युना संख्ये पाण्डवा अभ्ययुञ्जत  ॥ ०४०  ॥

यश्चैवाप्रतिमो वीर्ये धृष्टकेतुर्महायशाः ।
दुःसहः समरे क्रुद्धः शैशुपालिर्महारथः  ॥ ०४१  ॥

तेन वश्चेदिराजेन पाण्डवा अभ्ययुञ्जत  ॥ ०४१  ॥

यः संश्रयः पाण्डवानां देवानामिव वासवः ।
तेन वो वासुदेवेन पाण्डवा अभ्ययुञ्जत ॥ ०४२ ॥

तथा चेदिपतेर्भ्राता शरभो भरतर्षभ ।
करकर्षेण सहितस्ताभ्यां वस्तेऽभ्ययुञ्जत ॥ ०४३ ॥

जारासंधिः सहदेवो जयत्सेनश्च तावुभौ ।
द्रुपदश्च महातेजा बलेन महता वृतः ॥ ०४४ ॥

त्यक्तात्मा पाण्डवार्थाय योत्स्यमानो व्यवस्थितः ॥ ०४४ ॥

एते चान्ये च बहवः प्राच्योदीच्या महीक्षितः ।
शतशो यानपाश्रित्य धर्मराजो व्यवस्थितः ॥ ०४५ ॥

---

## अध्याय ०५०

धृतराष्ट्र उवाच ॥

सर्व एते महोत्साहा ये त्वया परिकीर्तिताः ।
एकतस्त्वेव ते सर्वे समेता भीम एकतः ॥ ००१ ॥

भीमसेनाद्धि मे भूयो भयं सञ्जायते महत् ।
क्रुद्धादमर्षणात्तात व्याघ्रादिव महारुरोः ॥ ००२ ॥

जागर्मि रात्रयः सर्वा दीर्घमुष्णं च निःश्वसन् ।
भीतो वृकोदरात्तात सिंहात्पशुरिवाबलः ॥ ००३ ॥

न हि तस्य महाबाहोः शक्रप्रतिमतेजसः ।

सैन्येऽस्मिन्प्रतिपश्यामि य एनं विषहेद्युधि ॥ ००४ ॥

अमर्षणश्च कौन्तेयो दृढवैरश्च पाण्डवः ।
अनर्महासी सोन्मादस्तिर्यक्प्रेक्षी महास्वनः ॥ ००५ ॥

महावेगो महोत्साहो महाबाहुर्महाबलः ।
मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ॥ ००६ ॥

ऊरुग्राहगृहीतानां गदां बिभ्रद्वृकोदरः ।
कुरूणामृषभो युद्धे दण्डपाणिरिवान्तकः ॥ ००७ ॥

शैक्यायसमयीं घोरां गदां काञ्चनभूषिताम् ।
मनसाहं प्रपश्यामि ब्रह्मदण्डमिवोद्यतम् ॥ ००८ ॥

यथा रुरूणां यूथेषु सिंहो जातबलश्चरेत् ।
मामकेषु तथा भीमो बलेषु विचरिष्यति ॥ ००९ ॥

सर्वेषां मम पुत्राणां स एकः क्रूरविक्रमः ।
बह्वाशी विप्रतीपश्च बाल्येऽपि रभसः सदा ॥ ०१० ॥

उद्वेपते मे हृदयं यदा दुर्योधनादयः ।
बाल्येऽपि तेन युध्यन्तो वारणेनेव मर्दिताः ॥ ०११ ॥

तस्य वीर्येण सङ्क्लिष्टा नित्यमेव सुता मम ।
स एव हेतुर्भेदस्य भीमो भीमपराक्रमः ॥ ०१२ ॥

ग्रसमानमनीकानि नरवारणवाजिनाम् ।
पश्यामीवाग्रतो भीमं क्रोधमूर्छितमाहवे ॥ ०१३ ॥

अस्त्रे द्रोणार्जुनसमं वायुवेगसमं जवे ।
सञ्जयाचक्ष्व मे शूरं भीमसेनममर्षणम् ॥ ०१४ ॥

अतिलाभं तु मन्येऽहं यत्तेन रिपुघातिना ।
तदैव न हताः सर्वे मम पुत्रा मनस्विना ॥ ०१५ ॥

येन भीमबला यक्षा राक्षसाश्च समाहताः ।
कथं तस्य रणे वेगं मानुषः प्रसहिष्यति ॥ ०१६ ॥

न स जातु वशे तस्थौ मम बालोऽपि सञ्जय ।
किं पुनर्मम दुष्पुत्रैः क्लिष्टः संप्रति पाण्डवः ॥ ०१७ ॥

निष्ठुरः स च नैष्ठुर्याद्भज्येदपि न संनमेत् ।
तिर्यक्प्रेक्षी संहतभ्रूः कथं शाम्येद्वृकोदरः ॥ ०१८ ॥

बृहदंसोऽप्रतिबलो गौरस्ताल इवोद्गतः ।
प्रमाणतो भीमसेनः प्रादेशेनाधिकोऽर्जुनात् ॥ ०१९ ॥

जवेन वाजिनोऽत्येति बलेनात्येति कुञ्जरान् ।
अव्यक्तजल्पी मध्वक्षो मध्यमः पाण्डवो बली ॥ ०२० ॥

इति बाल्ये श्रुतः पूर्वं मया व्यासमुखात्पुरा ।
रूपतो वीर्यतश्चैव याथातथ्येन पाण्डवः ॥ ०२१ ॥

आयसेन स दण्डेन रथान्नागान्हयान्नरान् ।
हनिष्यति रणे क्रुद्धो भीमः प्रहरतां वरः ॥ ०२२ ॥

अमर्षी नित्यसंरब्धो रौद्रः क्रूरपराक्रमः ।
मम तात प्रतीपानि कुर्वन्पूर्वं विमानितः ॥ ०२३ ॥

निष्कीर्णामायसीं स्थूलां सुपर्वां काञ्चनीं गदाम् ।
शतघ्नीं शतनिर्ह्रादां कथं शक्ष्यन्ति मे सुताः ॥ ०२४ ॥

अपारमप्लवागाधं समुद्रं शरवेगिनम् ।
भीमसेनमयं दुर्गं तात मन्दास्तितीर्षवः ॥ ०२५ ॥

क्रोशतो मे न शृण्वन्ति बालाः पण्डितमानिनः ।
विषमं नावबुध्यन्ते प्रपातं मधुदर्शिनः ॥ ०२६ ॥

संयुगं ये करिष्यन्ति नररूपेण वायुना ।
नियतं चोदिता धात्रा सिंहेनेव महामृगाः ॥ ०२७ ॥

शैक्यां तात चतुष्किष्कुं षडस्त्रिममितौजसम् ।
प्रहितां दुःखसंस्पर्शां कथं शक्ष्यन्ति मे सुताः ॥ ०२८ ॥

गदां भ्रामयतस्तस्य भिन्दतो हस्तिमस्तकान् ।
सृक्किणी लेलिहानस्य बाष्पमुत्सृजतो मुहुः ॥ ०२९ ॥

उद्दिश्य पातान्पततः कुर्वतो भैरवान्रवान् ।
प्रतीपान्पततो मत्तान्कुञ्जरान्प्रतिगर्जतः ॥ ०३० ॥

विगाह्य रथमार्गेषु वरानुद्दिश्य निघ्नतः ।
अग्नेः प्रज्वलितस्येव अपि मुच्येत मे प्रजा ॥ ०३१ ॥

वीथीं कुर्वन्महाबाहुर्द्रावयन्मम वाहिनीम् ।
नृत्यन्निव गदापाणिर्युगान्तं दर्शयिष्यति ॥ ०३२ ॥

प्रभिन्न इव मातङ्गः प्रभञ्जन्पुष्पितान्द्रुमान् ।
प्रवेक्ष्यति रणे सेनां पुत्राणां मे वृकोदरः ॥ ०३३ ॥

कुर्वन्रथान्विपुरुषान्विध्वजान्भग्नपुष्करान् ।
आरुजन्पुरुषव्याघ्रो रथिनः सादिनस्तथा ॥ ०३४ ॥

गङ्गावेग इवानूपांस्तीरजान्विविधान्द्रुमान् ।

प्रवेक्ष्यति महासेनां पुत्राणां मम सञ्जय ॥ ०३५ ॥

वशं नूनं गमिष्यन्ति भीमसेनबलार्दिताः ।
मम पुत्राश्च भृत्याश्च राजानश्चैव सञ्जय ॥ ०३६ ॥

येन राजा महावीर्यः प्रविश्यान्तःपुरं पुरा ।
वासुदेवसहायेन जरासंधो निपातितः ॥ ०३७ ॥

कृत्स्नेयं पृथिवी देवी जरासंधेन धीमता ।
मागधेन्द्रेण बलिना वशे कृत्वा प्रतापिता ॥ ०३८ ॥

भीष्मप्रतापात्कुरवो नयेनान्धकवृष्णयः ।
ते न तस्य वशं जग्मुः केवलं दैवमेव वा ॥ ०३९ ॥

स गत्वा पाण्डुपुत्रेण तरसा बाहुशालिना ।
अनायुधेन वीरेण निहतः किं ततोऽधिकम् ॥ ०४० ॥

दीर्घकालेन संसिक्तं विषमाशीविषो यथा ।
स मोक्ष्यति रणे तेजः पुत्रेषु मम सञ्जय ॥ ०४१ ॥

महेन्द्र इव वज्रेण दानवान्देवसत्तमः ।
भीमसेनो गदापाणिः सूदयिष्यति मे सुतान् ॥ ०४२ ॥

अविषह्यमनावार्यं तीव्रवेगपराक्रमम् ।
पश्यामीवातिताम्राक्षमापतन्तं वृकोदरम् ॥ ०४३ ॥

अगदस्याप्यधनुषो विरथस्य विवर्मणः ।
बाहुभ्यां युध्यमानस्य कस्तिष्ठेदग्रतः पुमान् ॥ ०४४ ॥

भीष्मो द्रोणश्च विप्रोऽयं कृपः शारद्वतस्तथा ।
जानन्त्येते यथैवाहं वीर्यज्ञस्तस्य धीमतः ॥ ०४५ ॥

आर्यव्रतं तु जानन्तः सङ्गरान्न बिभित्सवः ।
सेनामुखेषु स्थास्यन्ति मामकानां नरर्षभाः ॥ ०४६ ॥

बलीयः सर्वतो दिष्टं पुरुषस्य विशेषतः ।
पश्यन्नपि जयं तेषां न नियच्छामि यत्सुतान् ॥ ०४७ ॥

ते पुराणं महेष्वासा मार्गमैन्द्रं समास्थिताः ।
त्यक्ष्यन्ति तुमुले प्राणान्रक्षन्तः पार्थिवं यशः ॥ ०४८ ॥

यथैषां मामकास्तात तथैषां पाण्डवा अपि ।
पौत्रा भीष्मस्य शिष्याश्च द्रोणस्य च कृपस्य च ॥ ०४९ ॥

यत्त्वस्मदाश्रयं किञ्चिद्दत्तमिष्टं च सञ्जय ।
तस्यापचितिमार्यत्वात्कर्तारः स्थविरास्त्रयः ॥ ०५० ॥

आददानस्य शस्त्रं हि क्षत्रधर्मं परीप्सतः ।
निधनं ब्राह्मणस्याजौ वरमेवाहुरुत्तमम् ॥ ०५१ ॥

स वै शोचामि सर्वान्वै ये युयुत्सन्ति पाण्डवान् ।
विक्रुष्टं विदुरेणादौ तदेतद्भयमागतम् ॥ ०५२ ॥

न तु मन्ये विघाताय ज्ञानं दुःखस्य सञ्जय ।
भवत्यतिबले ह्येतज्ज्ञानमप्युपघातकम् ॥ ०५३ ॥

ऋषयो ह्यपि निर्मुक्ताः पश्यन्तो लोकसङ्ग्रहान् ।
सुखे भवन्ति सुखिनस्तथा दुःखेन दुःखिताः ॥ ०५४ ॥

किं पुनर्योऽहमासक्तस्तत्र तत्र सहस्रधा ।
पुत्रेषु राज्यदारेषु पौत्रेष्वपि च बन्धुषु ॥ ०५५ ॥

संशये तु महत्यस्मिन्किं नु मे क्षममुत्तमम् ।
विनाशं ह्येव पश्यामि कुरूणामनुचिन्तयन् ॥ ०५६ ॥

द्यूतप्रमुखमाभाति कुरूणां व्यसनं महत् ।
मन्देनैश्वर्यकामेन लोभात्पापमिदं कृतम् ॥ ०५७ ॥

मन्ये पर्यायधर्मोऽयं कालस्यात्यन्तगामिनः ।
चक्रे प्रधिरिवासक्तो नास्य शक्यं पलायितुम् ॥ ०५८ ॥

किं नु कार्यं कथं कुर्यां क्व नु गच्छामि सञ्जय ।
एते नश्यन्ति कुरवो मन्दाः कालवशं गताः ॥ ०५९ ॥

अवशोऽहं पुरा तात पुत्राणां निहते शते ।
श्रोष्यामि निनदं स्त्रीणां कथं मां मरणं स्पृशेत् ॥ ०६० ॥

यथा निदाघे ज्वलनः समिद्धो ; दहेत्कक्षं वायुना चोद्यमानः ।
गदाहस्तः पाण्डवस्तद्वदेव ; हन्ता मदीयान्सहितोऽर्जुनेन ॥ ०६१ ॥

---

# अध्याय ०५१

धृतराष्ट्र उवाच ॥

यस्य वै नानृता वाचः प्रवृत्ता अनुशुश्रुमः ।
त्रैलोक्यमपि तस्य स्याद्योद्धा यस्य धनञ्जयः ॥ ००१ ॥

तस्यैव च न पश्यामि युधि गाण्डीवधन्वनः ।
अनिशं चिन्तयानोऽपि यः प्रतीयाद्रथेन तम् ॥ ००२ ॥

अस्यतः कर्णिनालीकान्मार्गणान्हृदयच्छिदः ।
प्रत्येता न समः कश्चिद्युधि गाण्डीवधन्वनः ॥ ००३ ॥

द्रोणकर्णौ प्रतीयातां यदि वीरौ नरर्षभौ ।
माहात्म्यात्संशयो लोके न त्वस्ति विजयो मम ॥ ००४ ॥

घृणी कर्णः प्रमादी च आचार्यः स्थविरो गुरुः ।
समर्थो बलवान्पार्थो दृढधन्वा जितक्लमः ॥ ००५ ॥

भवेत्सुतुमुलं युद्धं सर्वशोऽप्यपराजयः ॥ ००५ ॥

सर्वे ह्यस्त्रविदः शूराः सर्वे प्राप्ता महद्यशः ।
अपि सर्वामरैश्वर्यं त्यजेयुर्न पुनर्जयम् ॥ ००६ ॥

वधे नूनं भवेच्छान्तिस्तयोर्वा फल्गुनस्य वा ॥ ००६ ॥

न तु जेतार्जुनस्यास्ति हन्ता चास्य न विद्यते ।
मन्युस्तस्य कथं शाम्येन्मन्दान्प्रति य उत्थितः ॥ ००७ ॥

अन्येऽप्यस्त्राणि जानन्ति जीयन्ते च जयन्ति च ।
एकान्तविजयस्त्वेव श्रूयते फल्गुनस्य ह ॥ ००८ ॥

त्रयस्त्रिंशत्समाहूय खाण्डवेऽग्निमतर्पयत् ।
जिगाय च सुरान्सर्वान्नास्य वेद्मि पराजयम् ॥ ००९ ॥

यस्य यन्ता हृषीकेशः शीलवृत्तसमो युधि ।
ध्रुवस्तस्य जयस्तात यथेन्द्रस्य जयस्तथा ॥ ०१० ॥

कृष्णावेकरथे यत्तावधिज्यं गाण्डिवं धनुः ।
युगपत्त्रीणि तेजांसि समेतान्यनुशुश्रुमः ॥ ०११ ॥

नैव नोऽस्ति धनुस्ताद‍ृङ्ग योद्धा न च सारथिः ।
तच्च मन्दा न जानन्ति दुर्योधनवशानुगाः ॥ ०१२ ॥

शेषयेदशनिर्दीप्तो निपतन्मूर्ध्नि सञ्जय ।
न तु शेषं शराः कुर्युरस्तास्तात किरीटिना ॥ ०१३ ॥

अपि चास्यन्निवाभाति निघ्नन्निव च फल्गुनः ।
उद्धरन्निव कायेभ्यः शिरांसि शरवृष्टिभिः ॥ ०१४ ॥

अपि बाणमयं तेजः प्रदीप्तमिव सर्वतः ।
गाण्डीवेद्धं दहेताजौ पुत्राणां मम वाहिनीम् ॥ ०१५ ॥

अपि सा रथघोषेण भयार्ता सव्यसाचिनः ।
वित्रस्ता बहुला सेना भारती प्रतिभाति मे ॥ ०१६ ॥

यथा कक्षं दहत्यग्निः प्रवृद्धः सर्वतश्चरन् ।
महार्चिरनिलोद्धूतस्तद्वद्धक्ष्यति मामकान् ॥ ०१७ ॥

यदोद्वमन्निशितान्बाणसंघा ;न्स्थाताततायी समरे किरीटी ।
सृष्टोऽन्तकः सर्वहरो विधात्रा ; यथा भवेत्तद्वदवारणीयः ॥ ०१८ ॥

यदा ह्यभीक्ष्णं सुबहून्प्रकारा ;ञ्श्रोतास्मि तानावसथे कुरूणाम् ।
तेषां समन्ताच्च तथा रणाग्रे ; क्षयः किलायं भरतानुपैति ॥ ०१९ ॥

---

# अध्याय ०५२

धृतराष्ट्र उवाच ॥

यथैव पाण्डवाः सर्वे पराक्रान्ता जिगीषवः ।
तथैवाभिसरास्तेषां त्यक्तात्मानो जये धृताः ॥ ००१ ॥

त्वमेव हि पराक्रान्तानाचक्षीथाः परान्मम ।
पाञ्चालान्केकयान्मत्स्यान्मागधान्वत्सभूमिपान् ॥ ००२ ॥

यश्च सेन्द्रानिमा.ण्ल्लोकानिच्छन्कुर्याद्वशे बली ।
स श्रेष्ठो जगतः कृष्णः पाण्डवानां जये धृतः ॥ ००३ ॥

समस्तामर्जुनाद्विद्यां सात्यकिः क्षिप्रमाप्तवान् ।
शैनेयः समरे स्थाता बीजवत्प्रवपञ्शरान् ॥ ००४ ॥

धृष्टद्युम्नश्च पाञ्चाल्यः क्रूरकर्मा महारथः ।
मामकेषु रणं कर्ता बलेषु परमास्त्रवित् ॥ ००५ ॥

युधिष्ठिरस्य च क्रोधादर्जुनस्य च विक्रमात् ।
यमाभ्यां भीमसेनाच्च भयं मे तात जायते ॥ ००६ ॥

अमानुषं मनुष्येन्द्रैर्जालं विततमन्तरा ।
मम सेनां हनिष्यन्ति ततः क्रोशामि सञ्जय ॥ ००७ ॥

दर्शनीयो मनस्वी च लक्ष्मीवान्ब्रह्मवर्चसी ।
मेधावी सुकृतप्रज्ञो धर्मात्मा पाण्डुनन्दनः ॥ ००८ ॥

मित्रामात्यैः सुसंपन्नः संपन्नो योज्ययोजकैः ।
भ्रातृभिः श्वशुरैः पुत्रैरुपपन्नो महारथैः ॥ ००९ ॥

धृत्या च पुरुषव्याघ्रो नैभृत्येन च पाण्डवः ।
अनृशंसो वदान्यश्च ह्रीमान्सत्यपराक्रमः ॥ ०१० ॥

बहुश्रुतः कृतात्मा च वृद्धसेवी जितेन्द्रियः ।

तं सर्वगुणसंपन्नं समिद्धमिव पावकम् ॥ ०११ ॥

तपन्तमिव को मन्दः पतिष्यति पतङ्गवत् ।
पाण्डवाग्निमनावार्यं मुमूर्षुर्मूढचेतनः ॥ ०१२ ॥

तनुरुच्चः शिखी राजा शुद्धजाम्बूनदप्रभः ।
मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ॥ ०१३ ॥

तैरयुद्धं साधु मन्ये कुरवस्तन्निबोधत ।
युद्धे विनाशः कृत्स्नस्य कुलस्य भविता ध्रुवम् ॥ ०१४ ॥

एषा मे परमा शान्तिर्यया शाम्यति मे मनः ।
यदि त्वयुद्धमिष्टं वो वयं शान्त्यै यतामहे ॥ ०१५ ॥

न तु नः शिक्षमाणानामुपेक्षेत युधिष्ठिरः ।
जुगुप्सति ह्यधर्मेण मामेवोद्दिश्य कारणम् ॥ ०१६ ॥

---

# अध्याय ०५३

सञ्जय उवाच ॥

एवमेतन्महाराज यथा वदसि भारत ।
युद्धे विनाशः क्षत्रस्य गाण्डीवेन प्रदृश्यते ॥ ००१ ॥

इदं तु नाभिजानामि तव धीरस्य नित्यशः ।
यत्पुत्रवशमागच्छेः सत्त्वज्ञः सव्यसाचिनः ॥ ००२ ॥

नैष कालो महाराज तव शश्वत्कृतागसः ।

त्वया ह्येवादितः पार्था निकृता भरतर्षभ ॥ ००३ ॥

पिता श्रेष्ठः सुहृद्यश्च सम्यक्प्रणिहितात्मवान् ।
आस्थेयं हि हितं तेन न द्रोग्धा गुरुरुच्यते ॥ ००४ ॥

इदं जितमिदं लब्धमिति श्रुत्वा पराजितान् ।
द्यूतकाले महाराज स्मयसे स्म कुमारवत् ॥ ००५ ॥

परुषाण्युच्यमानान्स्म पुरा पार्थानुपेक्षसे ।
कृत्स्नं राज्यं जयन्तीति प्रपातं नानुपश्यसि ॥ ००६ ॥

पित्र्यं राज्यं महाराज कुरवस्ते सजाङ्गलाः ।
अथ वीरैर्जितां भूमिमखिलां प्रत्यपद्यथाः ॥ ००७ ॥

बाहुवीर्यार्जिता भूमिस्तव पार्थैर्निवेदिता ।
मयेदं कृतमित्येव मन्यसे राजसत्तम ॥ ००८ ॥

ग्रस्तान्गन्धर्वराजेन मज्जतो ह्यप्लवेऽम्भसि ।
आनिनाय पुनः पार्थः पुत्रांस्ते राजसत्तम ॥ ००९ ॥

कुमारवच्च स्मयसे द्यूते विनिकृतेषु यत् ।
पाण्डवेषु वनं राजन्प्रव्रजत्सु पुनः पुनः ॥ ०१० ॥

प्रवर्षतः शरव्रातानर्जुनस्य शितान्बहून् ।
अप्यर्णवा विशुष्येयुः किं पुनर्मांसयोनयः ॥ ०११ ॥

अस्यतां फल्गुनः श्रेष्ठो गाण्डीवं धनुषां वरम् ।
केशवः सर्वभूतानां चक्राणां च सुदर्शनम् ॥ ०१२ ॥

वानरो रोचमानश्च केतुः केतुमतां वरः ।
एवमेतानि सरथो वहञ्श्वेतहयो रणे ॥ ०१३ ॥

क्षपयिष्यति नो राजन्कालचक्रमिवोद्यतम् ॥ ०१३ ॥

तस्याद्य वसुधा राजन्निखिला भरतर्षभ ।
यस्य भीमार्जुनौ योधौ स राजा राजसत्तम ॥ ०१४ ॥

तथा भीमहतप्रायां मज्जन्तीं तव वाहिनीम् ।
दुर्योधनमुखा दृष्ट्वा क्षयं यास्यन्ति कौरवाः ॥ ०१५ ॥

न हि भीमभयाद्भीता लप्स्यन्ते विजयं विभो ।
तव पुत्रा महाराज राजानश्चानुसारिणः ॥ ०१६ ॥

मत्स्यास्त्वामद्य नार्चन्ति पाञ्चालाश्च सकेकयाः ।
शाल्वेयाः शूरसेनाश्च सर्वे त्वामवजानते ॥ ०१७ ॥

पार्थं ह्येते गताः सर्वे वीर्यज्ञास्तस्य धीमतः ॥ ०१७ ॥

अनर्हानेव तु वधे धर्मयुक्तान्विकर्मणा ।
सर्वोपायैर्नियन्तव्यः सानुगः पापपूरुषः ॥ ०१८ ॥

तव पुत्रो महाराज नात्र शोचितुमर्हसि ॥ ०१८ ॥

द्यूतकाले मया चोक्तं विदुरेण च धीमता ।
यदिदं ते विलपितं पाण्डवान्प्रति भारत ॥ ०१९ ॥

अनीशेनेव राजेन्द्र सर्वमेतन्निरर्थकम् ॥ ०१९ ॥

# अध्याय ०५४

दुर्योधन उवाच ॥

न भेतव्यं महाराज न शोच्या भवता वयम् ।
समर्थाः स्म परान्राजन्विजेतुं समरे विभो ॥ ००१ ॥

वनं प्रव्राजितान्पार्थान्यदायान्मधुसूदनः ।
महता बलचक्रेण परराष्ट्रावमर्दिना ॥ ००२ ॥

केकया धृष्टकेतुश्च धृष्टद्युम्नश्च पार्षतः ।
राजानश्चान्वयुः पार्थान्बहवोऽन्येऽनुयायिनः ॥ ००३ ॥

इन्द्रप्रस्थस्य चादूरात्समाजग्मुर्महारथाः ।
व्यगर्हयंश्च सङ्गम्य भवन्तं कुरुभिः सह ॥ ००४ ॥

ते युधिष्ठिरमासीनमजिनैः प्रतिवासितम् ।
कृष्णप्रधानाः संहत्य पर्युपासन्त भारत ॥ ००५ ॥

प्रत्यादानं च राज्यस्य कार्यमूचुर्नराधिपाः ।
भवतः सानुबन्धस्य समुच्छेदं चिकीर्षवः ॥ ००६ ॥

श्रुत्वा चैतन्मयोक्तास्तु भीष्मद्रोणकृपास्तदा ।
ज्ञातिक्षयभयाद्राजन्भीतेन भरतर्षभ ॥ ००७ ॥

न ते स्थास्यन्ति समये पाण्डवा इति मे मतिः ।
समुच्छेदं हि नः कृत्स्नं वासुदेवश्चिकीर्षति ॥ ००८ ॥

ऋते च विदुरं सर्वे यूयं वध्या महात्मनः ।
धृतराष्ट्रश्च धर्मज्ञो न वध्यः कुरुसत्तमः ॥ ००९ ॥

समुच्छेदं च कृत्स्नं नः कृत्वा तात जनार्दनः ।
एकराज्यं कुरूणां स्म चिकीर्षति युधिष्ठिरे ॥ ०१० ॥

तत्र किं प्राप्तकालं नः प्रणिपातः पलायनम् ।
प्राणान्वा संपरित्यज्य प्रतियुध्यामहे परान् ॥ ०११ ॥

प्रतियुद्धे तु नियतः स्यादस्माकं पराजयः ।
युधिष्ठिरस्य सर्वे हि पार्थिवा वशवर्तिनः ॥ ०१२ ॥

विरक्तराष्ट्राश्च वयं मित्राणि कुपितानि नः ।
धिक्कृताः पार्थिवैः सर्वैः स्वजनेन च सर्वशः ॥ ०१३ ॥

प्रणिपाते तु दोषोऽस्ति बन्धूनां शाश्वतीः समाः ।
पितरं त्वेव शोचामि प्रज्ञानेत्रं जनेश्वरम् ॥ ०१४ ॥

मत्कृते दुःखमापन्नं क्लेशं प्राप्तमनन्तकम् ॥ ०१४ ॥

कृतं हि तव पुत्रैश्च परेषामवरोधनम् ।
मत्प्रियार्थं पुरैवैतद्विदितं ते नरोत्तम ॥ ०१५ ॥

ते राज्ञो धृतराष्ट्रस्य सामात्यस्य महारथाः ।
वैरं प्रतिकरिष्यन्ति कुलोच्छेदेन पाण्डवाः ॥ ०१६ ॥

ततो द्रोणोऽब्रवीद्भीष्मः कृपो द्रौणिश्च भारत ।
मत्वा मां महतीं चिन्तामास्थितं व्यथितेन्द्रियम् ॥ ०१७ ॥

अभिद्रुग्धाः परे चेन्नो न भेतव्यं परंतप ।
असमर्थाः परे जेतुमस्मान्युधि जनेश्वर ॥ ०१८ ॥

एकैकशः समर्थाः स्मो विजेतुं सर्वपार्थिवान् ।
आगच्छन्तु विनेष्यामो दर्पमेषां शितैः शरैः ॥ ०१९ ॥

पुरैकेन हि भीष्मेण विजिताः सर्वपार्थिवाः ।
मृते पितर्यभिक्रुद्धो रथेनैकेन भारत ॥ ०२० ॥

जघान सुबहूंस्तेषां संरब्धः कुरुसत्तमः ।
ततस्ते शरणं जग्मुर्देवव्रतमिमं भयात् ॥ ०२१ ॥

स भीष्मः सुसमर्थोऽयमस्माभिः सहितो रणे ।
परान्विजेतुं तस्मात्ते व्येतु भीर्भरतर्षभ ॥ ०२२ ॥

इत्येषां निश्चयो ह्यासीत्तत्कालममितौजसाम् ॥ ०२२ ॥

पुरा परेषां पृथिवी कृत्स्नासीद्वशवर्तिनी ।
अस्मान्पुनरमी नाद्य समर्था जेतुमाहवे ॥ ०२३ ॥

छिन्नपक्षाः परे ह्यद्य वीर्यहीनाश्च पाण्डवाः ॥ ०२३ ॥

अस्मत्संस्था च पृथिवी वर्तते भरतर्षभ ।
एकार्थाः सुखदुःखेषु मयानीताश्च पार्थिवाः ॥ ०२४ ॥

अप्यग्निं प्रविशेयुस्ते समुद्रं वा परंतप ।
मदर्थे पार्थिवाः सर्वे तद्विद्धि कुरुसत्तम ॥ ०२५ ॥

उन्मत्तमिव चापि त्वां प्रहसन्तीह दुःखितम् ।
विलपन्तं बहुविधं भीतं परविकत्थने ॥ ०२६ ॥

एषां ह्येकैकशो राज्ञां समर्थः पाण्डवान्प्रति ।
आत्मानं मन्यते सर्वो व्येतु ते भयमागतम् ॥ ०२७ ॥

सर्वां समग्रां सेनां मे वासवोऽपि न शक्नुयात् ।
हन्तुमक्षय्यरूपेयं ब्रह्मणापि स्वयम्भुवा ॥ ०२८ ॥

युधिष्ठिरः पुरं हित्वा पञ्च ग्रामान्स याचति ।
भीतो हि मामकात्सैन्यात्प्रभावाच्चैव मे प्रभो ॥ ०२९ ॥

समर्थं मन्यसे यच्च कुन्तीपुत्रं वृकोदरम् ।
तन्मिथ्या न हि मे कृत्स्नं प्रभावं वेत्थ भारत ॥ ०३० ॥

मत्समो हि गदायुद्धे पृथिव्यां नास्ति कश्चन ।
नासीत्कश्चिदतिक्रान्तो भविता न च कश्चन ॥ ०३१ ॥

युक्तो दुःखोचितश्चाहं विद्यापारगतस्तथा ।
तस्मान्न भीमान्नान्येभ्यो भयं मे विद्यते क्वचित् ॥ ०३२ ॥

दुर्योधनसमो नास्ति गदायामिति निश्चयः ।
सङ्कर्षणस्य भद्रं ते यत्तदैनमुपावसम् ॥ ०३३ ॥

युद्धे सङ्कर्षणसमो बलेनाभ्यधिको भुवि ।
गदाप्रहारं भीमो मे न जातु विषहेद्युधि ॥ ०३४ ॥

एकं प्रहारं यं दद्यां भीमाय रुषितो नृप ।
स एवैनं नयेद्घोरं क्षिप्रं वैवस्वतक्षयम् ॥ ०३५ ॥

इच्छेयं च गदाहस्तं राजन्द्रष्टुं वृकोदरम् ।
सुचिरं प्रार्थितो ह्येष मम नित्यं मनोरथः ॥ ०३६ ॥

गदया निहतो ह्याजौ मम पार्थो वृकोदरः ।
विशीर्णगात्रः पृथिवीं परासुः प्रपतिष्यति ॥ ०३७ ॥

गदाप्रहाराभिहतो हिमवानपि पर्वतः ।
सकृन्मया विशीर्येत गिरिः शतसहस्रधा ॥ ०३८ ॥

स चाप्येतद्विजानाति वासुदेवार्जुनौ तथा ।
दुर्योधनसमो नास्ति गदायामिति निश्चयः ॥ ०३९ ॥

तत्ते वृकोदरमयं भयं व्येतु महाहवे ।
व्यपनेष्याम्यहं ह्येनं मा राजन्विमना भव ॥ ०४० ॥

तस्मिन्मया हते क्षिप्रमर्जुनं बहवो रथाः ।
तुल्यरूपा विशिष्टाश्च क्षेप्स्यन्ति भरतर्षभ ॥ ०४१ ॥

भीष्मो द्रोणः कृपो द्रौणिः कर्णो भूरिश्रवास्तथा ।
प्राग्ज्योतिषाधिपः शल्यः सिन्धुराजो जयद्रथः ॥ ०४२ ॥

एकैक एषां शक्तस्तु हन्तुं भारत पाण्डवान् ।
समस्तास्तु क्षणेनैतान्नेष्यन्ति यमसादनम् ॥ ०४३ ॥

समग्रा पार्थिवी सेना पार्थमेकं धनञ्जयम् ।
कस्मादशक्ता निर्जेतुमिति हेतुर्न विद्यते ॥ ०४४ ॥

शरव्रातैस्तु भीष्मेण शतशोऽथ सहस्रशः ।
द्रोणद्रौणिकृपैश्चैव गन्ता पार्थो यमक्षयम् ॥ ०४५ ॥

पितामहो हि गाङ्गेयः शंतनोरधि भारत ।
ब्रह्मर्षिसदृशो जज्ञे देवैरपि दुरुत्सहः ॥ ०४६ ॥

पित्रा ह्युक्तः प्रसन्नेन नाकामस्त्वं मरिष्यसि ॥ ०४६ ॥

ब्रह्मर्षेश्च भरद्वाजाद्द्रोण्यां द्रोणो व्यजायत ।
द्रोणाज्जज्ञे महाराज द्रौणिश्च परमास्त्रवित् ॥ ०४७ ॥

कृपश्चाचार्यमुख्योऽयं महर्षेर्गौतमादपि ।
शरस्तम्बोद्भवः श्रीमानवध्य इति मे मतिः ॥ ०४८ ॥

अयोनिजं त्रयं ह्येतत्पिता माता च मातुलः ।
अश्वत्थाम्नो महाराज स च शूरः स्थितो मम ॥ ०४९ ॥

सर्व एते महाराज देवकल्पा महारथाः ।
शक्रस्यापि व्यथां कुर्युः संयुगे भरतर्षभ ॥ ०५० ॥

भीष्मद्रोणकृपाणां च तुल्यः कर्णो मतो मम ।
अनुज्ञातश्च रामेण मत्समोऽसीति भारत ॥ ०५१ ॥

कुण्डले रुचिरे चास्तां कर्णस्य सहजे शुभे ।
ते शच्यर्थे महेन्द्रेण याचितः स परंतपः ॥ ०५२ ॥

अमोघया महाराज शक्त्या परमभीमया ॥ ०५२ ॥

तस्य शक्त्योपगूढस्य कस्माज्जीवेद्धनञ्जयः ।
विजयो मे ध्रुवं राजन्फलं पाणाविवाहितम् ॥ ०५३ ॥

अभिव्यक्तः परेषां च कृत्स्नो भुवि पराजयः ॥ ०५३ ॥

अह्ना ह्येकेन भीष्मोऽयमयुतं हन्ति भारत ।
तत्समाश्च महेष्वासा द्रोणद्रौणिकृपा अपि ॥ ०५४ ॥

संशप्तानि च वृन्दानि क्षत्रियाणां परंतप ।
अर्जुनं वयमस्मान्वा धनञ्जय इति स्म ह ॥ ०५५ ॥

तांश्चालमिति मन्यन्ते सव्यसाचिवधे विभो ।
पार्थिवाः स भवान्राजन्नकस्माद्व्यथते कथम् ॥ ०५६ ॥

भीमसेने च निहते कोऽन्यो युध्येत भारत ।
परेषां तन्ममाचक्ष्व यदि वेत्थ परंतप ॥ ०५७ ॥

पञ्च ते भ्रातरः सर्वे धृष्टद्युम्नोऽथ सात्यकिः ।
परेषां सप्त ये राजन्योधाः परमकं बलम् ॥ ०५८ ॥

अस्माकं तु विशिष्टा ये भीष्मद्रोणकृपादयः ।
द्रौणिर्वैकर्तनः कर्णः सोमदत्तोऽथ बाह्लिकः ॥ ०५९ ॥

प्राग्ज्योतिषाधिपः शल्य आवन्त्योऽथ जयद्रथः ।
दुःशासनो दुर्मुखश्च दुःसहश्च विशां पते ॥ ०६० ॥

श्रुतायुश्चित्रसेनश्च पुरुमित्रो विविंशतिः ।
शलो भूरिश्रवाश्चोभौ विकर्णश्च तवात्मजः ॥ ०६१ ॥

अक्षौहिण्यो हि मे राजन्दशैका च समाहृताः ।
न्यूनाः परेषां सप्तैव कस्मान्मे स्यात्पराजयः ॥ ०६२ ॥

बलं त्रिगुणतो हीनं योध्यं प्राह बृहस्पतिः ।
परेभ्यस्त्रिगुणा चेयं मम राजन्ननीकिनी ॥ ०६३ ॥

गुणहीनं परेषां च बहु पश्यामि भारत ।
गुणोदयं बहुगुणमात्मनश्च विशां पते ॥ ०६४ ॥

एतत्सर्वं समाज्ञाय बलाग्र्यं मम भारत ।
न्यूनतां पाण्डवानां च न मोहं गन्तुमर्हसि ॥ ०६५ ॥

वैशंपायन उवाच ॥

इत्युक्त्वा सञ्जयं भूयः पर्यपृच्छत भारत ।
विधित्सुः प्राप्तकालानि ज्ञात्वा परपुरञ्जयः ॥ ०६६ ॥

# अध्याय ०५५

दुर्योधन उवाच ॥

अक्षौहिणीः सप्त लब्ध्वा राजभिः सह सञ्जय ।
किं स्विदिच्छति कौन्तेयो युद्धप्रेप्सुर्युधिष्ठिरः ॥ ००१ ॥

सञ्जय उवाच ॥

अतीव मुदितो राजन्युद्धप्रेप्सुर्युधिष्ठिरः ।
भीमसेनार्जुनौ चोभौ यमावपि न बिभ्यतः ॥ ००२ ॥

रथं तु दिव्यं कौन्तेयः सर्वा विभ्राजयन्दिशः ।
मन्त्रं जिज्ञासमानः सन्बीभत्सुः समयोजयत् ॥ ००३ ॥

तमपश्याम संनद्धं मेघं विद्युत्प्रभं यथा ।
स मन्त्रान्समभिध्याय हृष्यमाणोऽभ्यभाषत ॥ ००४ ॥

पूर्वरूपमिदं पश्य वयं जेष्याम सञ्जय ।
बीभत्सुर्मां यथोवाच तथावैम्यहमप्युत ॥ ००५ ॥

दुर्योधन उवाच ॥

प्रशंसस्यभिनन्दंस्तान्पार्थानक्षपराजितान् ।
अर्जुनस्य रथे ब्रूहि कथमश्वाः कथं ध्वजः ॥ ००६ ॥

सञ्जय उवाच ॥

भौवनः सह शक्रेण बहुचित्रं विशां पते ।

रूपाणि कल्पयामास त्वष्टा धात्रा सहाभिभो ॥ ००७ ॥

ध्वजे हि तस्मिन्रूपाणि चक्रुस्ते देवमायया ।
महाधनानि दिव्यानि महान्ति च लघूनि च ॥ ००८ ॥

सर्वा दिशो योजनमात्रमन्तरं ; स तिर्यगूर्ध्वं च रुरोध वै ध्वजः ।
न संसज्जेत्तरुभिः संवृतोऽपि ; तथा हि माया विहिता भौवनेन ॥ ००९ ॥

यथाकाशे शक्रधनुः प्रकाशते ; न चैकवर्णं न च विद्म किं नु तत् ।
तथा ध्वजो विहितो भौवनेन ; बह्वाकारं दृश्यते रूपमस्य ॥ ०१० ॥

यथाग्निधूमो दिवमेति रुद्ध्वा ; वर्णान्बिभ्रत्तैजसं तच्छरीरम् ।
तथा ध्वजो विहितो भौवनेन ; न चेद्भारो भविता नोत रोधः ॥ ०११ ॥

श्वेतास्तस्मिन्वातवेगाः सदश्वा ; दिव्या युक्ताश्चित्ररथेन दत्ताः ।
शतं यत्तत्पूर्यते नित्यकालं ; हतं हतं दत्तवरं पुरस्तात् ॥ ०१२ ॥

तथा राज्ञो दन्तवर्णा बृहन्तो ; रथे युक्ता भान्ति तद्वीर्यतुल्याः ।
ऋश्यप्रख्या भीमसेनस्य वाहा ; रणे वायोस्तुल्यवेगा बभूवुः ॥ ०१३ ॥

कल्माषाङ्गास्तित्तिरिचित्रपृष्ठा ; भ्रात्रा दत्ताः प्रीयता फल्गुनेन ।
भ्रातुर्वीरस्य स्वैस्तुरङ्गैर्विशिष्टा ; मुदा युक्ताः सहदेवं वहन्ति ॥ ०१४ ॥

माद्रीपुत्रं नकुलं त्वाजमीढं ; महेन्द्रदत्ता हरयो वाजिमुख्याः ।
समा वायोर्बलवन्तस्तरस्विनो ; वहन्ति वीरं वृत्रशत्रुं यथेन्द्रम् ॥ ०१५ ॥

तुल्याश्चैभिर्वयसा विक्रमेण ; जवेन चैवाप्रतिरूपाः सदश्वाः ।
सौभद्रादीन्द्रौपदेयान्कुमारा ;न्वहन्त्यश्वा देवदत्ता बृहन्तः ॥ ०१६ ॥

# अध्याय ०५६

धृतराष्ट्र उवाच ॥

कांस्तत्र सञ्जयापश्यः प्रत्यर्थेन समागतान् ।
ये योत्स्यन्ते पाण्डवार्थे पुत्रस्य मम वाहिनीम् ॥ ००१ ॥

सञ्जय उवाच ॥

मुख्यमन्धकवृष्णीनामपश्यं कृष्णमागतम् ।
चेकितानं च तत्रैव युयुधानं च सात्यकिम् ॥ ००२ ॥

पृथगक्षौहिणीभ्यां तौ पाण्डवानभिसंश्रितौ ।
महारथौ समाख्यातावुभौ पुरुषमानिनौ ॥ ००३ ॥

अक्षौहिण्याथ पाञ्चाल्यो दशभिस्तनयैर्वृतः ।
सत्यजित्प्रमुखैर्वीरैर्धृष्टद्युम्नपुरोगमैः ॥ ००४ ॥

द्रुपदो वर्धयन्मानं शिखण्डिपरिपालितः ।
उपायात्सर्वसैन्यानां प्रतिच्छाद्य तदा वपुः ॥ ००५ ॥

विराटः सह पुत्राभ्यां शङ्खेनैवोत्तरेण च ।
सूर्यदत्तादिभिर्वीरैर्मदिराश्वपुरोगमैः ॥ ००६ ॥

सहितः पृथिवीपालो भ्रातृभिस्तनयैस्तथा ।
अक्षौहिण्यैव सैन्यस्य वृतः पार्थं समाश्रितः ॥ ००७ ॥

जारासंधिर्मागधश्च धृष्टकेतुश्च चेदिराट् ।
पृथक्पृथगनुप्राप्तौ पृथगक्षौहिणीवृतौ ॥ ००८ ॥

केकया भ्रातरः पञ्च सर्वे लोहितकध्वजाः ।

अक्षौहिणीपरिवृताः पाण्डवानभिसंश्रिताः ॥ ००९ ॥

एतानेतावतस्तत्र यानपश्यं समागतान् ।
ये पाण्डवार्थे योत्स्यन्ति धार्तराष्ट्रस्य वाहिनीम् ॥ ०१० ॥

यो वेद मानुषं व्यूहं दैवं गान्धर्वमासुरम् ।
स तस्य सेनाप्रमुखे धृष्टद्युम्नो महामनाः ॥ ०११ ॥

भीष्मः शांतनवो राजन्भागः क्लृप्तः शिखण्डिनः ।
तं विराटोऽनु संयाता सह मत्स्यैः प्रहारिभिः ॥ ०१२ ॥

ज्येष्ठस्य पाण्डुपुत्रस्य भागो मद्राधिपो बली ।
तौ तु तत्राब्रुवन्केचिद्विषमौ नो मताविति ॥ ०१३ ॥

दुर्योधनः सहसुतः सार्धं भ्रातृशतेन च ।
प्राच्याश्च दाक्षिणात्याश्च भीमसेनस्य भागतः ॥ ०१४ ॥

अर्जुनस्य तु भागेन कर्णो वैकर्तनो मतः ।
अश्वत्थामा विकर्णश्च सैन्धवश्च जयद्रथः ॥ ०१५ ॥

अशक्याश्चैव ये केचित्पृथिव्यां शूरमानिनः ।
सर्वांस्तानर्जुनः पार्थः कल्पयामास भागतः ॥ ०१६ ॥

महेष्वासा राजपुत्रा भ्रातरः पञ्च केकयाः ।
केकयानेव भागेन कृत्वा योत्स्यन्ति संयुगे ॥ ०१७ ॥

तेषामेव कृतो भागो मालवाः शाल्वकेकयाः ।
त्रिगर्तानां च द्वौ मुख्यौ यौ तौ संशप्तकाविति ॥ ०१८ ॥

दुर्योधनसुताः सर्वे तथा दुःशासनस्य च ।
सौभद्रेण कृतो भागो राजा चैव बृहद्बलः ॥ ०१९ ॥

द्रौपदेया महेष्वासाः सुवर्णविकृतध्वजाः ।
धृष्टद्युम्नमुखा द्रोणमभियास्यन्ति भारत ॥ ०२० ॥

चेकितानः सोमदत्तं द्वैरथे योद्धुमिच्छति ।
भोजं तु कृतवर्माणं युयुधानो युयुत्सति ॥ ०२१ ॥

सहदेवस्तु माद्रेयः शूरः सङ्क्रन्दनो युधि ।
स्वमंशं कल्पयामास श्यालं ते सुबलात्मजम् ॥ ०२२ ॥

उलूकं चापि कैतव्यं ये च सारस्वता गणाः ।
नकुलः कल्पयामास भागं माद्रवतीसुतः ॥ ०२३ ॥

ये चान्ये पार्थिवा राजन्प्रत्युद्यास्यन्ति संयुगे ।
समाह्वानेन तांश्चापि पाण्डुपुत्रा अकल्पयन् ॥ ०२४ ॥

एवमेषामनीकानि प्रविभक्तानि भागशः ।
यत्ते कार्यं सपुत्रस्य क्रियतां तदकालिकम् ॥ ०२५ ॥

धृतराष्ट्र उवाच ॥

न सन्ति सर्वे पुत्रा मे मूढा दुर्द्यूतदेविनः ।
येषां युद्धं बलवता भीमेन रणमूर्धनि ॥ ०२६ ॥

राजानः पार्थिवाः सर्वे प्रोक्षिताः कालधर्मणा ।
गाण्डीवाग्निं प्रवेक्ष्यन्ति पतङ्गा इव पावकम् ॥ ०२७ ॥

विद्रुतां वाहिनीं मन्ये कृतवैरैर्महात्मभिः ।
तां रणे केऽनुयास्यन्ति प्रभग्नां पाण्डवैर्युधि ॥ ०२८ ॥

सर्वे ह्यतिरथाः शूराः कीर्तिमन्तः प्रतापिनः ।

सूर्यपावकयोस्तुल्यास्तेजसा समितिञ्जयाः ॥ ०२९ ॥

येषां युधिष्ठिरो नेता गोप्ता च मधुसूदनः ।
योधौ च पाण्डवौ वीरौ सव्यसाचिवृकोदरौ ॥ ०३० ॥

नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः ।
सात्यकिर्द्रुपदश्चैव धृष्टद्युम्नस्य चात्मजः ॥ ०३१ ॥

उत्तमौजाश्च पाञ्चाल्यो युधामन्युश्च दुर्जयः ।
शिखण्डी क्षत्रदेवश्च तथा वैराटिरुत्तरः ॥ ०३२ ॥

काशयश्चेदयश्चैव मत्स्याः सर्वे च सृञ्जयाः ।
विराटपुत्रो बभ्रूश्च पाञ्चालाश्च प्रभद्रकाः ॥ ०३३ ॥

येषामिन्द्रोऽप्यकामानां न हरेत्पृथिवीमिमाम् ।
वीराणां रणधीराणां ये भिन्द्युः पर्वतानपि ॥ ०३४ ॥

तान्सर्वान्गुणसंपन्नानमनुष्यप्रतापिनः ।
क्रोशतो मम दुष्पुत्रो योद्धुमिच्छति सञ्जय ॥ ०३५ ॥

दुर्योधन उवाच ॥

उभौ स्व एकजातीयौ तथोभौ भूमिगोचरौ ।
अथ कस्मात्पाण्डवानामेकतो मन्यसे जयम् ॥ ०३६ ॥

पितामहं च द्रोणं च कृपं कर्णं च दुर्जयम् ।
जयद्रथं सोमदत्तमश्वत्थामानमेव च ॥ ०३७ ॥

सुचेतसो महेष्वासानिन्द्रोऽपि सहितोऽमरैः ।
अशक्तः समरे जेतुं किं पुनस्तात पाण्डवाः ॥ ०३८ ॥

सर्वा च पृथिवी सृष्टा मदर्थे तात पाण्डवान् ।
आर्यान्धृतिमतः शूरानग्निकल्पान्प्रबाधितुम् ॥ ०३९ ॥

न मामकान्पाण्डवास्ते समर्थाः प्रतिवीक्षितुम् ।
पराक्रान्तो ह्यहं पाण्डून्सपुत्रान्योद्धुमाहवे ॥ ०४० ॥

मत्प्रियं पार्थिवाः सर्वे ये चिकीर्षन्ति भारत ।
ते तानावारयिष्यन्ति ऐणेयानिव तन्तुना ॥ ०४१ ॥

महता रथवंशेन शरजालैश्च मामकैः ।
अभिद्रुता भविष्यन्ति पाञ्चालाः पाण्डवैः सह ॥ ०४२ ॥

धृतराष्ट्र उवाच ॥

उन्मत्त इव मे पुत्रो विलपत्येष सञ्जय ।
न हि शक्तो युधा जेतुं धर्मराजं युधिष्ठिरम् ॥ ०४३ ॥

जानाति हि सदा भीष्मः पाण्डवानां यशस्विनाम् ।
बलवत्तां सपुत्राणां धर्मज्ञानां महात्मनाम् ॥ ०४४ ॥

यतो नारोचयमहं विग्रहं तैर्महात्मभिः ।
किं तु सञ्जय मे ब्रूहि पुनस्तेषां विचेष्टितम् ॥ ०४५ ॥

कस्तांस्तरस्विनो भूयः संदीपयति पाण्डवान् ।
अर्चिष्मतो महेष्वासान्हविषा पावकानिव ॥ ०४६ ॥

सञ्जय उवाच ॥

धृष्टद्युम्नः सदैवैतान्संदीपयति भारत ।
युध्यध्वमिति मा भैष्ट युद्धाद्भरतसत्तमाः ॥ ०४७ ॥

ये केचित्पार्थिवास्तत्र धार्तराष्ट्रेण संवृताः ।
युद्धे समागमिष्यन्ति तुमुले कवचह्रदे ॥ ०४८ ॥

तान्सर्वानाहवे क्रुद्धान्सानुबन्धान्समागतान् ।
अहमेकः समादास्ये तिमिर्मत्स्यानिवौदकान् ॥ ०४९ ॥

भीष्मं द्रोणं कृपं कर्णं द्रौणिं शल्यं सुयोधनम् ।
एतांश्चापि निरोत्स्यामि वेलेव मकरालयम् ॥ ०५० ॥

तथा ब्रुवाणं धर्मात्मा प्राह राजा युधिष्ठिरः ।
तव धैर्यं च वीर्यं च पाञ्चालाः पाण्डवैः सह ॥ ०५१ ॥

सर्वे समधिरूढाः स्म सङ्ग्रामान्नः समुद्धर ॥ ०५१ ॥

जानामि त्वां महाबाहो क्षत्रधर्मे व्यवस्थितम् ।
समर्थमेकं पर्याप्तं कौरवाणां युयुत्सताम् ॥ ०५२ ॥

भवता यद्विधातव्यं तन्नः श्रेयः परंतप ॥ ०५२ ॥

सङ्ग्रामादपयातानां भग्नानां शरणैषिणाम् ।
पौरुषं दर्शयञ्शूरो यस्तिष्ठेदग्रतः पुमान् ॥ ०५३ ॥

क्रीणीयात्तं सहस्रेण नीतिमन्नाम तत्पदम् ॥ ०५३ ॥

स त्वं शूरश्च वीरश्च विक्रान्तश्च नरर्षभ ।
भयार्तानां परित्राता संयुगेषु न संशयः ॥ ०५४ ॥

एवं ब्रुवति कौन्तेये धर्मात्मनि युधिष्ठिरे ।
धृष्टद्युम्न उवाचेदं मां वचो गतसाध्वसः ॥ ०५५ ॥

सर्वाञ्जनपदान्सूत योधा दुर्योधनस्य ये ।

सबाह्लीकान्कुरून्ब्रूयाः प्रातिपेयाञ्शरद्वतः ॥ ०५६ ॥

सूतपुत्रं तथा द्रोणं सहपुत्रं जयद्रथम् ।
दुःशासनं विकर्णं च तथा दुर्योधनं नृपम् ॥ ०५७ ॥

भीष्मं चैव ब्रूहि गत्वा त्वमाशु ; युधिष्ठिरं साधुनैवाभ्युपेत ।
मा वो वधीदर्जुनो देवगुप्तः ; क्षिप्रं याचध्वं पाण्डवं लोकवीरम् ॥ ०५८ ॥

नैतादृशो हि योधोऽस्ति पृथिव्यामिह कश्चन ।
यथाविधः सव्यसाची पाण्डवः शस्त्रवित्तमः ॥ ०५९ ॥

देवैर्हि संभृतो दिव्यो रथो गाण्डीवधन्वनः ।
न स जेयो मनुष्येण मा स्म कृध्वं मनो युधि ॥ ०६० ॥

---

# अध्याय ०५७

धृतराष्ट्र उवाच ॥

क्षत्रतेजा ब्रह्मचारी कौमारादपि पाण्डवः ।
तेन संयुगमेष्यन्ति मन्दा विलपतो मम ॥ ००१ ॥

दुर्योधन निवर्तस्व युद्धाद्भरतसत्तम ।
न हि युद्धं प्रशंसन्ति सर्वावस्थमरिंदम ॥ ००२ ॥

अलमर्धं पृथिव्यास्ते सहामात्यस्य जीवितुम् ।
प्रयच्छ पाण्डुपुत्राणां यथोचितमरिंदम ॥ ००३ ॥

एतद्धि कुरवः सर्वे मन्यन्ते धर्मसंहितम् ।

यत्त्वं प्रशान्तिमिच्छेथाः पाण्डुपुत्रैर्महात्मभिः ॥ ००४ ॥

अङ्गेमां समवेक्षस्व पुत्र स्वामेव वाहिनीम् ।
जात एव तव स्रावस्त्वं तु मोहान्न बुध्यसे ॥ ००५ ॥

न ह्यहं युद्धमिच्छामि नैतदिच्छति बाह्लिकः ।
न च भीष्मो न च द्रोणो नाश्वत्थामा न सञ्जयः ॥ ००६ ॥

न सोमदत्तो न शल्यो न कृपो युद्धमिच्छति ।
सत्यव्रतः पुरुमित्रो जयो भूरिश्रवास्तथा ॥ ००७ ॥

येषु संप्रतितिष्ठेयुः कुरवः पीडिताः परैः ।
ते युद्धं नाभिनन्दन्ति तत्तुभ्यं तात रोचताम् ॥ ००८ ॥

न त्वं करोषि कामेन कर्णः कारयिता तव ।
दुःशासनश्च पापात्मा शकुनिश्चापि सौबलः ॥ ००९ ॥

दुर्योधन उवाच ॥

नाहं भवति न द्रोणे नाश्वत्थाम्नि न सञ्जये ।
न विकर्णे न काम्बोजे न कृपे न च बाह्लिके ॥ ०१० ॥

सत्यव्रते पुरुमित्रे भूरिश्रवसि वा पुनः ।
अन्येषु वा तावकेषु भारं कृत्वा समाह्वये ॥ ०११ ॥

अहं च तात कर्णश्च रणयज्ञं वितत्य वै ।
युधिष्ठिरं पशुं कृत्वा दीक्षितौ भरतर्षभ ॥ ०१२ ॥

रथो वेदी स्रुवः खड्गो गदा स्रुक्कवचं सदः ।
चातुर्होत्रं च धुर्या मे शरा दर्भा हविर्यशः ॥ ०१३ ॥

आत्मयज्ञेन नृपते इष्ट्वा वैवस्वतं रणे ।
विजित्य स्वयमेष्यावो हतामित्रौ श्रिया वृतौ ॥ ०१४ ॥

अहं च तात कर्णश्च भ्राता दुःशासनश्च मे ।
एते वयं हनिष्यामः पाण्डवान्समरे त्रयः ॥ ०१५ ॥

अहं हि पाण्डवान्हत्वा प्रशास्ता पृथिवीमिमाम् ।
मां वा हत्वा पाण्डुपुत्रा भोक्तारः पृथिवीमिमाम् ॥ ०१६ ॥

त्यक्तं मे जीवितं राजन्धनं राज्यं च पार्थिव ।
न जातु पाण्डवैः सार्धं वसेयमहमच्युत ॥ ०१७ ॥

यावद्धि सूच्यास्तीक्ष्णाया विध्येदग्रेण मारिष ।
तावदप्यपरित्याज्यं भूमेर्नः पाण्डवान्प्रति ॥ ०१८ ॥

धृतराष्ट्र उवाच ॥

सर्वान्वस्तात शोचामि त्यक्तो दुर्योधनो मया ।
ये मन्दमनुयास्यध्वं यान्तं वैवस्वतक्षयम् ॥ ०१९ ॥

रुरूणामिव यूथेषु व्याघ्राः प्रहरतां वराः ।
वरान्वरान्हनिष्यन्ति समेता युधि पाण्डवाः ॥ ०२० ॥

प्रतीपमिव मे भाति युयुधानेन भारती ।
व्यस्ता सीमन्तिनी त्रस्ता प्रमृष्टा दीर्घबाहुना ॥ ०२१ ॥

संपूर्णं पूरयन्भूयो बलं पार्थस्य माधवः ।
शैनेयः समरे स्थाता बीजवत्प्रवपञ्शरान् ॥ ०२२ ॥

सेनामुखे प्रयुद्धानां भीमसेनो भविष्यति ।
तं सर्वे संश्रयिष्यन्ति प्राकारमकुतोभयम् ॥ ०२३ ॥

यदा द्रक्ष्यसि भीमेन कुञ्जरान्विनिपातितान् ।
विशीर्णदन्तान्गिर्याभान्भिन्नकुम्भान्सशोणितान्  ॥ ०२४  ॥

तानभिप्रेक्ष्य सङ्ग्रामे विशीर्णानिव पर्वतान् ।
भीतो भीमस्य संस्पर्शात्स्मर्तासि वचनस्य मे  ॥ ०२५  ॥

निर्दग्धं भीमसेनेन सैन्यं हतरथद्विपम् ।
गतिमग्नेरिव प्रेक्ष्य स्मर्तासि वचनस्य मे  ॥ ०२६  ॥

महद्वो भयमागामि न चेच्छाम्यथ पाण्डवैः ।
गदया भीमसेनेन हताः शममुपैष्यथ  ॥ ०२७  ॥

महावनमिव छिन्नं यदा द्रक्ष्यसि पातितम् ।
बलं कुरूणां सङ्ग्रामे तदा स्मर्तासि मे वचः  ॥ ०२८  ॥

वैशंपायन उवाच  ॥

एतावदुक्त्वा राजा तु स सर्वान्पृथिवीपतीन् ।
अनुभाष्य महाराज पुनः पप्रच्छ सञ्जयम्  ॥ ०२९  ॥

---

# अध्याय ०५८

धृतराष्ट्र उवाच  ॥

यदब्रूतां महात्मानौ वासुदेवधनञ्जयौ ।
तन्मे ब्रूहि महाप्राज्ञ शुश्रूषे वचनं तव  ॥ ००१  ॥

सञ्जय उवाच ॥

श्रृणु राजन्यथा दृष्टौ मया कृष्णधनञ्जयौ ।
ऊचतुश्चापि यद्वीरौ तत्ते वक्ष्यामि भारत ॥ ००२ ॥

पादाङ्गुलीरभिप्रेक्षन्प्रयतोऽहं कृताञ्जलिः ।
शुद्धान्तं प्राविशं राजन्नाख्यातुं नरदेवयोः ॥ ००३ ॥

नैवाभिमन्युर्न यमौ तं देशमभियान्ति वै ।
यत्र कृष्णौ च कृष्णा च सत्यभामा च भामिनी ॥ ००४ ॥

उभौ मध्वासवक्षीबावुभौ चन्दनरूषितौ ।
स्रग्विणौ वरवस्त्रौ तौ दिव्याभरणभूषितौ ॥ ००५ ॥

नैकरत्नविचित्रं तु काञ्चनं महदासनम् ।
विविधास्तरणास्तीर्णं यत्रासातामरिंदमौ ॥ ००६ ॥

अर्जुनोत्सङ्गगौ पादौ केशवस्योपलक्षये ।
अर्जुनस्य च कृष्णायां सत्यायां च महात्मनः ॥ ००७ ॥

काञ्चनं पादपीठं तु पार्थो मे प्रादिशत्तदा ।
तदहं पाणिना स्पृष्ट्वा ततो भूमावुपाविशम् ॥ ००८ ॥

ऊर्ध्वरेखतलौ पादौ पार्थस्य शुभलक्षणौ ।
पादपीठादपहृतौ तत्रापश्यमहं शुभौ ॥ ००९ ॥

श्यामौ बृहन्तौ तरुणौ शालस्कन्धाविवोद्गतौ ।
एकासनगतौ दृष्ट्वा भयं मां महदाविशत् ॥ ०१० ॥

इन्द्रविष्णुसमावेतौ मन्दात्मा नावबुध्यते ।
संश्रयाद्द्रोणभीष्माभ्यां कर्णस्य च विकत्थनात् ॥ ०११ ॥

निदेशस्थाविमौ यस्य मानसस्तस्य सेत्स्यते ।
सङ्कल्पो धर्मराजस्य निश्चयो मे तदाभवत् ॥ ०१२ ॥

सत्कृतश्चान्नपानाभ्यामाच्छन्नो लब्धसत्क्रियः ।
अञ्जलिं मूर्ध्नि संधाय तौ संदेशमचोदयम् ॥ ०१३ ॥

धनुर्बाणोचितेनैकपाणिना शुभलक्षणम् ।
पादमानमयन्पार्थः केशवं समचोदयत् ॥ ०१४ ॥

इन्द्रकेतुरिवोत्थाय सर्वाभरणभूषितः ।
इन्द्रवीर्योपमः कृष्णः संविष्टो माभ्यभाषत ॥ ०१५ ॥

वाचं स वदतां श्रेष्ठो ह्लादिनीं वचनक्षमाम् ।
त्रासनीं धार्तराष्ट्राणां मृदुपूर्वां सुदारुणाम् ॥ ०१६ ॥

वाचं तां वचनार्हस्य शिक्षाक्षरसमन्विताम् ।
अश्रौषमहमिष्टार्थां पश्चाद्धृदयशोषिणीम् ॥ ०१७ ॥

वासुदेव उवाच ॥

सञ्जयेदं वचो ब्रूया धृतराष्ट्रं मनीषिणम् ।
शृण्वतः कुरुमुख्यस्य द्रोणस्यापि च शृण्वतः ॥ ०१८ ॥

यजध्वं विपुलैर्यज्ञैर्विप्रेभ्यो दत्त दक्षिणाः ।
पुत्रैर्दारैश्च मोदध्वं महद्वो भयमागतम् ॥ ०१९ ॥

अर्थांस्त्यजत पात्रेभ्यः सुतान्प्राप्नुत कामजान् ।
प्रियं प्रियेभ्यश्चरत राजा हि त्वरते जये ॥ ०२० ॥

ऋणमेतत्प्रवृद्धं मे हृदयान्नापसर्पति ।

यद्गोविन्देति चुक्रोश कृष्णा मां दूरवासिनम् ॥ ०२१ ॥

तेजोमयं दुराधर्षं गाण्डीवं यस्य कार्मुकम् ।
मद्द्वितीयेन तेनेह वैरं वः सव्यसाचिना ॥ ०२२ ॥

मद्द्वितीयं पुनः पार्थं कः प्रार्थयितुमिच्छति ।
यो न कालपरीतो वाप्यपि साक्षात्पुरंदरः ॥ ०२३ ॥

बाहुभ्यामुद्वहेद्भूमिं दहेत्क्रुद्ध इमाः प्रजाः ।
पातयेत्त्रिदिवाद्देवान्योऽर्जुनं समरे जयेत् ॥ ०२४ ॥

देवासुरमनुष्येषु यक्षगन्धर्वभोगिषु ।
न तं पश्याम्यहं युद्धे पाण्डवं योऽभ्ययाद्रणे ॥ ०२५ ॥

यत्तद्विराटनगरे श्रूयते महदद्भुतम् ।
एकस्य च बहूनां च पर्याप्तं तन्निदर्शनम् ॥ ०२६ ॥

एकेन पाण्डुपुत्रेण विराटनगरे यदा ।
भग्नाः पलायन्त दिशः पर्याप्तं तन्निदर्शनम् ॥ ०२७ ॥

बलं वीर्यं च तेजश्च शीघ्रता लघुहस्तता ।
अविषादश्च धैर्यं च पार्थान्नान्यत्र विद्यते ॥ ०२८ ॥

सञ्जय उवाच ॥

इत्यब्रवीद्धृषीकेशः पार्थमुद्धर्षयन्गिरा ।
गर्जन्समयवर्षीव गगने पाकशासनः ॥ ०२९ ॥

केशवस्य वचः श्रुत्वा किरीटी श्वेतवाहनः ।
अर्जुनस्तन्महद्वाक्यमब्रवील्लोमहर्षणम् ॥ ०३० ॥

# अध्याय ०५९

वैशंपायन उवाच ॥

सञ्जयस्य वचः श्रुत्वा प्रज्ञाचक्षुर्नरेश्वरः ।
ततः संख्यातुमारेभे तद्वचो गुणदोषतः ॥ ००१ ॥

प्रसंख्याय च सौक्ष्म्येण गुणदोषान्विचक्षणः ।
यथावन्मतितत्त्वेन जयकामः सुतान्प्रति ॥ ००२ ॥

बलाबले विनिश्चित्य याथातथ्येन बुद्धिमान् ।
शक्तिं संख्यातुमारेभे तदा वै मनुजाधिपः ॥ ००३ ॥

देवमानुषयोः शक्त्या तेजसा चैव पाण्डवान् ।
कुरूञ्शक्त्याल्पतरया दुर्योधनमथाब्रवीत् ॥ ००४ ॥

दुर्योधनेयं चिन्ता मे शश्वन्नाप्युपशाम्यति ।
सत्यं ह्येतदहं मन्ये प्रत्यक्षं नानुमानतः ॥ ००५ ॥

आत्मजेषु परं स्नेहं सर्वभूतानि कुर्वते ।
प्रियाणि चैषां कुर्वन्ति यथाशक्ति हितानि च ॥ ००६ ॥

एवमेवोपकर्तॄणां प्रायशो लक्षयामहे ।
इच्छन्ति बहुलं सन्तः प्रतिकर्तुं महत्प्रियम् ॥ ००७ ॥

अग्निः साचिव्यकर्ता स्यात्खाण्डवे तत्कृतं स्मरन् ।

अर्जुनस्यातिभीमेऽस्मिन्कुरुपाण्डुसमागमे ॥ ००८ ॥

जातगृध्याभिपन्नाश्च पाण्डवानामनेकशः ।
धर्मादयो भविष्यन्ति समाहूता दिवौकसः ॥ ००९ ॥

भीष्मद्रोणकृपादीनां भयादशनिसंमितम् ।
रिरक्षिषन्तः संरम्भं गमिष्यन्तीति मे मतिः ॥ ०१० ॥

ते देवसहिताः पार्था न शक्याः प्रतिवीक्षितुम् ।
मानुषेण नरव्याघ्रा वीर्यवन्तोऽस्त्रपारगाः ॥ ०११ ॥

दुरासदं यस्य दिव्यं गाण्डीवं धनुरुत्तमम् ।
वारुणौ चाक्षयौ दिव्यौ शरपूर्णौ महेषुधी ॥ ०१२ ॥

वानरश्च ध्वजो दिव्यो निःसङ्गो धूमवद्गतिः ।
रथश्च चतुरन्तायां यस्य नास्ति समस्त्विषा ॥ ०१३ ॥

महामेघनिभश्चापि निर्घोषः श्रूयते जनैः ।
महाशनिसमः शब्दः शात्रवाणां भयङ्करः ॥ ०१४ ॥

यं चातिमानुषं वीर्ये कृत्स्नो लोको व्यवस्यति ।
देवानामपि जेतारं यं विदुः पार्थिवा रणे ॥ ०१५ ॥

शतानि पञ्च चैवेषूनुद्वपन्निव दृश्यते ।
निमेषान्तरमात्रेण मुञ्चन्दूरं च पातयन् ॥ ०१६ ॥

यमाह भीष्मो द्रोणश्च कृपो द्रौणिस्तथैव च ।
मद्रराजस्तथा शल्यो मध्यस्था ये च मानवाः ॥ ०१७ ॥

युद्धायावस्थितं पार्थं पार्थिवैरतिमानुषैः ।
अशक्यं रथशार्दूलं पराजेतुमरिंदमम् ॥ ०१८ ॥

क्षिपत्येकेन वेगेन पञ्च बाणशतानि यः ।
सदृशं बाहुवीर्येण कार्तवीर्यस्य पाण्डवम्  ॥ ०१९  ॥

तमर्जुनं महेष्वासं महेन्द्रोपेन्द्ररक्षितम् ।
निघ्नन्तमिव पश्यामि विमर्देऽस्मिन्महामृधे  ॥ ०२०  ॥

इत्येवं चिन्तयन्कृत्स्नमहोरात्राणि भारत ।
अनिद्रो निःसुखश्चास्मि कुरूणां शमचिन्तया  ॥ ०२१  ॥

क्षयोदयोऽयं सुमहान्कुरूणां प्रत्युपस्थितः ।
अस्य चेत्कलहस्यान्तः शमादन्यो न विद्यते  ॥ ०२२  ॥

शमो मे रोचते नित्यं पार्थैस्तात न विग्रहः ।
कुरुभ्यो हि सदा मन्ये पाण्डवाञ्शक्तिमत्तरान्  ॥ ०२३  ॥

---

# अध्याय ०६०

वैशंपायन उवाच  ॥

पितुरेतद्वचः श्रुत्वा धार्तराष्ट्रोऽत्यमर्षणः ।
आधाय विपुलं क्रोधं पुनरेवेदमब्रवीत्  ॥ ००१  ॥

अशक्या देवसचिवाः पार्थाः स्युरिति यद्भवान् ।
मन्यते तद्भयं व्येतु भवतो राजसत्तम  ॥ ००२  ॥

अकामद्वेषसंयोगाद्द्रोहाल्लोभाच्च भारत ।
उपेक्षया च भावानां देवा देवत्वमाप्नुवन्  ॥ ००३  ॥

इति द्वैपायनो व्यासो नारदश्च महातपाः ।
जामदग्न्यश्च रामो नः कथामकथयत्पुरा ॥ ००४ ॥

नैव मानुषवद्देवाः प्रवर्तन्ते कदाचन ।
कामाल्लोभादनुक्रोशाद्द्वेषाच्च भरतर्षभ ॥ ००५ ॥

यदि ह्यग्निश्च वायुश्च धर्म इन्द्रोऽश्विनावपि ।
कामयोगात्प्रवर्तेरन्न पार्था दुःखमाप्नुयुः ॥ ००६ ॥

तस्मान्न भवता चिन्ता कार्यैषा स्यात्कदाचन ।
दैवेष्वपेक्षका ह्येते शश्वद्भावेषु भारत ॥ ००७ ॥

अथ चेत्कामसंयोगाद्द्वेषाल्लोभाच्च लक्ष्यते ।
देवेषु देवप्रामाण्यं नैव तद्विक्रमिष्यति ॥ ००८ ॥

मयाभिमन्त्रितः शश्वज्जातवेदाः प्रशंसति ।
दिधक्षुः सकला.ण्ल्लोकान्परिक्षिप्य समन्ततः ॥ ००९ ॥

यद्वा परमकं तेजो येन युक्ता दिवौकसः ।
ममाप्यनुपमं भूयो देवेभ्यो विद्धि भारत ॥ ०१० ॥

प्रदीर्यमाणां वसुधां गिरीणां शिखराणि च ।
लोकस्य पश्यतो राजन्स्थापयाम्यभिमन्त्रणात् ॥ ०११ ॥

चेतनाचेतनस्यास्य जङ्गमस्थावरस्य च ।
विनाशाय समुत्पन्नं महाघोरं महास्वनम् ॥ ०१२ ॥

अश्मवर्षं च वायुं च शमयामीह नित्यशः ।
जगतः पश्यतोऽभीक्ष्णं भूतानामनुकम्पया ॥ ०१३ ॥

स्तम्भितास्वप्सु गच्छन्ति मया रथपदातयः ।
देवासुराणां भावानामहमेकः प्रवर्तिता ॥ ०१४ ॥

अक्षौहिणीभिर्यान्देशान्यामि कार्येण केनचित् ।
तत्रापो मे प्रवर्तन्ते यत्र यत्राभिकामये ॥ ०१५ ॥

भयानि विषये राजन्व्यालादीनि न सन्ति मे ।
मत्तः सुप्तानि भूतानि न हिंसन्ति भयङ्कराः ॥ ०१६ ॥

निकामवर्षी पर्जन्यो राजन्विषयवासिनाम् ।
धर्मिष्ठाश्च प्रजाः सर्वा ईतयश्च न सन्ति मे ॥ ०१७ ॥

अश्विनावथ वाय्वग्नी मरुद्भिः सह वृत्रहा ।
धर्मश्चैव मया द्विष्टान्नोत्सहन्तेऽभिरक्षितुम् ॥ ०१८ ॥

यदि ह्येते समर्थाः स्युर्मद्द्विषस्त्रातुमोजसा ।
न स्म त्रयोदश समाः पार्था दुःखमवाप्नुयुः ॥ ०१९ ॥

नैव देवा न गन्धर्वा नासुरा न च राक्षसाः ।
शक्तास्त्रातुं मया द्विष्टं सत्यमेतद्ब्रवीमि ते ॥ ०२० ॥

यदभिध्याम्यहं शश्वच्छुभं वा यदि वाशुभम् ।
नैतद्विपन्नपूर्वं मे मित्रेष्वरिषु चोभयोः ॥ ०२१ ॥

भविष्यतीदमिति वा यद्ब्रवीमि परंतप ।
नान्यथा भूतपूर्वं तत्सत्यवागिति मां विदुः ॥ ०२२ ॥

लोकसाक्षिकमेतन्मे माहात्म्यं दिक्षु विश्रुतम् ।
आश्वासनार्थं भवतः प्रोक्तं न श्लाघया नृप ॥ ०२३ ॥

न ह्यहं श्लाघनो राजन्भूतपूर्वः कदाचन ।

असदाचरितं ह्येतद्यदात्मानं प्रशंसति ॥ ०२४ ॥

पाण्डवांश्चैव मत्स्यांश्च पाञ्चालान्केकयैः सह ।
सात्यकिं वासुदेवं च श्रोतासि विजितान्मया ॥ ०२५ ॥

सरितः सागरं प्राप्य यथा नश्यन्ति सर्वशः ।
तथैव ते विनङ्क्ष्यन्ति मामासाद्य सहान्वयाः ॥ ०२६ ॥

परा बुद्धिः परं तेजो वीर्यं च परमं मयि ।
परा विद्या परो योगो मम तेभ्यो विशिष्यते ॥ ०२७ ॥

पितामहश्च द्रोणश्च कृपः शल्यः शलस्तथा ।
अस्त्रेषु यत्प्रजानन्ति सर्वं तन्मयि विद्यते ॥ ०२८ ॥

इत्युक्त्वा सञ्जयं भूयः पर्यपृच्छत भारत ।
ज्ञात्वा युयुत्सुः कार्याणि प्राप्तकालमरिंदम ॥ ०२९ ॥

---

# अध्याय ०६१

वैशंपायन उवाच ॥

तथा तु पृच्छन्तमतीव पार्था ;न्वैचित्रवीर्यं तमचिन्तयित्वा ।
उवाच कर्णो धृतराष्ट्रपुत्रं ; प्रहर्षयन्संसदि कौरवाणाम् ॥ ००१ ॥

मिथ्या प्रतिज्ञाय मया यदस्त्रं ; रामाद्धृतं ब्रह्मपुरं पुरस्तात् ।
विज्ञाय तेनास्मि तदैवमुक्त ;स्तवान्तकालेऽप्रतिभास्यतीति ॥ ००२ ॥

महापराधे ह्यपि संनतेन ; महर्षिणाहं गुरुणा च शप्तः ।
शक्तः प्रदग्धुं ह्यपि तिग्मतेजाः ; ससागरामप्यवनिं महर्षिः ॥ ००३ ॥

प्रसादितं ह्यस्य मया मनोऽभू ;च्छुश्रूषया स्वेन च पौरुषेण ।
ततस्तदस्त्रं मम सावशेषं ; तस्मात्समर्थोऽस्मि ममैष भारः ॥ ००४ ॥

निमेषमात्रं तमृषिप्रसाद ;मवाप्य पाञ्चालकरूषमत्स्यान् ।
निहत्य पार्थांश्च सपुत्रपौत्रा.ण् ;ल्लोकानहं शस्त्रजितान्प्रपत्स्ये ॥ ००५ ॥

पितामहस्तिष्ठतु ते समीपे ; द्रोणश्च सर्वे च नरेन्द्रमुख्याः ।
यथाप्रधानेन बलेन यात्वा ; पार्थान्हनिष्यामि ममैष भारः ॥ ००६ ॥

एवं ब्रुवाणं तमुवाच भीष्मः ; किं कत्थसे कालपरीतबुद्धे ।
न कर्ण जानासि यथा प्रधाने ; हते हताः स्युर्धृतराष्ट्रपुत्राः ॥ ००७ ॥

यत्खाण्डवं दाहयता कृतं हि ; कृष्णद्वितीयेन धनञ्जयेन ।
श्रुत्वैव तत्कर्म नियन्तुमात्मा ; शक्यस्त्वया वै सह बान्धवेन ॥ ००८ ॥

यां चापि शक्तिं त्रिदशाधिपस्ते ; ददौ महात्मा भगवान्महेन्द्रः ।
भस्मीकृतां तां पतितां विशीर्णां ; चक्राहतां द्रक्ष्यसि केशवेन ॥ ००९ ॥

यस्ते शरः सर्पमुखो विभाति ; सदाग्र्यमाल्यैर्महितः प्रयत्नात् ।
स पाण्डुपुत्राभिहतः शरौघैः ; सह त्वया यास्यति कर्ण नाशम् ॥ ०१० ॥

बाणस्य भौमस्य च कर्ण हन्ता ; किरीटिनं रक्षति वासुदेवः ।
यस्त्वादृशानां च गरीयसां च ; हन्ता रिपूणां तुमुले प्रगाढे ॥ ०११ ॥

कर्ण उवाच ॥

असंशयं वृष्णिपतिर्यथोक्त ;स्तथा च भूयश्च ततो महात्मा ।
अहं यदुक्तः परुषं तु किं चि ;त्पितामहस्तस्य फलं शृणोतु ॥ ०१२ ॥

न्यस्यामि शस्त्राणि न जातु संख्ये ; पितामहो द्रक्ष्यति मां सभायाम् ।
त्वयि प्रशान्ते तु मम प्रभावं ; द्रक्ष्यन्ति सर्वे भुवि भूमिपालाः ॥ ०१३ ॥

वैशंपायन उवाच ॥

इत्येवमुक्त्वा स महाधनुष्मा ;न्हित्वा सभां स्वं भवनं जगाम ।
भीष्मस्तु दुर्योधनमेव राज ;न्मध्ये कुरूणां प्रहसन्नुवाच ॥ ०१४ ॥

सत्यप्रतिज्ञः किल सूतपुत्र ;स्तथा स भारं विषहेत कस्मात् ।
व्यूहं प्रतिव्यूह्य शिरांसि भित्त्वा ; लोकक्षयं पश्यत भीमसेनात् ॥ ०१५ ॥

आवन्त्यकालिङ्गजयद्रथेषु ; वेदिध्वजे तिष्ठति बाह्लिके च ।
अहं हनिष्यामि सदा परेषां ; सहस्रशश्चायुतशश्च योधान् ॥ ०१६ ॥

यदैव रामे भगवत्यनिन्द्ये ; ब्रह्म ब्रुवाणः कृतवांस्तदस्त्रम् ।
तदैव धर्मश्च तपश्च नष्टं ; वैकर्तनस्याधमपूरुषस्य ॥ ०१७ ॥

अथोक्तवाक्ये नृपतौ तु भीष्मे ; निक्षिप्य शस्त्राणि गते च कर्णे ।
वैचित्रवीर्यस्य सुतोऽल्पबुद्धि ;र्दुर्योधनः शांतनवं बभाषे ॥ ०१८ ॥

---

# अध्याय ०६२

दुर्योधन उवाच ॥

सदृशानां मनुष्येषु सर्वेषां तुल्यजन्मनाम् ।
कथमेकान्ततस्तेषां पार्थानां मन्यसे जयम् ॥ ००१ ॥

सर्वे स्म समजातीयाः सर्वे मानुषयोनयः ।
पितामह विजानीषे पार्थेषु विजयं कथम् ॥ ००२ ॥

नाहं भवति न द्रोणे न कृपे न च बाह्लिके ।
अन्येषु च नरेन्द्रेषु पराक्रम्य समारभे ॥ ००३ ॥

अहं वैकर्तनः कर्णो भ्राता दुःशासनश्च मे ।
पाण्डवान्समरे पञ्च हनिष्यामः शितैः शरैः ॥ ००४ ॥

ततो राजन्महायज्ञैर्विविधैर्भूरिदक्षिणैः ।
ब्राह्मणांस्तर्पयिष्यामि गोभिरश्वैर्धनेन च ॥ ००५ ॥

विदुर उवाच ॥

शकुनीनामिहार्थाय पाशं भूमावयोजयत् ।
कश्चिच्छाकुनिकस्तात पूर्वेषामिति शुश्रुम ॥ ००६ ॥

तस्मिन्द्वौ शकुनौ बद्धौ युगपत्समपौरुषौ ।
तावुपादाय तं पाशं जग्मतुः खचरावुभौ ॥ ००७ ॥

तौ विहायसमाक्रान्तौ दृष्ट्वा शाकुनिकस्तदा ।
अन्वधावदनिर्विण्णो येन येन स्म गच्छतः ॥ ००८ ॥

तथा तमनुधावन्तं मृगयुं शकुनार्थिनम् ।
आश्रमस्थो मुनिः कश्चिद्ददर्शाथ कृताह्निकः ॥ ००९ ॥

तावन्तरिक्षगौ शीघ्रमनुयान्तं महीचरम् ।
श्लोकेनानेन कौरव्य पप्रच्छ स मुनिस्तदा ॥ ०१० ॥

विचित्रमिदमाश्चर्यं मृगहन्प्रतिभाति मे ।

प्लवमानौ हि खचरौ पदातिरनुधावसि ॥ ०११ ॥

शाकुनिक उवाच ॥

पाशमेकमुभावेतौ सहितौ हरतो मम ।
यत्र वै विवदिष्येते तत्र मे वशमेष्यतः ॥ ०१२ ॥

विदुर उवाच ॥

तौ विवादमनुप्राप्तौ शकुनौ मृत्युसंधितौ ।
विगृह्य च सुदुर्बुद्धी पृथिव्यां संनिपेततुः ॥ ०१३ ॥

तौ युध्यमानौ संरब्धौ मृत्युपाशवशानुगौ ।
उपसृत्यापरिज्ञातो जग्राह मृगयुस्तदा ॥ ०१४ ॥

एवं ये ज्ञातयोऽर्थेषु मिथो गच्छन्ति विग्रहम् ।
तेऽमित्रवशमायान्ति शकुनाविव विग्रहात् ॥ ०१५ ॥

संभोजनं सङ्कथनं संप्रश्नोऽथ समागमः ।
एतानि ज्ञातिकार्याणि न विरोधः कदाचन ॥ ०१६ ॥

यस्मिन्काले सुमनसः सर्वे वृद्धानुपासते ।
सिंहगुप्तमिवारण्यमप्रधृष्या भवन्ति ते ॥ ०१७ ॥

येऽर्थं संततमासाद्य दीना इव समासते ।
श्रियं ते संप्रयच्छन्ति द्विषद्भ्यो भरतर्षभ ॥ ०१८ ॥

धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च ।
धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ ०१९ ॥

इदमन्यत्प्रवक्ष्यामि यथा दृष्टं गिरौ मया ।

श्रुत्वा तदपि कौरव्य यथा श्रेयस्तथा कुरु  ॥ ०२०  ॥

वयं किरातैः सहिता गच्छामो गिरिमुत्तरम् ।
ब्राह्मणैर्देवकल्पैश्च विद्याजम्भकवातिकैः  ॥ ०२१  ॥

कुञ्जभूतं गिरिं सर्वमभितो गन्धमादनम् ।
दीप्यमानौषधिगणं सिद्धगन्धर्वसेवितम्  ॥ ०२२  ॥

तत्र पश्यामहे सर्वे मधु पीतममाक्षिकम् ।
मरुप्रपाते विषमे निविष्टं कुम्भसंमितम्  ॥ ०२३  ॥

आशीविषै रक्ष्यमाणं कुबेरदयितं भृशम् ।
यत्प्राश्य पुरुषो मर्त्यो अमरत्वं निगच्छति  ॥ ०२४  ॥

अचक्षुर्लभते चक्षुर्वृद्धो भवति वै युवा ।
इति ते कथयन्ति स्म ब्राह्मणा जम्भसाधकाः  ॥ ०२५  ॥

ततः किरातास्तद्दृष्ट्वा प्रार्थयन्तो महीपते ।
विनेशुर्विषमे तस्मिन्ससर्पे गिरिगह्वरे  ॥ ०२६  ॥

तथैव तव पुत्रोऽयं पृथिवीमेक इच्छति ।
मधु पश्यति संमोहात्प्रपातं नानुपश्यति  ॥ ०२७  ॥

दुर्योधनो योद्धुमनाः समरे सव्यसाचिना ।
न च पश्यामि तेजोऽस्य विक्रमं वा तथाविधम्  ॥ ०२८  ॥

एकेन रथमास्थाय पृथिवी येन निर्जिता ।
प्रतीक्षमाणो यो वीरः क्षमते वीक्षितं तव  ॥ ०२९  ॥

द्रुपदो मत्स्यराजश्च सङ्क्रुद्धश्च धनञ्जयः ।
न शेषयेयुः समरे वायुयुक्ता इवाग्नयः  ॥ ०३०  ॥

अङ्के कुरुष्व राजानं धृतराष्ट्र युधिष्ठिरम् ।
युध्यतोर्हि द्वयोर्युद्धे नैकान्तेन भवेज्जयः ॥ ०३१ ॥

---

# अध्याय ०६३

धृतराष्ट्र उवाच ॥

दुर्योधन विजानीहि यत्त्वां वक्ष्यामि पुत्रक ।
उत्पथं मन्यसे मार्गमनभिज्ञ इवाध्वगः ॥ ००१ ॥

पञ्चानां पाण्डुपुत्राणां यत्तेजः प्रमिमीषसि ।
पञ्चानामिव भूतानां महतां सुमहात्मनाम् ॥ ००२ ॥

युधिष्ठिरं हि कौन्तेयं परं धर्ममिहास्थितम् ।
परां गतिमसंप्रेक्ष्य न त्वं वेत्तुमिहार्हसि ॥ ००३ ॥

भीमसेनं च कौन्तेयं यस्य नास्ति समो बले ।
रणान्तकं तर्कयसे महावातमिव द्रुमः ॥ ००४ ॥

सर्वशस्त्रभृतां श्रेष्ठं मेरुं शिखरिणामिव ।
युधि गाण्डीवधन्वानं को नु युध्येत बुद्धिमान् ॥ ००५ ॥

धृष्टद्युम्नश्च पाञ्चाल्यः कमिवाद्य न शातयेत् ।
शत्रुमध्ये शरान्मुञ्चन्देवराडशनीमिव ॥ ००६ ॥

सात्यकिश्चापि दुर्धर्षः संमतोऽन्धकवृष्णिषु ।

ध्वंसयिष्यति ते सेनां पाण्डवेयहिते रतः ॥ ००७ ॥

यः पुनः प्रतिमानेन त्री.ण्ल्लोकानतिरिच्यते ।
तं कृष्णं पुण्डरीकाक्षं को नु युध्येत बुद्धिमान् ॥ ००८ ॥

एकतो ह्यस्य दाराश्च ज्ञातयश्च सबान्धवाः ।
आत्मा च पृथिवी चेयमेकतश्च धनञ्जयः ॥ ००९ ॥

वासुदेवोऽपि दुर्धर्षो यतात्मा यत्र पाण्डवः ।
अविषह्यं पृथिव्यापि तद्बलं यत्र केशवः ॥ ०१० ॥

तिष्ठ तात सतां वाक्ये सुहृदामर्थवादिनाम् ।
वृद्धं शांतनवं भीष्मं तितिक्षस्व पितामहम् ॥ ०११ ॥

मां च ब्रुवाणं शुश्रूष कुरूणामर्थवादिनम् ।
द्रोणं कृपं विकर्णं च महाराजं च बाह्लिकम् ॥ ०१२ ॥

एते ह्यपि यथैवाहं मन्तुमर्हसि तांस्तथा ।
सर्वे धर्मविदो ह्येते तुल्यस्नेहाश्च भारत ॥ ०१३ ॥

यत्तद्विराटनगरे सह भ्रातृभिरग्रतः ।
उत्सृज्य गाः सुसंत्रस्तं बलं ते समशीर्यत ॥ ०१४ ॥

यच्चैव तस्मिन्नगरे श्रूयते महदद्भुतम् ।
एकस्य च बहूनां च पर्याप्तं तन्निदर्शनम् ॥ ०१५ ॥

अर्जुनस्तत्तथाकार्षीत्किं पुनः सर्व एव ते ।
सभ्रातॄनभिजानीहि वृत्त्या च प्रतिपादय ॥ ०१६ ॥

# अध्याय ०६४

वैशंपायन उवाच ॥

एवमुक्त्वा महाप्राज्ञो धृतराष्ट्रः सुयोधनम् ।
पुनरेव महाभागः सञ्जयं पर्यपृच्छत ॥ ००१ ॥

ब्रूहि सञ्जय यच्छेषं वासुदेवादनन्तरम् ।
यदर्जुन उवाच त्वां परं कौतूहलं हि मे ॥ ००२ ॥

सञ्जय उवाच ॥

वासुदेववचः श्रुत्वा कुन्तीपुत्रो धनञ्जयः ।
उवाच काले दुर्धर्षो वासुदेवस्य शृण्वतः ॥ ००३ ॥

पितामहं शांतनवं धृतराष्ट्रं च सञ्जय ।
द्रोणं कृपं च कर्णं च महाराजं च बाह्लिकम् ॥ ००४ ॥

द्रौणिं च सोमदत्तं च शकुनिं चापि सौबलम् ।
दुःशासनं शलं चैव पुरुमित्रं विविंशतिम् ॥ ००५ ॥

विकर्णं चित्रसेनं च जयत्सेनं च पार्थिवम् ।
विन्दानुविन्दावावन्त्यौ दुर्मुखं चापि कौरवम् ॥ ००६ ॥

सैन्धवं दुःसहं चैव भूरिश्रवसमेव च ।
भगदत्तं च राजानं जलसंधं च पार्थिवम् ॥ ००७ ॥

ये चाप्यन्ये पार्थिवास्तत्र योद्धुं; समागताः कौरवाणां प्रियार्थम् ।
मुमूर्षवः पाण्डवाग्नौ प्रदीप्ते; समानीता धार्तराष्ट्रेण सूत ॥ ००८ ॥

यथान्यायं कौशलं वन्दनं च; समागता मद्वचनेन वाच्याः ।

इदं ब्रूयाः सञ्जय राजमध्ये ; सुयोधनं पापकृतां प्रधानम्  ॥ ००९  ॥

अमर्षणं दुर्मतिं राजपुत्रं ; पापात्मानं धार्तराष्ट्रं सुलुब्धम् ।
सर्वं ममैतद्वचनं समग्रं ; सहामात्यं सञ्जय श्रावयेथाः  ॥ ०१०  ॥

एवं प्रतिष्ठाप्य धनञ्जयो मां ; ततोऽर्थवद्धर्मवच्चापि वाक्यम् ।
प्रोवाचेदं वासुदेवं समीक्ष्य ; पार्थो धीमा.ण्ल्लोहितान्तायताक्षः  ॥ ०११  ॥

यथा श्रुतं ते वदतो महात्मनो ; मधुप्रवीरस्य वचः समाहितम् ।
तथैव वाच्यं भवता हि मद्वचः ; समागतेषु क्षितिपेषु सर्वशः  ॥ ०१२  ॥

शराग्निधूमे रथनेमिनादिते ; धनुःस्रुवेणास्त्रबलापहारिणा ।
यथा न होमः क्रियते महामृधे ; तथा समेत्य प्रयतध्वमादृताः  ॥ ०१३  ॥

न चेत्प्रयच्छध्वममित्रघातिनो ; युधिष्ठिरस्यांशमभीप्सितं स्वकम् ।
नयामि वः स्वाश्वपदातिकुञ्जरा ;न्दिशं पितॄणामशिवां शितैः शरैः  ॥ ०१४  ॥

ततोऽहमामन्त्र्य चतुर्भुजं हरिं ; धनञ्जयं चैव नमस्य सत्वरः ।
जवेन संप्राप्त इहामरद्युते ; तवान्तिकं प्रापयितुं वचो महत्  ॥ ०१५  ॥

---

# अध्याय ०६५

वैशंपायन उवाच  ॥

दुर्योधने धार्तराष्ट्रे तद्वचोऽप्रतिनन्दति ।
तूष्णींभूतेषु सर्वेषु समुत्तस्थुर्नरेश्वराः  ॥ ००१  ॥

उत्थितेषु महाराज पृथिव्यां सर्वराजसु ।

रहिते सञ्जयं राजा परिप्रष्टुं प्रचक्रमे ॥ ००२ ॥

आशंसमानो विजयं तेषां पुत्रवशानुगः ।
आत्मनश्च परेषां च पाण्डवानां च निश्चयम् ॥ ००३ ॥

धृतराष्ट्र उवाच ॥

गावल्गणे ब्रूहि नः सारफल्गु; स्वसेनायां यावदिहास्ति किञ्चित् ।
त्वं पाण्डवानां निपुणं वेत्थ सर्वं; किमेषां ज्यायः किमु तेषां कनीयः ॥ ००४ ॥

त्वमेतयोः सारवित्सर्वदर्शी; धर्मार्थयोर्निपुणो निश्चयज्ञः ।
स मे पृष्टः सञ्जय ब्रूहि सर्वं; युध्यमानाः कतरेऽस्मिन्न सन्ति ॥ ००५ ॥

सञ्जय उवाच ॥

न त्वां ब्रूयां रहिते जातु किं चि;दसूया हि त्वां प्रसहेत राजन् ।
आनयस्व पितरं संशितव्रतं; गांधारीं च महिषीमाजमीढ ॥ ००६ ॥

तौ तेऽसूयां विनयेतां नरेन्द्र; धर्मज्ञौ तौ निपुणौ निश्चयज्ञौ ।
तयोस्तु त्वां संनिधौ तद्वदेयं; कृत्स्नं मतं वासुदेवार्जुनाभ्याम् ॥ ००७ ॥

वैशंपायन उवाच ॥

ततस्तन्मतमाज्ञाय सञ्जयस्यात्मजस्य च ।
अभ्युपेत्य महाप्राज्ञः कृष्णद्वैपायनोऽब्रवीत् ॥ ००८ ॥

संपृच्छते धृतराष्ट्राय सञ्जय; आचक्ष्व सर्वं यावदेषोऽनुयुङ्क्ते ।
सर्वं यावद्वेत्थ तस्मिन्यथाव;द्याथातथ्यं वासुदेवेऽर्जुने च ॥ ००९ ॥

# अध्याय ०६६

सञ्जय उवाच ॥

अर्जुनो वासुदेवश्च धन्विनौ परमार्चितौ ।
कामादन्यत्र संभूतौ सर्वाभावाय संमितौ ॥ ००१ ॥

द्यामन्तरं समास्थाय यथायुक्तं मनस्विनः ।
चक्रं तद्वासुदेवस्य मायया वर्तते विभो ॥ ००२ ॥

सापह्नवं पाण्डवेषु पाण्डवानां सुसंमतम् ।
सारासारबलं ज्ञात्वा तत्समासेन मे शृणु ॥ ००३ ॥

नरकं शम्बरं चैव कंसं चैद्यं च माधवः ।
जितवान्घोरसङ्काशान्क्रीडन्निव जनार्दनः ॥ ००४ ॥

पृथिवीं चान्तरिक्षं च द्यां चैव पुरुषोत्तमः ।
मनसैव विशिष्टात्मा नयत्यात्मवशं वशी ॥ ००५ ॥

भूयो भूयो हि यद्राजन्पृच्छसे पाण्डवान्प्रति ।
सारासारबलं ज्ञातुं तन्मे निगदतः शृणु ॥ ००६ ॥

एकतो वा जगत्कृत्स्नमेकतो वा जनार्दनः ।
सारतो जगतः कृत्स्नादतिरिक्तो जनार्दनः ॥ ००७ ॥

भस्म कुर्याज्जगदिदं मनसैव जनार्दनः ।
न तु कृत्स्नं जगच्छक्तं भस्म कर्तुं जनार्दनम् ॥ ००८ ॥

यतः सत्यं यतो धर्मो यतो ह्रीरार्जवं यतः ।
ततो भवति गोविन्दो यतः कृष्णस्ततो जयः ॥ ००९ ॥

पृथिवीं चान्तरिक्षं च दिवं च पुरुषोत्तमः ।
विचेष्टयति भूतात्मा क्रीडन्निव जनार्दनः ॥ ०१० ॥

स कृत्वा पाण्डवान्सत्रं लोकं संमोहयन्निव ।
अधर्मनिरतान्मूढान्दग्धुमिच्छति ते सुतान् ॥ ०११ ॥

कालचक्रं जगच्चक्रं युगचक्रं च केशवः ।
आत्मयोगेन भगवान्परिवर्तयतेऽनिशम् ॥ ०१२ ॥

कालस्य च हि मृत्योश्च जङ्गमस्थावरस्य च ।
ईशते भगवानेकः सत्यमेतद्ब्रवीमि ते ॥ ०१३ ॥

ईशन्नपि महायोगी सर्वस्य जगतो हरिः ।
कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः ॥ ०१४ ॥

तेन वञ्चयते लोकान्मायायोगेन केशवः ।
ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः ॥ ०१५ ॥

---

# अध्याय ०६७

धृतराष्ट्र उवाच ॥

कथं त्वं माधवं वेत्थ सर्वलोकमहेश्वरम् ।
कथमेनं न वेदाहं तन्ममाचक्ष्व सञ्जय ॥ ००१ ॥

सञ्जय उवाच ॥

विद्या राजन्न ते विद्या मम विद्या न हीयते ।
विद्याहीनस्तमोध्वस्तो नाभिजानाति केशवम् ॥ ००२ ॥

विद्यया तात जानामि त्रियुगं मधुसूदनम् ।
कर्तारमकृतं देवं भूतानां प्रभवाप्ययम् ॥ ००३ ॥

धृतराष्ट्र उवाच ॥

गावल्गणेऽत्र का भक्तिर्या ते नित्या जनार्दने ।
यया त्वमभिजानासि त्रियुगं मधुसूदनम् ॥ ००४ ॥

सञ्जय उवाच ॥

मायां न सेवे भद्रं ते न वृथाधर्ममाचरे ।
शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम् ॥ ००५ ॥

धृतराष्ट्र उवाच ॥

दुर्योधन हृषीकेशं प्रपद्यस्व जनार्दनम् ।
आप्तो नः सञ्जयस्तात शरणं गच्छ केशवम् ॥ ००६ ॥

दुर्योधन उवाच ॥

भगवान्देवकीपुत्रो लोकं चेन्निहनिष्यति ।
प्रवदन्नर्जुने सख्यं नाहं गच्छेऽद्य केशवम् ॥ ००७ ॥

धृतराष्ट्र उवाच ॥

अवाग्गान्धारि पुत्रास्ते गच्छत्येष सुदुर्मतिः ।

ईर्ष्युर्दुरात्मा मानी च श्रेयसां वचनातिगः ॥ ००८ ॥

गान्धार्युवाच ॥

ऐश्वर्यकाम दुष्टात्मन्वृद्धानां शासनातिग ।
ऐश्वर्यजीविते हित्वा पितरं मां च बालिश ॥ ००९ ॥

वर्धयन्दुर्हृदां प्रीतिं मां च शोकेन वर्धयन् ।
निहतो भीमसेनेन स्मर्तासि वचनं पितुः ॥ ०१० ॥

व्यास उवाच ॥

दयितोऽसि राजन्कृष्णस्य धृतराष्ट्र निबोध मे ।
यस्य ते सञ्जयो दूतो यस्त्वां श्रेयसि योक्ष्यते ॥ ०११ ॥

जानात्येष हृषीकेशं पुराणं यच्च वै नवम् ।
शुश्रूषमाणमेकाग्रं मोक्ष्यते महतो भयात् ॥ ०१२ ॥

वैचित्रवीर्य पुरुषाः क्रोधहर्षतमोवृताः ।
सिता बहुविधैः पाशैर्ये न तुष्टाः स्वकैर्धनैः ॥ ०१३ ॥

यमस्य वशमायान्ति काममूढाः पुनः पुनः ।
अन्धनेत्रा यथैवान्धा नीयमानाः स्वकर्मभिः ॥ ०१४ ॥

एष एकायनः पन्था येन यान्ति मनीषिणः ।
तं दृष्ट्वा मृत्युमत्येति महांस्तत्र न सज्जते ॥ ०१५ ॥

धृतराष्ट्र उवाच ॥

अङ्ग सञ्जय मे शंस पन्थानमकुतोभयम् ।
येन गत्वा हृषीकेशं प्राप्नुयां शान्तिमुत्तमाम् ॥ ०१६ ॥

सञ्जय उवाच ॥

नाकृतात्मा कृतात्मानं जातु विद्याज्जनार्दनम् ।
आत्मनस्तु क्रियोपायो नान्यत्रेन्द्रियनिग्रहात् ॥ ०१७ ॥

इन्द्रियाणामुदीर्णानां कामत्यागोऽप्रमादतः ।
अप्रमादोऽविहिंसा च ज्ञानयोनिरसंशयम् ॥ ०१८ ॥

इन्द्रियाणां यमे यत्तो भव राजन्नतन्द्रितः ।
बुद्धिश्च मा ते च्यवतु नियच्छैतां यतस्ततः ॥ ०१९ ॥

एतज्ज्ञानं विदुर्विप्रा ध्रुवमिन्द्रियधारणम् ।
एतज्ज्ञानं च पन्थाश्च येन यान्ति मनीषिणः ॥ ०२० ॥

अप्राप्यः केशवो राजन्निन्द्रियैरजितैर्नृभिः ।
आगमाधिगतो योगाद्वशी तत्त्वे प्रसीदति ॥ ०२१ ॥

---

# अध्याय ०६८

धृतराष्ट्र उवाच ॥

भूयो मे पुण्डरीकाक्षं सञ्जयाचक्ष्व पृच्छते ।
नामकर्मार्थवित्तात प्राप्नुयां पुरुषोत्तमम् ॥ ००१ ॥

सञ्जय उवाच ॥

श्रुतं मे तस्य देवस्य नामनिर्वचनं शुभम् ।

यावत्तत्राभिजानेऽहमप्रमेयो हि केशवः ॥ ००२ ॥

वसनात्सर्वभूतानां वसुत्वाद्देवयोनितः ।
वासुदेवस्ततो वेद्यो वृषत्वाद्वृष्णिरुच्यते ॥ ००३ ॥

मौनाद्ध्यानाच्च योगाच्च विद्धि भारत माधवम् ।
सर्वतत्त्वलयाच्चैव मधुहा मधुसूदनः ॥ ००४ ॥

कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
कृष्णस्तद्भावयोगाच्च कृष्णो भवति शाश्वतः ॥ ००५ ॥

पुण्डरीकं परं धाम नित्यमक्षयमक्षरम् ।
तद्भावात्पुण्डरीकाक्षो दस्युत्रासाज्जनार्दनः ॥ ००६ ॥

यतः सत्त्वं न च्यवते यच्च सत्त्वान्न हीयते ।
सत्त्वतः सात्वतस्तस्मादार्षभाद्वृषभेक्षणः ॥ ००७ ॥

न जायते जनित्र्यां यदजस्तस्मादनीकजित् ।
देवानां स्वप्रकाशत्वाद्दमाद्दामोदरं विदुः ॥ ००८ ॥

हर्षात्सौख्यात्सुखैश्वर्याद्धृषीकेशत्वमश्नुते ।
बाहुभ्यां रोदसी बिभ्रन्महाबाहुरिति स्मृतः ॥ ००९ ॥

अधो न क्षीयते जातु यस्मात्तस्मादधोक्षजः ।
नराणामयनाच्चापि तेन नारायणः स्मृतः ॥ ०१० ॥

पूरणात्सदनाच्चैव ततोऽसौ पुरुषोत्तमः ॥ ०१० ॥

असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात् ।
सर्वस्य च सदा ज्ञानात्सर्वमेनं प्रचक्षते ॥ ०११ ॥

सत्ये प्रतिष्ठितः कृष्णः सत्यमत्र प्रतिष्ठितम् ।
सत्यात्सत्यं च गोविन्दस्तस्मात्सत्योऽपि नामतः ॥ ०१२ ॥

विष्णुर्विक्रमणादेव जयनाज्जिष्णुरुच्यते ।
शाश्वतत्वादनन्तश्च गोविन्दो वेदनाद्गवाम् ॥ ०१३ ॥

अतत्त्वं कुरुते तत्त्वं तेन मोहयते प्रजाः ।
एवंविधो धर्मनित्यो भगवान्मुनिभिः सह ॥ ०१४ ॥

आगन्ता हि महाबाहुरानृशंस्यार्थमच्युतः ॥ ०१४ ॥

---

# अध्याय ०६९

धृतराष्ट्र उवाच ॥

चक्षुष्मतां वै स्पृहयामि सञ्जय ; द्रक्ष्यन्ति ये वासुदेवं समीपे ।
विभ्राजमानं वपुषा परेण ; प्रकाशयन्तं प्रदिशो दिशश्च ॥ ००१ ॥

ईरयन्तं भारतीं भारताना ;मभ्यर्चनीयां शङ्करीं सृञ्जयानाम् ।
बुभूषद्भिर्ग्रहणीयामनिन्द्यां ; परासूनामग्रहणीयरूपाम् ॥ ००२ ॥

समुद्यन्तं सात्वतमेकवीरं ; प्रणेतारमृषभं यादवानाम् ।
निहन्तारं क्षोभणं शात्रवाणां ; मुष्णन्तं च द्विषतां वै यशांसि ॥ ००३ ॥

द्रष्टारो हि कुरवस्तं समेता ; महात्मानं शत्रुहणं वरेण्यम् ।
ब्रुवन्तं वाचमनृशंसरूपां ; वृष्णिश्रेष्ठं मोहयन्तं मदीयान् ॥ ००४ ॥

ऋषिं सनातनतमं विपश्चितं ; वाचः समुद्रं कलशं यतीनाम् ।

अरिष्टनेमिं गरुडं सुपर्णं ; पतिं प्रजानां भुवनस्य धाम ॥ ००५ ॥

सहस्रशीर्षं पुरुषं पुराण ;मनादिमध्यान्तमनन्तकीर्तिम् ।
शुक्रस्य धातारमजं जनित्रं ; परं परेभ्यः शरणं प्रपद्ये ॥ ००६ ॥

त्रैलोक्यनिर्माणकरं जनित्रं ; देवासुराणामथ नागरक्षसाम् ।
नराधिपानां विदुषां प्रधान ;मिन्द्रानुजं तं शरणं प्रपद्ये ॥ ००७ ॥

---

# भगवद्यानपर्व

## अध्याय ०७०

वैशंपायन उवाच ॥

सञ्जये प्रतियाते तु धर्मराजो युधिष्ठिरः ।
अभ्यभाषत दाशार्हमृषभं सर्वसात्वताम् ॥ ००१ ॥

अयं स कालः संप्राप्तो मित्राणां मे जनार्दन ।
न च त्वदन्यं पश्यामि यो न आपत्सु तारयेत् ॥ ००२ ॥

त्वां हि माधव संश्रित्य निर्भया मोहदर्पितम् ।
धार्तराष्ट्रं सहामात्यं स्वमंशमनुयुञ्ज्महे ॥ ००३ ॥

यथा हि सर्वास्वापत्सु पासि वृष्णीनरिंदम ।
तथा ते पाण्डवा रक्ष्याः पाह्यस्मान्महतो भयात् ॥ ००४ ॥

भगवानुवाच ॥

अयमस्मि महाबाहो ब्रूहि यत्ते विवक्षितम् ।
करिष्यामि हि तत्सर्वं यत्त्वं वक्ष्यसि भारत ॥ ००५ ॥

युधिष्ठिर उवाच ॥

श्रुतं ते धृतराष्ट्रस्य सपुत्रस्य चिकीर्षितम् ।
एतद्धि सकलं कृष्ण सञ्जयो मां यदब्रवीत् ॥ ००६ ॥

तन्मतं धृतराष्ट्रस्य सोऽस्यात्मा विवृतान्तरः ।
यथोक्तं दूत आचष्टे वध्यः स्यादन्यथा ब्रुवन् ॥ ००७ ॥

अप्रदानेन राज्यस्य शान्तिमस्मासु मार्गति ।
लुब्धः पापेन मनसा चरन्नसममात्मनः ॥ ००८ ॥

यत्तद्द्वादश वर्षाणि वने निर्व्युषिता वयम् ।
छद्मना शरदं चैकां धृतराष्ट्रस्य शासनात् ॥ ००९ ॥

स्थाता नः समये तस्मिन्धृतराष्ट्र इति प्रभो ।
नाहास्म समयं कृष्ण तद्धि नो ब्राह्मणा विदुः ॥ ०१० ॥

वृद्धो राजा धृतराष्ट्रः स्वधर्मं नानुपश्यति ।
पश्यन्वा पुत्रगृद्धित्वान्मन्दस्यान्वेति शासनम् ॥ ०११ ॥

सुयोधनमते तिष्ठन्राजास्मासु जनार्दन ।
मिथ्या चरति लुब्धः संश्चरन्प्रियमिवात्मनः ॥ ०१२ ॥

इतो दुःखतरं किं नु यत्राहं मातरं ततः ।
संविधातुं न शक्नोमि मित्राणां वा जनार्दन ॥ ०१३ ॥

काशिभिश्चेदिपाञ्चालैर्मत्स्यैश्च मधुसूदन ।

भवता चैव नाथेन पञ्च ग्रामा वृता मया ॥ ०१४ ॥

कुशस्थलं वृकस्थलमासन्दी वारणावतम् ।
अवसानं च गोविन्द किंचिदेवात्र पञ्चमम् ॥ ०१५ ॥

पञ्च नस्तात दीयन्तां ग्रामा वा नगराणि वा ।
वसेम सहिता येषु मा च नो भरता नशन् ॥ ०१६ ॥

न च तानपि दुष्टात्मा धार्तराष्ट्रोऽनुमन्यते ।
स्वाम्यमात्मनि मत्वासावतो दुःखतरं नु किम् ॥ ०१७ ॥

कुले जातस्य वृद्धस्य परवित्तेषु गृध्यतः ।
लोभः प्रज्ञानमाहन्ति प्रज्ञा हन्ति हता ह्रियम् ॥ ०१८ ॥

ह्रीर्हता बाधते धर्मं धर्मो हन्ति हतः श्रियम् ।
श्रीर्हता पुरुषं हन्ति पुरुषस्यास्वता वधः ॥ ०१९ ॥

अस्वतो हि निवर्तन्ते ज्ञातयः सुहृदर्त्विजः ।
अपुष्पादफलाद्वृक्षाद्यथा तात पतत्रिणः ॥ ०२० ॥

एतच्च मरणं तात यदस्मात्पतितादिव ।
ज्ञातयो विनिवर्तन्ते प्रेतसत्त्वादिवासवः ॥ ०२१ ॥

नातः पापीयसीं काञ्चिदवस्थां शम्बरोऽब्रवीत् ।
यत्र नैवाद्य न प्रातर्भोजनं प्रतिदृश्यते ॥ ०२२ ॥

धनमाहुः परं धर्मं धने सर्वं प्रतिष्ठितम् ।
जीवन्ति धनिनो लोके मृता ये त्वधना नराः ॥ ०२३ ॥

ये धनादपकर्षन्ति नरं स्वबलमाश्रिताः ।
ते धर्ममर्थं कामं च प्रमथ्नन्ति नरं च तम् ॥ ०२४ ॥

एतामवस्थां प्राप्यैके मरणं वव्रिरे जनाः ।
ग्रामायैके वनायैके नाशायैके प्रवव्रजुः ॥ ०२५ ॥

उन्मादमेके पुष्यन्ति यान्त्यन्ये द्विषतां वशम् ।
दास्यमेके निगच्छन्ति परेषामर्थहेतुना ॥ ०२६ ॥

आपदेवास्य मरणात्पुरुषस्य गरीयसी ।
श्रियो विनाशस्तद्ध्यस्य निमित्तं धर्मकामयोः ॥ ०२७ ॥

यदस्य धर्म्यं मरणं शाश्वतं लोकवर्त्म तत् ।
समन्तात्सर्वभूतानां न तदत्येति कश्चन ॥ ०२८ ॥

न तथा बाध्यते कृष्ण प्रकृत्या निर्धनो जनः ।
यथा भद्रां श्रियं प्राप्य तया हीनः सुखैधितः ॥ ०२९ ॥

स तदात्मापराधेन संप्राप्तो व्यसनं महत् ।
सेन्द्रान्गर्हयते देवान्नात्मानं च कथञ्चन ॥ ०३० ॥

न चास्मिन्सर्वशास्त्राणि प्रतरन्ति निगर्हणाम् ।
सोऽभिक्रुध्यति भृत्यानां सुहृदश्चाभ्यसूयति ॥ ०३१ ॥

तं तदा मन्युरेवैति स भूयः संप्रमुह्यति ।
स मोहवशमापन्नः क्रूरं कर्म निषेवते ॥ ०३२ ॥

पापकर्मात्ययायैव सङ्करं तेन पुष्यति ।
सङ्करो नरकायैव सा काष्ठा पापकर्मणाम् ॥ ०३३ ॥

न चेत्प्रबुध्यते कृष्ण नरकायैव गच्छति ।
तस्य प्रबोधः प्रज्ञैव प्रज्ञाचक्षुर्न रिष्यति ॥ ०३४ ॥

प्रज्ञालाभे हि पुरुषः शास्त्राण्येवान्ववेक्षते ।

शास्त्रनित्यः पुनर्धर्मं तस्य ह्रीरङ्गमुत्तमम् ॥ ०३५ ॥

ह्रीमान्हि पापं प्रद्वेष्टि तस्य श्रीरभिवर्धते ।
श्रीमान्स यावद्भवति तावद्भवति पूरुषः ॥ ०३६ ॥

धर्मनित्यः प्रशान्तात्मा कार्ययोगवहः सदा ।
नाधर्मे कुरुते बुद्धिं न च पापेषु वर्तते ॥ ०३७ ॥

अह्रीको वा विमूढो वा नैव स्त्री न पुनः पुमान् ।
नास्याधिकारो धर्मेऽस्ति यथा शूद्रस्तथैव सः ॥ ०३८ ॥

ह्रीमानवति देवांश्च पितृनात्मानमेव च ।
तेनामृतत्वं व्रजति सा काष्ठा पुण्यकर्मणाम् ॥ ०३९ ॥

तदिदं मयि ते दृष्टं प्रत्यक्षं मधुसूदन ।
यथा राज्यात्परिभ्रष्टो वसामि वसतीरिमाः ॥ ०४० ॥

ते वयं न श्रियं हातुमलं न्यायेन केनचित् ।
अत्र नो यतमानानां वधश्चेदपि साधु तत् ॥ ०४१ ॥

तत्र नः प्रथमः कल्पो यद्वयं ते च माधव ।
प्रशान्ताः समभूताश्च श्रियं तानश्नुवीमहि ॥ ०४२ ॥

तत्रैषा परमा काष्ठा रौद्रकर्मक्षयोदया ।
यद्वयं कौरवान्हत्वा तानि राष्ट्राण्यशीमहि ॥ ०४३ ॥

ये पुनः स्युरसंबद्धा अनार्याः कृष्ण शत्रवः ।
तेषामप्यवधः कार्यः किं पुनर्ये स्युरीदृशाः ॥ ०४४ ॥

ज्ञातयश्च हि भूयिष्ठाः सहाया गुरवश्च नः ।
तेषां वधोऽतिपापीयान्किं नु युद्धेऽस्ति शोभनम् ॥ ०४५ ॥

पापः क्षत्रियधर्मोऽयं वयं च क्षत्रबान्धवाः ।
स नः स्वधर्मोऽधर्मो वा वृत्तिरन्या विगर्हिता ॥ ०४६ ॥

शूद्रः करोति शुश्रूषां वैश्या विपणिजीविनः ।
वयं वधेन जीवामः कपालं ब्राह्मणैर्वृतम् ॥ ०४७ ॥

क्षत्रियः क्षत्रियं हन्ति मत्स्यो मत्स्येन जीवति ।
श्वा श्वानं हन्ति दाशार्ह पश्य धर्मो यथागतः ॥ ०४८ ॥

युद्धे कृष्ण कलिर्नित्यं प्राणाः सीदन्ति संयुगे ।
बलं तु नीतिमात्राय हठे जयपराजयौ ॥ ०४९ ॥

नात्मच्छन्देन भूतानां जीवितं मरणं तथा ।
नाप्यकाले सुखं प्राप्यं दुःखं वापि यदूत्तम ॥ ०५० ॥

एको ह्यपि बहून्हन्ति घ्नन्त्येकं बहवोऽप्युत ।
शूरं कापुरुषो हन्ति अयशस्वी यशस्विनम् ॥ ०५१ ॥

जयश्चैवोभयोर्दृष्ट उभयोश्च पराजयः ।
तथैवापचयो दृष्टो व्यपयाने क्षयव्ययौ ॥ ०५२ ॥

सर्वथा वृजिनं युद्धं को घ्नन्न प्रतिहन्यते ।
हतस्य च हृषीकेश समौ जयपराजयौ ॥ ०५३ ॥

पराजयश्च मरणान्मन्ये नैव विशिष्यते ।
यस्य स्याद्विजयः कृष्ण तस्याप्यपचयो ध्रुवम् ॥ ०५४ ॥

अन्ततो दयितं घ्नन्ति केचिदप्यपरे जनाः ।
तस्याङ्ग बलहीनस्य पुत्रान्भ्रातॄनपश्यतः ॥ ०५५ ॥

निर्वेदो जीविते कृष्ण सर्वतश्चोपजायते ॥ ०५५ ॥

ये ह्येव वीरा ह्रीमन्त आर्याः करुणवेदिनः ।
त एव युद्धे हन्यन्ते यवीयान्मुच्यते जनः ॥ ०५६ ॥

हत्वाप्यनुशयो नित्यं परानपि जनार्दन ।
अनुबन्धश्च पापोऽत्र शेषश्चाप्यवशिष्यते ॥ ०५७ ॥

शेषो हि बलमासाद्य न शेषमवशेषयेत् ।
सर्वोच्छेदे च यतते वैरस्यान्तविधित्सया ॥ ०५८ ॥

जयो वैरं प्रसृजति दुःखमास्ते पराजितः ।
सुखं प्रशान्तः स्वपिति हित्वा जयपराजयौ ॥ ०५९ ॥

जातवैरश्च पुरुषो दुःखं स्वपिति नित्यदा ।
अनिर्वृतेन मनसा ससर्प इव वेश्मनि ॥ ०६० ॥

उत्सादयति यः सर्वं यशसा स वियुज्यते ।
अकीर्तिं सर्वभूतेषु शाश्वतीं स नियच्छति ॥ ०६१ ॥

न हि वैराणि शाम्यन्ति दीर्घकालकृतान्यपि ।
आख्यातारश्च विद्यन्ते पुमांश्चोत्पद्यते कुले ॥ ०६२ ॥

न चापि वैरं वैरेण केशव व्युपशाम्यति ।
हविषाग्निर्यथा कृष्ण भूय एवाभिवर्धते ॥ ०६३ ॥

अतोऽन्यथा नास्ति शान्तिर्नित्यमन्तरमन्ततः ।
अन्तरं लिप्समानानामयं दोषो निरन्तरः ॥ ०६४ ॥

पौरुषेयो हि बलवानाधिर्हृदयबाधनः ।
तस्य त्यागेन वा शान्तिर्निवृत्त्या मनसोऽपि वा ॥ ०६५ ॥

अथ वा मूलघातेन द्विषतां मधुसूदन ।
फलनिर्वृत्तिरिद्धा स्यात्तन्नृशंसतरं भवेत् ॥ ०६६ ॥

या तु त्यागेन शान्तिः स्यात्तदृते वध एव सः ।
संशयाच्च समुच्छेदाद्द्विषतामात्मनस्तथा ॥ ०६७ ॥

न च त्यक्तुं तदिच्छामो न चेच्छामः कुलक्षयम् ।
अत्र या प्रणिपातेन शान्तिः सैव गरीयसी ॥ ०६८ ॥

सर्वथा यतमानानामयुद्धमभिकाङ्क्षताम् ।
सान्त्वे प्रतिहते युद्धं प्रसिद्धमपराक्रमम् ॥ ०६९ ॥

प्रतिघातेन सान्त्वस्य दारुणं संप्रवर्तते ।
तच्छुनामिव गोपादे पण्डितैरुपलक्षितम् ॥ ०७० ॥

लाङ्गूलचालनं क्ष्वेडः प्रतिरावो विवर्तनम् ।
दन्तदर्शनमारावस्ततो युद्धं प्रवर्तते ॥ ०७१ ॥

तत्र यो बलवान्कृष्ण जित्वा सोऽत्ति तदामिषम् ।
एवमेव मनुष्येषु विशेषो नास्ति कश्चन ॥ ०७२ ॥

सर्वथा त्वेतदुचितं दुर्बलेषु बलीयसाम् ।
अनादरो विरोधश्च प्रणिपाती हि दुर्बलः ॥ ०७३ ॥

पिता राजा च वृद्धश्च सर्वथा मानमर्हति ।
तस्मान्मान्यश्च पूज्यश्च धृतराष्ट्रो जनार्दन ॥ ०७४ ॥

पुत्रस्नेहस्तु बलवान्धृतराष्ट्रस्य माधव ।
स पुत्रवशमापन्नः प्रणिपातं प्रहास्यति ॥ ०७५ ॥

तत्र किं मन्यसे कृष्ण प्राप्तकालमनन्तरम् ।
कथमर्थाच्च धर्माच्च न हीयेमहि माधव ॥ ०७६ ॥

ईदृशे ह्यर्थकृच्छ्रेऽस्मिन्कमन्यं मधुसूदन ।
उपसंप्रष्टुमर्हामि त्वामृते पुरुषोत्तम ॥ ०७७ ॥

प्रियश्च प्रियकामश्च गतिज्ञः सर्वकर्मणाम् ।
को हि कृष्णास्ति नस्त्वादृक्सर्वनिश्चयवित्सुहृत् ॥ ०७८ ॥

वैशंपायन उवाच ॥

एवमुक्तः प्रत्युवाच धर्मराजं जनार्दनः ।
उभयोरेव वामर्थे यास्यामि कुरुसंसदम् ॥ ०७९ ॥

शमं तत्र लभेयं चेद्युष्मदर्थमहापयन् ।
पुण्यं मे सुमहद्राजंश्चरितं स्यान्महाफलम् ॥ ०८० ॥

मोचयेयं मृत्युपाशात्संरब्धान्कुरुसृञ्जयान् ।
पाण्डवान्धार्तराष्ट्रांश्च सर्वां च पृथिवीमिमाम् ॥ ०८१ ॥

युधिष्ठिर उवाच ॥

न ममैतन्मतं कृष्ण यत्त्वं यायाः कुरून्प्रति ।
सुयोधनः सूक्तमपि न करिष्यति ते वचः ॥ ०८२ ॥

समेतं पार्थिवं क्षत्रं सुयोधनवशानुगम् ।
तेषां मध्यावतरणं तव कृष्ण न रोचये ॥ ०८३ ॥

न हि नः प्रीणयेद्द्रव्यं न देवत्वं कुतः सुखम् ।
न च सर्वामरैश्वर्यं तव रोधेन माधव ॥ ०८४ ॥

भगवानुवाच ॥

जानाम्येतां महाराज धार्तराष्ट्रस्य पापताम् ।
अवाच्यास्तु भविष्यामः सर्वलोके महीक्षिताम् ॥ ०८५ ॥

न चापि मम पर्याप्ताः सहिताः सर्वपार्थिवाः ।
क्रुद्धस्य प्रमुखे स्थातुं सिंहस्येवेतरे मृगाः ॥ ०८६ ॥

अथ चेत्ते प्रवर्तेरन्मयि किञ्चिदसांप्रतम् ।
निर्दहेयं कुरून्सर्वानिति मे धीयते मतिः ॥ ०८७ ॥

न जातु गमनं तत्र भवेत्पार्थ निरर्थकम् ।
अर्थप्राप्तिः कदाचित्स्यादन्ततो वाप्यवाच्यता ॥ ०८८ ॥

युधिष्ठिर उवाच ॥

यत्तुभ्यं रोचते कृष्ण स्वस्ति प्राप्नुहि कौरवान् ।
कृतार्थं स्वस्तिमन्तं त्वां द्रक्ष्यामि पुनरागतम् ॥ ०८९ ॥

विष्वक्सेन कुरून्गत्वा भारताञ्शमयेः प्रभो ।
यथा सर्वे सुमनसः सह स्यामः सुचेतसः ॥ ०९० ॥

भ्राता चासि सखा चासि बीभत्सोर्मम च प्रियः ।
सौहृदेनाविशङ्क्योऽसि स्वस्ति प्राप्नुहि भूतये ॥ ०९१ ॥

अस्मान्वेत्थ परान्वेत्थ वेत्थार्थं वेत्थ भाषितम् ।
यद्यदस्मद्धितं कृष्ण तत्तद्वाच्यः सुयोधनः ॥ ०९२ ॥

यद्यद्धर्मेण संयुक्तमुपपद्येद्धितं वचः ।
तत्तत्केशव भाषेथाः सान्त्वं वा यदि वेतरत् ॥ ०९३ ॥

# अध्याय ०७१

भगवानुवाच ॥

सञ्जयस्य श्रुतं वाक्यं भवतश्च श्रुतं मया ।
सर्वं जानाम्यभिप्रायं तेषां च भवतश्च यः ॥ ००१ ॥

तव धर्माश्रिता बुद्धिस्तेषां वैराश्रिता मतिः ।
यदयुद्धेन लभ्येत तत्ते बहुमतं भवेत् ॥ ००२ ॥

न च तन्नैष्ठिकं कर्म क्षत्रियस्य विशां पते ।
आहुराश्रमिणः सर्वे यद्भैक्षं क्षत्रियश्चरेत् ॥ ००३ ॥

जयो वधो वा सङ्ग्रामे धात्रा दिष्टः सनातनः ।
स्वधर्मः क्षत्रियस्यैष कार्पण्यं न प्रशस्यते ॥ ००४ ॥

न हि कार्पण्यमास्थाय शक्या वृत्तिर्युधिष्ठिर ।
विक्रमस्व महाबाहो जहि शत्रूनरिंदम ॥ ००५ ॥

अतिगृद्धाः कृतस्नेहा दीर्घकालं सहोषिताः ।
कृतमित्राः कृतबला धार्तराष्ट्राः परंतप ॥ ००६ ॥

न पर्यायोऽस्ति यत्साम्यं त्वयि कुर्युर्विशां पते ।
बलवत्तां हि मन्यन्ते भीष्मद्रोणकृपादिभिः ॥ ००७ ॥

यावच्च मार्दवेनैतान्राजन्नुपचरिष्यसि ।
तावदेते हरिष्यन्ति तव राज्यमरिंदम ॥ ००८ ॥

नानुक्रोशान्न कार्पण्यान्न च धर्मार्थकारणात् ।
अलं कर्तुं धार्तराष्ट्रास्तव काममरिंदम ॥ ००९ ॥

एतदेव निमित्तं ते पाण्डवास्तु यथा त्वयि ।
नान्वतप्यन्त कौपीनं तावत्कृत्वापि दुष्करम् ॥ ०१० ॥

पितामहस्य द्रोणस्य विदुरस्य च धीमतः ।
पश्यतां कुरुमुख्यानां सर्वेषामेव तत्त्वतः ॥ ०११ ॥

दानशीलं मृदुं दान्तं धर्मकाममनुव्रतम् ।
यत्त्वामुपधिना राजन्द्यूतेनावञ्चयत्तदा ॥ ०१२ ॥

न चापत्रपते पापो नृशंसस्तेन कर्मणा ॥ ०१२ ॥

तथाशीलसमाचारे राजन्मा प्रणयं कृथाः ।
वध्यास्ते सर्वलोकस्य किं पुनस्तव भारत ॥ ०१३ ॥

वाग्भिस्त्वप्रतिरूपाभिरतुदत्सकनीयसम् ।
श्लाघमानः प्रहृष्टः सन्भाषते भ्रातृभिः सह ॥ ०१४ ॥

एतावत्पाण्डवानां हि नास्ति किञ्चिदिह स्वकम् ।
नामधेयं च गोत्रं च तदप्येषां न शिष्यते ॥ ०१५ ॥

कालेन महता चैषां भविष्यति पराभवः ।
प्रकृतिं ते भजिष्यन्ति नष्टप्रकृतयो जनाः ॥ ०१६ ॥

एताश्चान्याश्च परुषा वाचः स समुदीरयन् ।
श्लाघते ज्ञातिमध्ये स्म त्वयि प्रव्रजिते वनम् ॥ ०१७ ॥

ये तत्रासन्समानीतास्ते दृष्ट्वा त्वामनागसम् ।
अश्रुकण्ठा रुदन्तश्च सभायामासते तदा ॥ ०१८ ॥

न चैनमभ्यनन्दंस्ते राजानो ब्राह्मणैः सह ।
सर्वे दुर्योधनं तत्र निन्दन्ति स्म सभासदः ॥ ०१९ ॥

कुलीनस्य च या निन्दा वधश्चामित्रकर्शन ।
महागुणो वधो राजन्न तु निन्दा कुजीविका ॥ ०२० ॥

तदैव निहतो राजन्यदैव निरपत्रपः ।
निन्दितश्च महाराज पृथिव्यां सर्वराजसु ॥ ०२१ ॥

ईषत्कार्यो वधस्तस्य यस्य चारित्रमीदृशम् ।
प्रस्कम्भनप्रतिस्तब्धश्छिन्नमूल इव द्रुमः ॥ ०२२ ॥

वध्यः सर्प इवानार्यः सर्वलोकस्य दुर्मतिः ।
जह्येनं त्वममित्रघ्न मा राजन्विचिकित्सिथाः ॥ ०२३ ॥

सर्वथा त्वत्क्षमं चैतद्रोचते च ममानघ ।
यत्त्वं पितरि भीष्मे च प्रणिपातं समाचरेः ॥ ०२४ ॥

अहं तु सर्वलोकस्य गत्वा छेत्स्यामि संशयम् ।
येषामस्ति द्विधाभावो राजन्दुर्योधनं प्रति ॥ ०२५ ॥

मध्ये राज्ञामहं तत्र प्रातिपौरुषिकान्गुणान् ।
तव सङ्कीर्तयिष्यामि ये च तस्य व्यतिक्रमाः ॥ ०२६ ॥

ब्रुवतस्तत्र मे वाक्यं धर्मार्थसहितं हितम् ।
निशम्य पार्थिवाः सर्वे नानाजनपदेश्वराः ॥ ०२७ ॥

त्वयि संप्रतिपत्स्यन्ते धर्मात्मा सत्यवागिति ।
तस्मिंश्चाधिगमिष्यन्ति यथा लोभादवर्तत ॥ ०२८ ॥

गर्हयिष्यामि चैवैनं पौरजानपदेष्वपि ।
वृद्धबालानुपादाय चातुर्वर्ण्यसमागमे ॥ ०२९ ॥

शमं चेद्याचमानस्त्वं न धर्मं तत्र लप्स्यसे ।
कुरून्विगर्हयिष्यन्ति धृतराष्ट्रं च पार्थिवाः ॥ ०३० ॥

तस्मि.ल्लोकपरित्यक्ते किं कार्यमवशिष्यते ।
हते दुर्योधने राजन्यदन्यत्क्रियतामिति ॥ ०३१ ॥

यात्वा चाहं कुरून्सर्वान्युष्मदर्थमहापयन् ।
यतिष्ये प्रशमं कर्तुं लक्षयिष्ये च चेष्टितम् ॥ ०३२ ॥

कौरवाणां प्रवृत्तिं च गत्वा युद्धाधिकारिकाम् ।
निशाम्य विनिवर्तिष्ये जयाय तव भारत ॥ ०३३ ॥

सर्वथा युद्धमेवाहमाशंसामि परैः सह ।
निमित्तानि हि सर्वाणि तथा प्रादुर्भवन्ति मे ॥ ०३४ ॥

मृगाः शकुन्ताश्च वदन्ति घोरं ; हस्त्यश्वमुख्येषु निशामुखेषु ।
घोराणि रूपाणि तथैव चाग्नि ;र्वर्णान्बहून्पुष्यति घोररूपान् ॥ ०३५ ॥

मनुष्यलोकक्षपणोऽथ घोरो ; नो चेदनुप्राप्त इहान्तकः स्यात् ॥ ०३५ ॥

शस्त्राणि पत्रं कवचान्रथांश्च ; नागान्ध्वजांश्च प्रतिपादयित्वा ।
योधाश्च सर्वे कृतनिश्रमास्ते ; भवन्तु हस्त्यश्वरथेषु यत्ताः ॥ ०३६ ॥

साङ्ग्रामिकं ते यदुपार्जनीयं ; सर्वं समग्रं कुरु तन्नरेन्द्र ॥ ०३६ ॥

दुर्योधनो न ह्यलमद्य दातुं ; जीवंस्तवैतन्नृपते कथञ्चित् ।
यत्ते पुरस्तादभवत्समृद्धं ; द्यूते हृतं पाण्डवमुख्य राज्यम् ॥ ०३७ ॥

# अध्याय ०७२

भीमसेन उवाच ॥

यथा यथैव शान्तिः स्यात्कुरूणां मधुसूदन ।
तथा तथैव भाषेथा मा स्म युद्धेन भीषयेः ॥ ००१ ॥

अमर्षी नित्यसंरब्धः श्रेयोद्वेषी महामनाः ।
नोग्रं दुर्योधनो वाच्यः साम्नैवैनं समाचरेः ॥ ००२ ॥

प्रकृत्या पापसत्त्वश्च तुल्यचेताश्च दस्युभिः ।
ऐश्वर्यमदमत्तश्च कृतवैरश्च पाण्डवैः ॥ ००३ ॥

अदीर्घदर्शी निष्ठूरी क्षेप्ता क्रूरपराक्रमः ।
दीर्घमन्युरनेयश्च पापात्मा निकृतिप्रियः ॥ ००४ ॥

म्रियेतापि न भज्येत नैव जह्यात्स्वकं मतम् ।
तादृशेन शमं कृष्ण मन्ये परमदुष्करम् ॥ ००५ ॥

सुहृदामप्यवाचीनस्त्यक्तधर्मः प्रियानृतः ।
प्रतिहन्त्येव सुहृदां वाचश्चैव मनांसि च ॥ ००६ ॥

स मन्युवशमापन्नः स्वभावं दुष्टमास्थितः ।
स्वभावात्पापमन्वेति तृणैस्तुन्न इवोरगः ॥ ००७ ॥

दुर्योधनो हि यत्सेनः सर्वथा विदितस्तव ।
यच्छीलो यत्स्वभावश्च यद्बलो यत्पराक्रमः ॥ ००८ ॥

पुरा प्रसन्नाः कुरवः सहपुत्रास्तथा वयम् ।
इन्द्रज्येष्ठा इवाभूम मोदमानाः सबान्धवाः ॥ ००९ ॥

दुर्योधनस्य क्रोधेन भारता मधुसूदन ।
धक्ष्यन्ते शिशिरापाये वनानीव हुताशनैः ॥ ०१० ॥

अष्टादशेमे राजानः प्रख्याता मधुसूदन ।
ये समुच्चिच्छिदुर्ज्ञातीन्सुहृदश्च सबान्धवान् ॥ ०११ ॥

असुराणां समृद्धानां ज्वलतामिव तेजसा ।
पर्यायकाले धर्मस्य प्राप्ते बलिरजायत ॥ ०१२ ॥

हैहयानामुदावर्तो नीपानां जनमेजयः ।
बहुलस्तालजङ्घानां कृमीणामुद्धतो वसुः ॥ ०१३ ॥

अजबिन्दुः सुवीराणां सुराष्ट्राणां कुशर्द्धिकः ।
अर्कजश्च बलीहानां चीनानां धौतमूलकः ॥ ०१४ ॥

हयग्रीवो विदेहानां वरप्रश्च महौजसाम् ।
बाहुः सुन्दरवेगानां दीप्ताक्षाणां पुरूरवाः ॥ ०१५ ॥

सहजश्चेदिमत्स्यानां प्रचेतानां बृहद्बलः ।
धारणश्चेन्द्रवत्सानां मुकुटानां विगाहनः ॥ ०१६ ॥

शमश्च नन्दिवेगानामित्येते कुलपांसनाः ।
युगान्ते कृष्ण संभूताः कुलेषु पुरुषाधमाः ॥ ०१७ ॥

अप्ययं नः कुरूणां स्याद्युगान्ते कालसंभृतः ।
दुर्योधनः कुलाङ्गारो जघन्यः पापपूरुषः ॥ ०१८ ॥

तस्मान्मृदु शनैरेनं ब्रूया धर्मार्थसंहितम् ।
कामानुबन्धबहुलं नोग्रमुग्रपराक्रमम् ॥ ०१९ ॥

अपि दुर्योधनं कृष्ण सर्वे वयमधश्चराः ।
नीचैर्भूत्वानुयास्यामो मा स्म नो भरता नशन् ॥ ०२० ॥

अप्युदासीनवृत्तिः स्याद्यथा नः कुरुभिः सह ।
वासुदेव तथा कार्यं न कुरूननयः स्पृशेत् ॥ ०२१ ॥

वाच्यः पितामहो वृद्धो ये च कृष्ण सभासदः ।
भ्रातृणामस्तु सौभ्रात्रं धार्तराष्ट्रः प्रशाम्यताम् ॥ ०२२ ॥

अहमेतद्ब्रवीम्येवं राजा चैव प्रशंसति ।
अर्जुनो नैव युद्धार्थी भूयसी हि दयार्जुने ॥ ०२३ ॥

---

# अध्याय ०७३

वैशंपायन उवाच ॥

एतच्छ्रुत्वा महाबाहुः केशवः प्रहसन्निव ।
अभूतपूर्वं भीमस्य मार्दवोपगतं वचः ॥ ००१ ॥

गिरेरिव लघुत्वं तच्छीतत्वमिव पावके ।
मत्वा रामानुजः शौरिः शार्ङ्गधन्वा वृकोदरम् ॥ ००२ ॥

संतेजयंस्तदा वाग्भिर्मातरिश्वेव पावकम् ।
उवाच भीममासीनं कृपयाभिपरिप्लुतम् ॥ ००३ ॥

त्वमन्यदा भीमसेन युद्धमेव प्रशंससि ।
वधाभिनन्दिनः क्रूरान्धार्तराष्ट्रान्मिमर्दिषुः ॥ ००४ ॥

न च स्वपिषि जागर्षि न्युब्जः शेषे परंतप ।
घोरामशान्तां रुशतीं सदा वाचं प्रभाषसे ॥ ००५ ॥

निःश्वसन्नग्निवर्णेन संतप्तः स्वेन मन्युना ।
अप्रशान्तमना भीम सधूम इव पावकः ॥ ००६ ॥

एकान्ते निष्टनञ्शेषे भारार्त इव दुर्बलः ।
अपि त्वां केचिदुन्मत्तं मन्यन्तेऽतद्विदो जनाः ॥ ००७ ॥

आरुज्य वृक्षान्निर्मूलान्गजः परिभुजन्निव ।
निघ्नन्पद्भिः क्षितिं भीम निष्टनन्परिधावसि ॥ ००८ ॥

नास्मिञ्जनेऽभिरमसे रहः क्षियसि पाण्डव ।
नान्यं निशि दिवा वापि कदाचिदभिनन्दसि ॥ ००९ ॥

अकस्मात्स्मयमानश्च रहस्यास्से रुदन्निव ।
जान्वोर्मूर्धानमाधाय चिरमास्से प्रमीलितः ॥ ०१० ॥

भ्रुकुटिं च पुनः कुर्वन्नोष्ठौ च विलिहन्निव ।
अभीक्ष्णं दृश्यसे भीम सर्वं तन्मन्युकारितम् ॥ ०११ ॥

यथा पुरस्तात्सविता दृश्यते शुक्रमुच्चरन् ।
यथा च पश्चान्निर्मुक्तो ध्रुवं पर्येति रश्मिवान् ॥ ०१२ ॥

तथा सत्यं ब्रवीम्येतन्नास्ति तस्य व्यतिक्रमः ।
हन्ताहं गदयाभ्येत्य दुर्योधनममर्षणम् ॥ ०१३ ॥

इति स्म मध्ये भ्रातॄणां सत्येनालभसे गदाम् ।
तस्य ते प्रशमे बुद्धिर्धीयतेऽद्य परंतप ॥ ०१४ ॥

अहो युद्धप्रतीपानि युद्धकाल उपस्थिते ।
पश्यसीवाप्रतीपानि किं त्वां भीर्भीम विन्दति ॥ ०१५ ॥

अहो पार्थ निमित्तानि विपरीतानि पश्यसि ।
स्वप्नान्ते जागरान्ते च तस्मात्प्रशममिच्छसि ॥ ०१६ ॥

अहो नाशंससे किञ्चित्पुंस्त्वं क्लीब इवात्मनि ।
कश्मलेनाभिपन्नोऽसि तेन ते विकृतं मनः ॥ ०१७ ॥

उद्वेपते ते हृदयं मनस्ते प्रविषीदति ।
ऊरुस्तम्भगृहीतोऽसि तस्मात्प्रशममिच्छसि ॥ ०१८ ॥

अनित्यं किल मर्त्यस्य चित्तं पार्थ चलाचलम् ।
वातवेगप्रचलिता अष्ठीला शाल्मलेरिव ॥ ०१९ ॥

तवैषा विकृता बुद्धिर्गवां वागिव मानुषी ।
मनांसि पाण्डुपुत्राणां मज्जयत्यप्लवानिव ॥ ०२० ॥

इदं मे महदाश्चर्यं पर्वतस्येव सर्पणम् ।
यदीदृशं प्रभाषेथा भीमसेनासमं वचः ॥ ०२१ ॥

स दृष्ट्वा स्वानि कर्माणि कुले जन्म च भारत ।
उत्तिष्ठस्व विषादं मा कृथा वीर स्थिरो भव ॥ ०२२ ॥

न चैतदनुरूपं ते यत्ते ग्लानिररिंदम ।
यदोजसा न लभते क्षत्रियो न तदश्नुते ॥ ०२३ ॥

# अध्याय ०७४

वैशंपायन उवाच ॥

तथोक्तो वासुदेवेन नित्यमन्युरमर्षणः ।
सदश्ववत्समाधावद्बभाषे तदनन्तरम् ॥ ००१ ॥

अन्यथा मां चिकीर्षन्तमन्यथा मन्यसेऽच्युत ।
प्रणीतभावमत्यन्तं युधि सत्यपराक्रमम् ॥ ००२ ॥

वेत्थ दाशार्ह सत्त्वं मे दीर्घकालं सहोषितः ।
उत वा मां न जानासि प्लवन्ह्रद इवाल्पवः ॥ ००३ ॥

तस्मादप्रतिरूपाभिर्वाग्भिर्मां त्वं समर्छसि ॥ ००३ ॥

कथं हि भीमसेनं मां जानन्कश्चन माधव ।
ब्रूयादप्रतिरूपाणि यथा मां वक्तुमर्हसि ॥ ००४ ॥

तस्मादिदं प्रवक्ष्यामि वचनं वृष्णिनन्दन ।
आत्मनः पौरुषं चैव बलं च न समं परैः ॥ ००५ ॥

सर्वथा नार्यकर्मैतत्प्रशंसा स्वयमात्मनः ।
अतिवादापविद्धस्तु वक्ष्यामि बलमात्मनः ॥ ००६ ॥

पश्येमे रोदसी कृष्ण ययोरासन्निमाः प्रजाः ।
अचले चाप्यनन्ते च प्रतिष्ठे सर्वमातरौ ॥ ००७ ॥

यदीमे सहसा क्रुद्धे समेयातां शिले इव ।
अहमेते निगृह्णीयां बाहुभ्यां सचराचरे ॥ ००८ ॥

पश्यैतदन्तरं बाह्वोर्महापरिघयोरिव ।
य एतत्प्राप्य मुच्येत न तं पश्यामि पूरुषम् ॥ ००९ ॥

हिमवांश्च समुद्रश्च वज्री च बलभित्स्वयम् ।
मयाभिपन्नं त्रायेरन्बलमास्थाय न त्रयः ॥ ०१० ॥

युध्येयं क्षत्रियान्सर्वान्पाण्डवेष्वाततायिनः ।
अधः पादतलेनैतानधिष्ठास्यामि भूतले ॥ ०११ ॥

न हि त्वं नाभिजानासि मम विक्रममच्युत ।
यथा मया विनिर्जित्य राजानो वशगाः कृताः ॥ ०१२ ॥

अथ चेन्मां न जानासि सूर्यस्येवोद्यतः प्रभाम् ।
विगाढे युधि संबाधे वेत्स्यसे मां जनार्दन ॥ ०१३ ॥

किं मात्यवाक्षीः परुषैर्व्रणं सूच्या इवानघ ।
यथामति ब्रवीम्येतद्विद्धि मामधिकं ततः ॥ ०१४ ॥

द्रष्टासि युधि संबाधे प्रवृत्ते वैशसेऽहनि ।
मया प्रणुन्नान्मातङ्गान्रथिनः सादिनस्तथा ॥ ०१५ ॥

तथा नरानभिक्रुद्धं निघ्नन्तं क्षत्रियर्षभान् ।
द्रष्टा मां त्वं च लोकश्च विकर्षन्तं वरान्वरान् ॥ ०१६ ॥

न मे सीदन्ति मज्जानो न ममोद्वेपते मनः ।
सर्वलोकादभिक्रुद्धान्न भयं विद्यते मम ॥ ०१७ ॥

किं तु सौहृदमेवैतत्कृपया मधुसूदन ।
सर्वांस्तितिक्षे सङ्क्लेशान्मा स्म नो भरता नशन् ॥ ०१८ ॥

# अध्याय ०७५

भगवानुवाच ॥

भावं जिज्ञासमानोऽहं प्रणयादिदमब्रुवम् ।
न चाक्षेपान्न पाण्डित्यान्न क्रोधान्न विवक्षया ॥ ००१ ॥

वेदाहं तव माहात्म्यमुत ते वेद यद्बलम् ।
उत ते वेद कर्माणि न त्वां परिभवाम्यहम् ॥ ००२ ॥

यथा चात्मनि कल्याणं संभावयसि पाण्डव ।
सहस्रगुणमप्येतत्त्वयि संभावयाम्यहम् ॥ ००३ ॥

यादृशे च कुले जन्म सर्वराजाभिपूजिते ।
बन्धुभिश्च सुहृद्भिश्च भीम त्वमसि तादृशः ॥ ००४ ॥

जिज्ञासन्तो हि धर्मस्य संदिग्धस्य वृकोदर ।
पर्यायं न व्यवस्यन्ति दैवमानुषयोर्जनाः ॥ ००५ ॥

स एव हेतुर्भूत्वा हि पुरुषस्यार्थसिद्धिषु ।
विनाशेऽपि स एवास्य संदिग्धं कर्म पौरुषम् ॥ ००६ ॥

अन्यथा परिदृष्टानि कविभिर्दोषदर्शिभिः ।
अन्यथा परिवर्तन्ते वेगा इव नभस्वतः ॥ ००७ ॥

सुमन्त्रितं सुनीतं च न्यायतश्चोपपादितम् ।
कृतं मानुष्यकं कर्म दैवेनापि विरुध्यते ॥ ००८ ॥

दैवमप्यकृतं कर्म पौरुषेण विहन्यते ।
शीतमुष्णं तथा वर्षं क्षुत्पिपासे च भारत ॥ ००९ ॥

यदन्यद्दिष्टभावस्य पुरुषस्य स्वयङ्कृतम् ।
तस्मादनवरोधश्च विद्यते तत्र लक्षणम् ॥ ०१० ॥

लोकस्य नान्यतो वृत्तिः पाण्डवान्यत्र कर्मणः ।
एवंबुद्धिः प्रवर्तेत फलं स्यादुभयान्वयात् ॥ ०११ ॥

य एवं कृतबुद्धिः सन्कर्मस्वेव प्रवर्तते ।
नासिद्धौ व्यथते तस्य न सिद्धौ हर्षमश्नुते ॥ ०१२ ॥

तत्रेयमर्थमात्रा मे भीमसेन विवक्षिता ।
नैकान्तसिद्धिर्मन्तव्या कुरुभिः सह संयुगे ॥ ०१३ ॥

नातिप्रणीतरश्मिः स्यात्तथा भवति पर्यये ।
विषादमर्छेद्ग्लानिं वा एतदर्थं ब्रवीमि ते ॥ ०१४ ॥

श्वोभूते धृतराष्ट्रस्य समीपं प्राप्य पाण्डव ।
यतिष्ये प्रशमं कर्तुं युष्मदर्थमहापयन् ॥ ०१५ ॥

शमं चेत्ते करिष्यन्ति ततोऽनन्तं यशो मम ।
भवतां च कृतः कामस्तेषां च श्रेय उत्तमम् ॥ ०१६ ॥

ते चेदभिनिवेक्ष्यन्ति नाभ्युपैष्यन्ति मे वचः ।
कुरवो युद्धमेवात्र रौद्रं कर्म भविष्यति ॥ ०१७ ॥

अस्मिन्युद्धे भीमसेन त्वयि भारः समाहितः ।
धूरर्जुनेन धार्या स्याद्वोढव्य इतरो जनः ॥ ०१८ ॥

अहं हि यन्ता बीभत्सोर्भविता संयुगे सति ।
धनञ्जयस्यैष कामो न हि युद्धं न कामये ॥ ०१९ ॥

तस्मादाशङ्कमानोऽहं वृकोदर मतिं तव ।
तुदन्नक्लीबया वाचा तेजस्ते समदीपयम् ॥ ०२० ॥

---

# अध्याय ०७६

अर्जुन उवाच ॥

उक्तं युधिष्ठिरेणैव यावद्वाच्यं जनार्दन ।
तव वाक्यं तु मे श्रुत्वा प्रतिभाति परंतप ॥ ००१ ॥

नैव प्रशममत्र त्वं मन्यसे सुकरं प्रभो ।
लोभाद्वा धृतराष्ट्रस्य दैन्याद्वा समुपस्थितात् ॥ ००२ ॥

अफलं मन्यसे चापि पुरुषस्य पराक्रमम् ।
न चान्तरेण कर्माणि पौरुषेण फलोदयः ॥ ००३ ॥

तदिदं भाषितं वाक्यं तथा च न तथैव च ।
न चैतदेवं द्रष्टव्यमसाध्यमिति किञ्चन ॥ ००४ ॥

किं चैतन्मन्यसे कृच्छ्रमस्माकं पापमादितः ।
कुर्वन्ति तेषां कर्माणि येषां नास्ति फलोदयः ॥ ००५ ॥

संपाद्यमानं सम्यक्क स्यात्कर्म सफलं प्रभो ।
स तथा कृष्ण वर्तस्व यथा शर्म भवेत्परैः ॥ ००६ ॥

पाण्डवानां कुरूणां च भवान्परमकः सुहृत् ।
सुराणामसुराणां च यथा वीर प्रजापतिः ॥ ००७ ॥

कुरूणां पाण्डवानां च प्रतिपत्स्व निरामयम् ।
अस्मद्धितमनुष्ठातुं न मन्ये तव दुष्करम् ॥ ००८ ॥

एवं चेत्कार्यतामेति कार्यं तव जनार्दन ।
गमनादेवमेव त्वं करिष्यसि न संशयः ॥ ००९ ॥

चिकीर्षितमथान्यत्ते तस्मिन्वीर दुरात्मनि ।
भविष्यति तथा सर्वं यथा तव चिकीर्षितम् ॥ ०१० ॥

शर्म तैः सह वा नोऽस्तु तव वा यच्चिकीर्षितम् ।
विचार्यमाणो यः कामस्तव कृष्ण स नो गुरुः ॥ ०११ ॥

न स नार्हति दुष्टात्मा वधं ससुतबान्धवः ।
येन धर्मसुते दृष्ट्वा न सा श्रीरुपमर्षिता ॥ ०१२ ॥

यच्चाप्यपश्यतोपायं धर्मिष्ठं मधुसूदन ।
उपायेन नृशंसेन हृता दुर्द्यूतदेविना ॥ ०१३ ॥

कथं हि पुरुषो जातः क्षत्रियेषु धनुर्धरः ।
समाहूतो निवर्तेत प्राणत्यागेऽप्युपस्थिते ॥ ०१४ ॥

अधर्मेण जितान्दृष्ट्वा वने प्रव्रजितांस्तथा ।
वध्यतां मम वार्ष्णेय निर्गतोऽसौ सुयोधनः ॥ ०१५ ॥

न चैतदद्भुतं कृष्ण मित्रार्थे यच्चिकीर्षसि ।
क्रिया कथं नु मुख्या स्यान्मृदुना वेतरेण वा ॥ ०१६ ॥

अथ वा मन्यसे ज्यायान्वधस्तेषामनन्तरम् ।

तदेव क्रियतामाशु न विचार्यमतस्त्वया ॥ ०१७ ॥

जानासि हि यथा तेन द्रौपदी पापबुद्धिना ।
परिक्लिष्टा सभामध्ये तच्च तस्यापि मर्षितम् ॥ ०१८ ॥

स नाम सम्यग्वर्तेत पाण्डवेष्विति माधव ।
न मे सञ्जायते बुद्धिर्बीजमुप्तमिवोषरे ॥ ०१९ ॥

तस्माद्यन्मन्यसे युक्तं पाण्डवानां च यद्धितम् ।
तदाशु कुरु वार्ष्णेय यन्नः कार्यमनन्तरम् ॥ ०२० ॥

---

# अध्याय ०७७

भगवानुवाच ॥

एवमेतन्महाबाहो यथा वदसि पाण्डव ।
सर्वं त्विदं समायत्तं बीभत्सो कर्मणोर्द्वयोः ॥ ००१ ॥

क्षेत्रं हि रसवच्छुद्धं कर्षकेणोपपादितम् ।
ऋते वर्षं न कौन्तेय जातु निर्वर्तयेत्फलम् ॥ ००२ ॥

तत्र वै पौरुषं ब्रूयुरासेकं यत्नकारितम् ।
तत्र चापि ध्रुवं पश्येच्छोषणं दैवकारितम् ॥ ००३ ॥

तदिदं निश्चितं बुद्ध्या पूर्वैरपि महात्मभिः ।
दैवे च मानुषे चैव संयुक्तं लोककारणम् ॥ ००४ ॥

अहं हि तत्करिष्यामि परं पुरुषकारतः ।
दैवं तु न मया शक्यं कर्म कर्तुं कथञ्चन ॥ ००५ ॥

स हि धर्मं च सत्यं च त्यक्त्वा चरति दुर्मतिः ।
न हि संतप्यते तेन तथारूपेण कर्मणा ॥ ००६ ॥

तां चापि बुद्धिं पापिष्ठां वर्धयन्त्यस्य मन्त्रिणः ।
शकुनिः सूतपुत्रश्च भ्राता दुःशासनस्तथा ॥ ००७ ॥

स हि त्यागेन राज्यस्य न शमं समुपेष्यति ।
अन्तरेण वधात्पार्थ सानुबन्धः सुयोधनः ॥ ००८ ॥

न चापि प्रणिपातेन त्यक्तुमिच्छति धर्मराट् ।
याच्यमानस्तु राज्यं स न प्रदास्यति दुर्मतिः ॥ ००९ ॥

न तु मन्ये स तद्वाच्यो यद्युधिष्ठिरशासनम् ।
उक्तं प्रयोजनं तत्र धर्मराजेन भारत ॥ ०१० ॥

तथा पापस्तु तत्सर्वं न करिष्यति कौरवः ।
तस्मिंश्चाक्रियमाणेऽसौ लोकवध्यो भविष्यति ॥ ०११ ॥

मम चापि स वध्यो वै जगतश्चापि भारत ।
येन कौमारके यूयं सर्वे विप्रकृतास्तथा ॥ ०१२ ॥

विप्रलुप्तं च वो राज्यं नृशंसेन दुरात्मना ।
न चोपशाम्यते पापः श्रियं दृष्ट्वा युधिष्ठिरे ॥ ०१३ ॥

असकृच्चाप्यहं तेन त्वत्कृते पार्थ भेदितः ।
न मया तद्गृहीतं च पापं तस्य चिकीर्षितम् ॥ ०१४ ॥

जानासि हि महाबाहो त्वमप्यस्य परं मतम् ।

प्रियं चिकीर्षमाणं च धर्मराजस्य मामपि ॥ ०१५ ॥

स जानंस्तस्य चात्मानं मम चैव परं मतम् ।
अजानन्निव चाकस्मादर्जुनाद्याभिशङ्कसे ॥ ०१६ ॥

यच्चापि परमं दिव्यं तच्चाप्यवगतं त्वया ।
विधानविहितं पार्थ कथं शर्म भवेत्परैः ॥ ०१७ ॥

यत्तु वाचा मया शक्यं कर्मणा चापि पाण्डव ।
करिष्ये तदहं पार्थ न त्वाशंसे शमं परैः ॥ ०१८ ॥

कथं गोहरणे ब्रूयादिच्छञ्शर्म तथाविधम् ।
याच्यमानोऽपि भीष्मेण संवत्सरगतेऽध्वनि ॥ ०१९ ॥

तदैव ते पराभूता यदा सङ्कल्पितास्त्वया ।
लवशः क्षणशश्चापि न च तुष्टः सुयोधनः ॥ ०२० ॥

सर्वथा तु मया कार्यं धर्मराजस्य शासनम् ।
विभाव्यं तस्य भूयश्च कर्म पापं दुरात्मनः ॥ ०२१ ॥

---

# अध्याय ०७८

नकुल उवाच ॥

उक्तं बहुविधं वाक्यं धर्मराजेन माधव ।
धर्मज्ञेन वदान्येन धर्मयुक्तं च तत्त्वतः ॥ ००१ ॥

मतमाज्ञाय राज्ञश्च भीमसेनेन माधव ।

संशमो बाहुवीर्यं च ख्यापितं माधवात्मनः ॥ ००२ ॥

तथैव फल्गुनेनापि यदुक्तं तत्त्वया श्रुतम् ।
आत्मनश्च मतं वीर कथितं भवतासकृत् ॥ ००३ ॥

सर्वमेतदतिक्रम्य श्रुत्वा परमतं भवान् ।
यत्प्राप्तकालं मन्येथास्तत्कुर्याः पुरुषोत्तम ॥ ००४ ॥

तस्मिंस्तस्मिन्निमित्ते हि मतं भवति केशव ।
प्राप्तकालं मनुष्येण स्वयं कार्यमरिंदम ॥ ००५ ॥

अन्यथा चिन्तितो ह्यर्थः पुनर्भवति सोऽन्यथा ।
अनित्यमतयो लोके नराः पुरुषसत्तम ॥ ००६ ॥

अन्यथा बुद्धयो ह्यासन्नस्मासु वनवासिषु ।
अदृश्येष्वन्यथा कृष्ण दृश्येषु पुनरन्यथा ॥ ००७ ॥

अस्माकमपि वार्ष्णेय वने विचरतां तदा ।
न तथा प्रणयो राज्ये यथा संप्रति वर्तते ॥ ००८ ॥

निवृत्तवनवासान्नः श्रुत्वा वीर समागताः ।
अक्षौहिण्यो हि सप्तेमास्त्वत्प्रसादाज्जनार्दन ॥ ००९ ॥

इमान्हि पुरुषव्याघ्रानचिन्त्यबलपौरुषान् ।
आत्तशस्त्रान्रणे दृष्ट्वा न व्यथेदिह कः पुमान् ॥ ०१० ॥

स भवान्कुरुमध्ये तं सान्त्वपूर्वं भयान्वितम् ।
ब्रूयाद्वाक्यं यथा मन्दो न व्यथेत सुयोधनः ॥ ०११ ॥

युधिष्ठिरं भीमसेनं बीभत्सुं चापराजितम् ।
सहदेवं च मां चैव त्वां च रामं च केशव ॥ ०१२ ॥

सात्यकिं च महावीर्यं विराटं च सहात्मजम् ।
द्रुपदं च सहामात्यं धृष्टद्युम्नं च पार्षतम्  ॥ ०१३  ॥

काशिराजं च विक्रान्तं धृष्टकेतुं च चेदिपम् ।
मांसशोणितभृन्मर्त्यः प्रतियुध्येत को युधि  ॥ ०१४  ॥

स भवान्गमनादेव साधयिष्यत्यसंशयम् ।
इष्टमर्थं महाबाहो धर्मराजस्य केवलम्  ॥ ०१५  ॥

विदुरश्चैव भीष्मश्च द्रोणश्च सहबाह्लिकः ।
श्रेयः समर्था विज्ञातुमुच्यमानं त्वयानघ  ॥ ०१६  ॥

ते चैनमनुनेष्यन्ति धृतराष्ट्रं जनाधिपम् ।
तं च पापसमाचारं सहामात्यं सुयोधनम्  ॥ ०१७  ॥

श्रोता चार्थस्य विदुरस्त्वं च वक्ता जनार्दन ।
कमिवार्थं विवर्तन्तं स्थापयेतां न वर्त्मनि  ॥ ०१८  ॥

---

# अध्याय ०७९

सहदेव उवाच  ॥

यदेतत्कथितं राज्ञा धर्म एष सनातनः ।
यथा तु युद्धमेव स्यात्तथा कार्यमरिंदम  ॥ ००१  ॥

यदि प्रशममिच्छेयुः कुरवः पाण्डवैः सह ।
तथापि युद्धं दाशार्ह योजयेथाः सहैव तैः  ॥ ००२  ॥

कथं नु दृष्ट्वा पाञ्चालीं तथा क्लिष्टां सभागताम् ।
अवधेन प्रशाम्येत मम मन्युः सुयोधने ॥ ००३ ॥

यदि भीमार्जुनौ कृष्ण धर्मराजश्च धार्मिकः ।
धर्ममुत्सृज्य तेनाहं योद्धुमिच्छामि संयुगे ॥ ००४ ॥

सात्यकिरुवाच ॥

सत्यमाह महाबाहो सहदेवो महामतिः ।
दुर्योधनवधे शान्तिस्तस्य कोपस्य मे भवेत् ॥ ००५ ॥

जानासि हि यथा दृष्ट्वा चीराजिनधरान्वने ।
तवापि मन्युरुद्भूतो दुःखितान्प्रेक्ष्य पाण्डवान् ॥ ००६ ॥

तस्मान्माद्रीसुतः शूरो यदाह पुरुषर्षभः ।
वचनं सर्वयोधानां तन्मतं पुरुषोत्तम ॥ ००७ ॥

वैशंपायन उवाच ॥

एवं वदति वाक्यं तु युयुधाने महामतौ ।
सुभीमः सिंहनादोऽभूद्योधानां तत्र सर्वशः ॥ ००८ ॥

सर्वे हि सर्वतो वीरास्तद्वचः प्रत्यपूजयन् ।
साधु साध्विति शैनेयं हर्षयन्तो युयुत्सवः ॥ ००९ ॥

# अध्याय ०८०

वैशंपायन उवाच ॥

राज्ञस्तु वचनं श्रुत्वा धर्मार्थसहितं हितम् ।
कृष्णा दाशार्हमासीनमब्रवीच्छोककर्षिता ॥ ००१ ॥

सुता द्रुपदराजस्य स्वसितायतमूर्धजा ।
संपूज्य सहदेवं च सात्यकिं च महारथम् ॥ ००२ ॥

भीमसेनं च संशान्तं दृष्ट्वा परमदुर्मनाः ।
अश्रुपूर्णेक्षणा वाक्यमुवाचेदं मनस्विनी ॥ ००३ ॥

विदितं ते महाबाहो धर्मज्ञ मधुसूदन ।
यथा निकृतिमास्थाय भ्रंशिताः पाण्डवाः सुखात् ॥ ००४ ॥

धृतराष्ट्रस्य पुत्रेण सामात्येन जनार्दन ।
यथा च सञ्जयो राज्ञा मन्त्रं रहसि श्रावितः ॥ ००५ ॥

युधिष्ठिरेण दाशार्ह तच्चापि विदितं तव ।
यथोक्तः सञ्जयश्चैव तच्च सर्वं श्रुतं त्वया ॥ ००६ ॥

पञ्च नस्तात दीयन्तां ग्रामा इति महाद्युते ।
कुशस्थलं वृकस्थलमासन्दी वारणावतम् ॥ ००७ ॥

अवसानं महाबाहो किञ्चिदेव तु पञ्चमम् ।
इति दुर्योधनो वाच्यः सुहृदश्चास्य केशव ॥ ००८ ॥

तच्चापि नाकरोद्वाक्यं श्रुत्वा कृष्ण सुयोधनः ।
युधिष्ठिरस्य दाशार्ह ह्रीमतः संधिमिच्छतः ॥ ००९ ॥

अप्रदानेन राज्यस्य यदि कृष्ण सुयोधनः ।
संधिमिच्छेन्न कर्तव्यस्तत्र गत्वा कथञ्चन ॥ ०१० ॥

शक्ष्यन्ति हि महाबाहो पाण्डवाः सृञ्जयैः सह ।
धार्तराष्ट्रबलं घोरं क्रुद्धं प्रतिसमासितुम् ॥ ०११ ॥

न हि साम्ना न दानेन शक्योऽर्थस्तेषु कश्चन ।
तस्मात्तेषु न कर्तव्या कृपा ते मधुसूदन ॥ ०१२ ॥

साम्ना दानेन वा कृष्ण ये न शाम्यन्ति शत्रवः ।
मोक्तव्यस्तेषु दण्डः स्याज्जीवितं परिरक्षता ॥ ०१३ ॥

तस्मात्तेषु महादण्डः क्षेप्तव्यः क्षिप्रमच्युत ।
त्वया चैव महाबाहो पाण्डवैः सह सृञ्जयैः ॥ ०१४ ॥

एतत्समर्थं पार्थानां तव चैव यशस्करम् ।
क्रियमाणं भवेत्कृष्ण क्षत्रस्य च सुखावहम् ॥ ०१५ ॥

क्षत्रियेण हि हन्तव्यः क्षत्रियो लोभमास्थितः ।
अक्षत्रियो वा दाशार्ह स्वधर्ममनुतिष्ठता ॥ ०१६ ॥

अन्यत्र ब्राह्मणात्तात सर्वपापेष्ववस्थितात् ।
गुरुर्हि सर्ववर्णानां ब्राह्मणः प्रसृताग्रभुक् ॥ ०१७ ॥

यथावध्ये भवेद्दोषो वध्यमाने जनार्दन ।
स वध्यस्यावधे दृष्ट इति धर्मविदो विदुः ॥ ०१८ ॥

यथा त्वां न स्पृशेदेष दोषः कृष्ण तथा कुरु ।
पाण्डवैः सह दाशार्ह सृञ्जयैश्च ससैनिकैः ॥ ०१९ ॥

पुनरुक्तं च वक्ष्यामि विश्रम्भेण जनार्दन ।

का नु सीमन्तिनी मादृक्पृथिव्यामस्ति केशव ॥ ०२० ॥

सुता द्रुपदराजस्य वेदिमध्यात्समुत्थिता ।
धृष्टद्युम्नस्य भगिनी तव कृष्ण प्रिया सखी ॥ ०२१ ॥

आजमीढकुलं प्राप्ता स्नुषा पाण्डोर्महात्मनः ।
महिषी पाण्डुपुत्राणां पञ्चेन्द्रसमवर्चसाम् ॥ ०२२ ॥

सुता मे पञ्चभिर्वीरैः पञ्च जाता महारथाः ।
अभिमन्युर्यथा कृष्ण तथा ते तव धर्मतः ॥ ०२३ ॥

साहं केशग्रहं प्राप्ता परिक्लिष्टा सभां गता ।
पश्यतां पाण्डुपुत्राणां त्वयि जीवति केशव ॥ ०२४ ॥

जीवत्सु कौरवेयेषु पाञ्चालेष्वथ वृष्णिषु ।
दासीभूतास्मि पापानां सभामध्ये व्यवस्थिता ॥ ०२५ ॥

निरामर्षेष्वचेष्टेषु प्रेक्षमाणेषु पाण्डुषु ।
त्राहि मामिति गोविन्द मनसा काङ्क्षितोऽसि मे ॥ ०२६ ॥

यत्र मां भगवान्राजा श्वशुरो वाक्यमब्रवीत् ।
वरं वृणीष्व पाञ्चालि वरार्हासि मतासि मे ॥ ०२७ ॥

अदासाः पाण्डवाः सन्तु सरथाः सायुधा इति ।
मयोक्ते यत्र निर्मुक्ता वनवासाय केशव ॥ ०२८ ॥

एवंविधानां दुःखानामभिज्ञोऽसि जनार्दन ।
त्राहि मां पुण्डरीकाक्ष सभर्तृज्ञातिबान्धवाम् ॥ ०२९ ॥

नन्वहं कृष्ण भीष्मस्य धृतराष्ट्रस्य चोभयोः ।
स्नुषा भवामि धर्मेण साहं दासीकृताभवम् ॥ ०३० ॥

धिग्बलं भीमसेनस्य धिक्पार्थस्य धनुष्मताम् ।
यत्र दुर्योधनः कृष्ण मुहूर्तमपि जीवति ॥ ०३१ ॥

यदि तेऽहमनुग्राह्या यदि तेऽस्ति कृपा मयि ।
धार्तराष्ट्रेषु वै कोपः सर्वः कृष्ण विधीयताम् ॥ ०३२ ॥

इत्युक्त्वा मृदुसंहारं वृजिनाग्रं सुदर्शनम् ।
सुनीलमसितापाङ्गी पुण्यगन्धाधिवासितम् ॥ ०३३ ॥

सर्वलक्षणसंपन्नं महाभुजगवर्चसम् ।
केशपक्षं वरारोहा गृह्य सव्येन पाणिना ॥ ०३४ ॥

पद्माक्षी पुण्डरीकाक्षमुपेत्य गजगामिनी ।
अश्रुपूर्णेक्षणा कृष्णा कृष्णं वचनमब्रवीत् ॥ ०३५ ॥

अयं ते पुण्डरीकाक्ष दुःशासनकरोद्धृतः ।
स्मर्तव्यः सर्वकालेषु परेषां संधिमिच्छता ॥ ०३६ ॥

यदि भीमार्जुनौ कृष्ण कृपणौ संधिकामुकौ ।
पिता मे योत्स्यते वृद्धः सह पुत्रैर्महारथैः ॥ ०३७ ॥

पञ्च चैव महावीर्याः पुत्रा मे मधुसूदन ।
अभिमन्युं पुरस्कृत्य योत्स्यन्ति कुरुभिः सह ॥ ०३८ ॥

दुःशासनभुजं श्यामं संछिन्नं पांसुगुण्ठितम् ।
यद्यहं तं न पश्यामि का शान्तिर्हृदयस्य मे ॥ ०३९ ॥

त्रयोदश हि वर्षाणि प्रतीक्षन्त्या गतानि मे ।
निधाय हृदये मन्युं प्रदीप्तमिव पावकम् ॥ ०४० ॥

विदीर्यते मे हृदयं भीमवाक्शल्यपीडितम् ।
योऽयमद्य महाबाहुर्धर्मं समनुपश्यति ॥ ०४१ ॥

इत्युक्त्वा बाष्पसन्नेन कण्ठेनायतलोचना ।
रुरोद कृष्णा सोत्कम्पं सस्वरं बाष्पगद्गदम् ॥ ०४२ ॥

स्तनौ पीनायतश्रोणी सहितावभिवर्षती ।
द्रवीभूतमिवात्युष्णमुत्सृजद्वारि नेत्रजम् ॥ ०४३ ॥

तामुवाच महाबाहुः केशवः परिसान्त्वयन् ।
अचिराद्द्रक्ष्यसे कृष्णे रुदतीर्भरतस्त्रियः ॥ ०४४ ॥

एवं ता भीरु रोत्स्यन्ति निहतज्ञातिबान्धवाः ।
हतमित्रा हतबला येषां क्रुद्धासि भामिनि ॥ ०४५ ॥

अहं च तत्करिष्यामि भीमार्जुनयमैः सह ।
युधिष्ठिरनियोगेन दैवाच्च विधिनिर्मितात् ॥ ०४६ ॥

धार्तराष्ट्राः कालपक्वा न चेच्छृण्वन्ति मे वचः ।
शेष्यन्ते निहता भूमौ श्वशृगालादनीकृताः ॥ ०४७ ॥

चलेद्धि हिमवाञ्शैलो मेदिनी शतधा भवेत् ।
द्यौः पतेच्च सनक्षत्रा न मे मोघं वचो भवेत् ॥ ०४८ ॥

सत्यं ते प्रतिजानामि कृष्णे बाष्पो निगृह्यताम् ।
हतामित्राञ्श्रिया युक्तानचिराद्द्रक्ष्यसे पतीन् ॥ ०४९ ॥

# अध्याय ०८१

अर्जुन उवाच ॥

कुरूणामद्य सर्वेषां भवान्सुहृदनुत्तमः ।
संबन्धी दयितो नित्यमुभयोः पक्षयोरपि ॥ ००१ ॥

पाण्डवैर्धार्तराष्ट्राणां प्रतिपाद्यमनामयम् ।
समर्थः प्रशमं चैषां कर्तुं त्वमसि केशव ॥ ००२ ॥

त्वमितः पुण्डरीकाक्ष सुयोधनममर्षणम् ।
शान्त्यर्थं भारतं ब्रूया यत्तद्वाच्यममित्रहन् ॥ ००३ ॥

त्वया धर्मार्थयुक्तं चेदुक्तं शिवमनामयम् ।
हितं नादास्यते बालो दिष्टस्य वशमेष्यति ॥ ००४ ॥

भगवानुवाच ॥

धर्म्यमस्मद्धितं चैव कुरूणां यदनामयम् ।
एष यास्यामि राजानं धृतराष्ट्रमभीप्सया ॥ ००५ ॥

वैशंपायन उवाच ॥

ततो व्यपेते तमसि सूर्ये विमल उद्गते ।
मैत्रे मुहूर्ते संप्राप्ते मृद्वर्चिषि दिवाकरे ॥ ००६ ॥

कौमुदे मासि रेवत्यां शरदन्ते हिमागमे ।
स्फीतसस्यसुखे काले कल्यः सत्त्ववतां वरः ॥ ००७ ॥

मङ्गल्याः पुण्यनिर्घोषा वाचः शृण्वंश्च सूनृताः ।
ब्राह्मणानां प्रतीतानामृषीणामिव वासवः ॥ ००८ ॥

कृत्वा पौर्वाह्णिकं कृत्यं स्नातः शुचिरलङ्कृतः ।
उपतस्थे विवस्वन्तं पावकं च जनार्दनः ॥ ००९ ॥

ऋषभं पृष्ठ आलभ्य ब्राह्मणानभिवाद्य च ।
अग्निं प्रदक्षिणं कृत्वा पश्यन्कल्याणमग्रतः ॥ ०१० ॥

तत्प्रतिज्ञाय वचनं पाण्डवस्य जनार्दनः ।
शिनेर्नप्तारमासीनमभ्यभाषत सात्यकिम् ॥ ०११ ॥

रथ आरोप्यतां शङ्खश्चक्रं च गदया सह ।
उपासङ्गाश्च शक्त्यश्च सर्वप्रहरणानि च ॥ ०१२ ॥

दुर्योधनो हि दुष्टात्मा कर्णश्च सहसौबलः ।
न च शत्रुरवज्ञेयः प्राकृतोऽपि बलीयसा ॥ ०१३ ॥

ततस्तन्मतमाज्ञाय केशवस्य पुरःसराः ।
प्रसस्रुर्योजयिष्यन्तो रथं चक्रगदाभृतः ॥ ०१४ ॥

तं दीप्तमिव कालाग्निमाकाशगमिवाध्वगम् ।
चन्द्रसूर्यप्रकाशाभ्यां चक्राभ्यां समलङ्कृतम् ॥ ०१५ ॥

अर्धचन्द्रैश्च चन्द्रैश्च मत्स्यैः समृगपक्षिभिः ।
पुष्पैश्च विविधैश्चित्रं मणिरत्नैश्च सर्वशः ॥ ०१६ ॥

तरुणादित्यसङ्काशं बृहन्तं चारुदर्शनम् ।
मणिहेमविचित्राङ्गं सुध्वजं सुपताकिनम् ॥ ०१७ ॥

सूपस्करमनाधृष्यं वैयाघ्रपरिवारणम् ।
यशोघ्नं प्रत्यमित्राणां यदूनां नन्दिवर्धनम् ॥ ०१८ ॥

वाजिभिः सैन्यसुग्रीवमेघपुष्पबलाहकैः ।
स्नातैः संपादयां चक्रुः संपन्नैः सर्वसंपदा ॥ ०१९ ॥

महिमानं तु कृष्णस्य भूय एवाभिवर्धयन् ।
सुघोषः पतगेन्द्रेण ध्वजेन युयुजे रथः ॥ ०२० ॥

तं मेरुशिखरप्रख्यं मेघदुन्दुभिनिस्वनम् ।
आरुरोह रथं शौरिर्विमानमिव पुण्यकृत् ॥ ०२१ ॥

ततः सात्यकिमारोप्य प्रययौ पुरुषोत्तमः ।
पृथिवीं चान्तरिक्षं च रथघोषेण नादयन् ॥ ०२२ ॥

व्यपोढाभ्रघनः कालः क्षणेन समपद्यत ।
शिवश्चानुववौ वायुः प्रशान्तमभवद्रजः ॥ ०२३ ॥

प्रदक्षिणानुलोमाश्च मङ्गल्या मृगपक्षिणः ।
प्रयाणे वासुदेवस्य बभूवुरनुयायिनः ॥ ०२४ ॥

मङ्गल्यार्थपदैः शब्दैरन्ववर्तन्त सर्वशः ।
सारसाः शतपत्राश्च हंसाश्च मधुसूदनम् ॥ ०२५ ॥

मन्त्राहुतिमहाहोमैर्हूयमानश्च पावकः ।
प्रदक्षिणशिखो भूत्वा विधूमः समपद्यत ॥ ०२६ ॥

वसिष्ठो वामदेवश्च भूरिद्युम्नो गयः क्रथः ।
शुक्रनारदवाल्मीका मरुतः कुशिको भृगुः ॥ ०२७ ॥

ब्रह्मदेवर्षयश्चैव कृष्णं यदुसुखावहम् ।
प्रदक्षिणमवर्तन्त सहिता वासवानुजम् ॥ ०२८ ॥

एवमेतैर्महाभागैर्महर्षिगणसाधुभिः ।

पूजितः प्रययौ कृष्णः कुरूणां सदनं प्रति ॥ ०२९ ॥

तं प्रयान्तमनुप्रायात्कुन्तीपुत्रो युधिष्ठिरः ।
भीमसेनार्जुनौ चोभौ माद्रीपुत्रौ च पाण्डवौ ॥ ०३० ॥

चेकितानश्च विक्रान्तो धृष्टकेतुश्च चेदिपः ।
द्रुपदः काशिराजश्च शिखण्डी च महारथः ॥ ०३१ ॥

धृष्टद्युम्नः सपुत्रश्च विराटः केकयैः सह ।
संसाधनार्थं प्रययुः क्षत्रियाः क्षत्रियर्षभम् ॥ ०३२ ॥

ततोऽनुव्रज्य गोविन्दं धर्मराजो युधिष्ठिरः ।
राज्ञां सकाशे द्युतिमानुवाचेदं वचस्तदा ॥ ०३३ ॥

यो नैव कामान्न भयान्न लोभान्नार्थकारणात् ।
अन्यायमनुवर्तेत स्थिरबुद्धिरलोलुपः ॥ ०३४ ॥

धर्मज्ञो धृतिमान्प्राज्ञः सर्वभूतेषु केशवः ।
ईश्वरः सर्वभूतानां देवदेवः प्रतापवान् ॥ ०३५ ॥

तं सर्वगुणसंपन्नं श्रीवत्सकृतलक्षणम् ।
संपरिष्वज्य कौन्तेयः संदेष्टुमुपचक्रमे ॥ ०३६ ॥

या सा बाल्यात्प्रभृत्यस्मान्पर्यवर्धयताबला ।
उपवासतपःशीला सदा स्वस्त्ययने रता ॥ ०३७ ॥

देवतातिथिपूजासु गुरुशुश्रूषणे रता ।
वत्सला प्रियपुत्रा च प्रियास्माकं जनार्दन ॥ ०३८ ॥

सुयोधनभयाद्या नोऽत्रायतामित्रकर्शन ।
महतो मृत्युसंबाधादुत्तरन्नौरिवार्णवात् ॥ ०३९ ॥

अस्मत्कृते च सततं यया दुःखानि माधव ।
अनुभूतान्यदुःखार्हा तां स्म पृच्छेरनामयम् ॥ ०४० ॥

भृशमाश्वासयेश्चैनां पुत्रशोकपरिप्लुताम् ।
अभिवाद्य स्वजेथाश्च पाण्डवान्परिकीर्तयन् ॥ ०४१ ॥

ऊढात्प्रभृति दुःखानि श्वशुराणामरिंदम ।
निकारानतदर्हा च पश्यन्ती दुःखमश्नुते ॥ ०४२ ॥

अपि जातु स कालः स्यात्कृष्ण दुःखविपर्ययः ।
यदहं मातरं क्लिष्टां सुखे दध्यामरिंदम ॥ ०४३ ॥

प्रव्रजन्तोऽन्वधावत्सा कृपणा पुत्रगृद्धिनी ।
रुदतीमपहायैनामुपगच्छाम यद्वनम् ॥ ०४४ ॥

न नूनं म्रियते दुःखैः सा चेज्जीवति केशव ।
तथा पुत्राधिभिर्गाढमार्ता ह्यानर्तसत्कृता ॥ ०४५ ॥

अभिवाद्या तु सा कृष्ण त्वया मद्वचनाद्विभो ।
धृतराष्ट्रश्च कौरव्यो राजानश्च वयोऽधिकाः ॥ ०४६ ॥

भीष्मं द्रोणं कृपं चैव महाराजं च बाह्लिकम् ।
द्रौणिं च सोमदत्तं च सर्वांश्च भरतान्पृथक् ॥ ०४७ ॥

विदुरं च महाप्राज्ञं कुरूणां मन्त्रधारिणम् ।
अगाधबुद्धिं धर्मज्ञं स्वजेथा मधुसूदन ॥ ०४८ ॥

इत्युक्त्वा केशवं तत्र राजमध्ये युधिष्ठिरः ।
अनुज्ञातो निववृते कृष्णं कृत्वा प्रदक्षिणम् ॥ ०४९ ॥

व्रजन्नेव तु बीभत्सुः सखायं पुरुषर्षभम् ।
अब्रवीत्परवीरघ्नं दाशार्हमपराजितम् ॥ ०५० ॥

यदस्माकं विभो वृत्तं पुरा वै मन्त्रनिश्चये ।
अर्धराज्यस्य गोविन्द विदितं सर्वराजसु ॥ ०५१ ॥

तच्चेद्दद्यादसङ्गेन सत्कृत्यानवमन्य च ।
प्रियं मे स्यान्महाबाहो मुच्येरन्महतो भयात् ॥ ०५२ ॥

अतश्चेदन्यथा कर्ता धार्तराष्ट्रोऽनुपायवित् ।
अन्तं नूनं करिष्यामि क्षत्रियाणां जनार्दन ॥ ०५३ ॥

एवमुक्ते पाण्डवेन पर्यहृष्यद्वृकोदरः ।
मुहुर्मुहुः क्रोधवशात्प्रावेपत च पाण्डवः ॥ ०५४ ॥

वेपमानश्च कौन्तेयः प्राक्रोशन्महतो रवान् ।
धनञ्जयवचः श्रुत्वा हर्षोत्सिक्तमना भृशम् ॥ ०५५ ॥

तस्य तं निनदं श्रुत्वा संप्रावेपन्त धन्विनः ।
वाहनानि च सर्वाणि शकृन्मूत्रं प्रसुस्रुवुः ॥ ०५६ ॥

इत्युक्त्वा केशवं तत्र तथा चोक्त्वा विनिश्चयम् ।
अनुज्ञातो निववृते परिष्वज्य जनार्दनम् ॥ ०५७ ॥

तेषु राजसु सर्वेषु निवृत्तेषु जनार्दनः ।
तूर्णमभ्यपतद्धृष्टः सैन्यसुग्रीववाहनः ॥ ०५८ ॥

ते हया वासुदेवस्य दारुकेण प्रचोदिताः ।
पन्थानमाचेमुरिव ग्रसमाना इवाम्बरम् ॥ ०५९ ॥

अथापश्यन्महाबाहुरृषीनध्वनि केशवः ।

ब्राह्म्या श्रिया दीप्यमानान्स्थितानुभयतः पथि ॥ ०६० ॥

सोऽवतीर्य रथात्तूर्णमभिवाद्य जनार्दनः ।
यथावत्तानृषीन्सर्वानभ्यभाषत पूजयन् ॥ ०६१ ॥

कच्चिल्लोकेषु कुशलं कच्चिद्धर्मः स्वनुष्ठितः ।
ब्राह्मणानां त्रयो वर्णाः कच्चित्तिष्ठन्ति शासने ॥ ०६२ ॥

तेभ्यः प्रयुज्य तां पूजां प्रोवाच मधुसूदनः ।
भगवन्तः क्व संसिद्धाः का वीथी भवतामिह ॥ ०६३ ॥

किं वा भगवतां कार्यमहं किं करवाणि वः ।
केनार्थेनोपसंप्राप्ता भगवन्तो महीतलम् ॥ ०६४ ॥

तमब्रवीज्जामदग्न्य उपेत्य मधुसूदनम् ।
परिष्वज्य च गोविन्दं पुरा सुचरिते सखा ॥ ०६५ ॥

देवर्षयः पुण्यकृतो ब्राह्मणाश्च बहुश्रुताः ।
राजर्षयश्च दाशार्ह मानयन्तस्तपस्विनः ॥ ०६६ ॥

देवासुरस्य द्रष्टारः पुराणस्य महाद्युते ।
समेतं पार्थिवं क्षत्रं दिदृक्षन्तश्च सर्वतः ॥ ०६७ ॥

सभासदश्च राजानस्त्वां च सत्यं जनार्दन ।
एतन्महत्प्रेक्षणीयं द्रष्टुं गच्छाम केशव ॥ ०६८ ॥

धर्मार्थसहिता वाचः श्रोतुमिच्छाम माधव ।
त्वयोच्यमानाः कुरुषु राजमध्ये परंतप ॥ ०६९ ॥

भीष्मद्रोणादयश्चैव विदुरश्च महामतिः ।
त्वं च यादवशार्दूल सभायां वै समेष्यथ ॥ ०७० ॥

तव वाक्यानि दिव्यानि तत्र तेषां च माधव ।
श्रोतुमिच्छाम गोविन्द सत्यानि च शुभानि च  ॥ ०७१  ॥

आपृष्टोऽसि महाबाहो पुनर्द्रक्ष्यामहे वयम् ।
याह्यविघ्नेन वै वीर द्रक्ष्यामस्त्वां सभागतम्  ॥ ०७२  ॥

---

# अध्याय ०८२

वैशंपायन उवाच  ॥

प्रयान्तं देवकीपुत्रं परवीररुजो दश ।
महारथा महाबाहुमन्वयुः शस्त्रपाणयः  ॥ ००१  ॥

पदातीनां सहस्रं च सादिनां च परंतप ।
भोज्यं च विपुलं राजन्प्रेष्याश्च शतशोऽपरे  ॥ ००२  ॥

जनमेजय उवाच  ॥

कथं प्रयातो दाशार्हो महात्मा मधुसूदनः ।
कानि वा व्रजतस्तस्य निमित्तानि महौजसः  ॥ ००३  ॥

वैशंपायन उवाच  ॥

तस्य प्रयाणे यान्यासन्नद्भुतानि महात्मनः ।
तानि मे शृणु दिव्यानि दैवान्यौत्पातिकानि च  ॥ ००४  ॥

अनभ्रेऽशनिनिर्घोषः सविद्युत्समजायत ।

अन्वगेव च पर्जन्यः प्रावर्षद्विघने भृशम् ॥ ००५ ॥

प्रत्यगूहुर्महानद्यः प्राङ्मुखाः सिन्धुसत्तमाः ।
विपरीता दिशः सर्वा न प्राज्ञायत किञ्चन ॥ ००६ ॥

प्राज्वलन्नग्नयो राजन्पृथिवी समकम्पत ।
उदपानाश्च कुम्भाश्च प्रासिञ्चञ्शतशो जलम् ॥ ००७ ॥

तमःसंवृतमप्यासीत्सर्वं जगदिदं तदा ।
न दिशो नादिशो राजन्प्रज्ञायन्ते स्म रेणुना ॥ ००८ ॥

प्रादुरासीन्महाञ्शब्दः खे शरीरं न दृश्यते ।
सर्वेषु राजन्देशेषु तदद्भुतमिवाभवत् ॥ ००९ ॥

प्रामथ्नाद्धास्तिनपुरं वातो दक्षिणपश्चिमः ।
आरुजन्गणशो वृक्षान्परुषो भीमनिस्वनः ॥ ०१० ॥

यत्र यत्र तु वार्ष्णेयो वर्तते पथि भारत ।
तत्र तत्र सुखो वायुः सर्वं चासीत्प्रदक्षिणम् ॥ ०११ ॥

ववर्ष पुष्पवर्षं च कमलानि च भूरिशः ।
समश्च पन्था निर्दुःखो व्यपेतकुशकण्टकः ॥ ०१२ ॥

स गच्छन्ब्राह्मणै राजंस्तत्र तत्र महाभुजः ।
अर्च्यते मधुपर्कैश्च सुमनोभिर्वसुप्रदः ॥ ०१३ ॥

तं किरन्ति महात्मानं वन्यैः पुष्पैः सुगन्धिभिः ।
स्त्रियः पथि समागम्य सर्वभूतहिते रतम् ॥ ०१४ ॥

स शालिभवनं रम्यं सर्वसस्यसमाचितम् ।
सुखं परमधर्मिष्ठमत्यगाद्भरतर्षभ ॥ ०१५ ॥

पश्यन्बहुपशून्ग्रामान्रम्यान्हृदयतोषणान् ।
पुराणि च व्यतिक्रामन्राष्ट्राणि विविधानि च ॥ ०१६ ॥

नित्यहृष्टाः सुमनसो भारतैरभिरक्षिताः ।
नोद्विग्नाः परचक्राणामनयानामकोविदाः ॥ ०१७ ॥

उपप्लव्यादथायान्तं जनाः पुरनिवासिनः ।
पथ्यतिष्ठन्त सहिता विष्वक्सेनदिदृक्षया ॥ ०१८ ॥

ते तु सर्वे सुनामानमग्निमिद्धमिव प्रभुम् ।
अर्चयामासुरर्च्यं तं देशातिथिमुपस्थितम् ॥ ०१९ ॥

वृकस्थलं समासाद्य केशवः परवीरहा ।
प्रकीर्णरश्मावादित्ये विमले लोहितायति ॥ ०२० ॥

अवतीर्य रथात्तूर्णं कृत्वा शौचं यथाविधि ।
रथमोचनमादिश्य संध्यामुपविवेश ह ॥ ०२१ ॥

दारुकोऽपि हयान्मुक्त्वा परिचर्य च शास्त्रतः ।
मुमोच सर्वं वर्माणि मुक्त्वा चैनानवासृजत् ॥ ०२२ ॥

अभ्यतीत्य तु तत्सर्वमुवाच मधुसूदनः ।
युधिष्ठिरस्य कार्यार्थमिह वत्स्यामहे क्षपाम् ॥ ०२३ ॥

तस्य तन्मतमाज्ञाय चक्रुरावसथं नराः ।
क्षणेन चान्नपानानि गुणवन्ति समार्जयन् ॥ ०२४ ॥

तस्मिन्ग्रामे प्रधानास्तु य आसन्ब्राह्मणा नृप ।
आर्याः कुलीना ह्रीमन्तो ब्राह्मीं वृत्तिमनुष्ठिताः ॥ ०२५ ॥

तेऽभिगम्य महात्मानं हृषीकेशमरिंदमम् ।
पूजां चक्रुर्यथान्यायमाशीर्मङ्गलसंयुताम् ॥ ०२६ ॥

ते पूजयित्वा दाशार्हं सर्वलोकेषु पूजितम् ।
न्यवेदयन्त वेश्मानि रत्नवन्ति महात्मने ॥ ०२७ ॥

तान्प्रभुः कृतमित्युक्त्वा सत्कृत्य च यथार्हतः ।
अभ्येत्य तेषां वेश्मानि पुनरायात्सहैव तैः ॥ ०२८ ॥

सुमृष्टं भोजयित्वा च ब्राह्मणांस्तत्र केशवः ।
भुक्त्वा च सह तैः सर्वैरवसत्तां क्षपां सुखम् ॥ ०२९ ॥

---

# अध्याय ०८३

वैशंपायन उवाच ॥

तथा दूतैः समाज्ञाय आयान्तं मधुसूदनम् ।
धृतराष्ट्रोऽब्रवीद्भीष्ममर्चयित्वा महाभुजम् ॥ ००१ ॥

द्रोणं च सञ्जयं चैव विदुरं च महामतिम् ।
दुर्योधनं च सामात्यं हृष्टरोमाब्रवीदिदम् ॥ ००२ ॥

अद्भुतं महदाश्चर्यं श्रूयते कुरुनन्दन ।
स्त्रियो बालाश्च वृद्धाश्च कथयन्ति गृहे गृहे ॥ ००३ ॥

सत्कृत्याचक्षते चान्ये तथैवान्ये समागताः ।
पृथग्वादाश्च वर्तन्ते चत्वरेषु सभासु च ॥ ००४ ॥

उपयास्यति दाशार्हः पाण्डवार्थे पराक्रमी ।
स नो मान्यश्च पूज्यश्च सर्वथा मधुसूदनः ॥ ००५ ॥

तस्मिन्हि यात्रा लोकस्य भूतानामीश्वरो हि सः ।
तस्मिन्धृतिश्च वीर्यं च प्रज्ञा चौजश्च माधवे ॥ ००६ ॥

स मान्यतां नरश्रेष्ठः स हि धर्मः सनातनः ।
पूजितो हि सुखाय स्यादसुखः स्यादपूजितः ॥ ००७ ॥

स चेत्तुष्यति दाशार्ह उपचारैररिंदमः ।
कृत्स्नान्सर्वानभिप्रायान्प्राप्स्यामः सर्वराजसु ॥ ००८ ॥

तस्य पूजार्थमद्यैव संविधत्स्व परंतप ।
सभाः पथि विधीयन्तां सर्वकामसमाहिताः ॥ ००९ ॥

यथा प्रीतिर्महाबाहो त्वयि जायेत तस्य वै ।
तथा कुरुष्व गान्धारे कथं वा भीष्म मन्यसे ॥ ०१० ॥

ततो भीष्मादयः सर्वे धृतराष्ट्रं जनाधिपम् ।
ऊचुः परममित्येवं पूजयन्तोऽस्य तद्वचः ॥ ०११ ॥

तेषामनुमतं ज्ञात्वा राजा दुर्योधनस्तदा ।
सभावास्तूनि रम्याणि प्रदेष्टुमुपचक्रमे ॥ ०१२ ॥

ततो देशेषु देशेषु रमणीयेषु भागशः ।
सर्वरत्नसमाकीर्णाः सभाश्चक्रुरनेकशः ॥ ०१३ ॥

आसनानि विचित्राणि युक्तानि विविधैर्गुणैः ।
स्त्रियो गन्धानलङ्कारान्सूक्ष्माणि वसनानि च ॥ ०१४ ॥

गुणवन्त्यन्नपानानि भोज्यानि विविधानि च ।
माल्यानि च सुगन्धीनि तानि राजा ददौ ततः ॥ ०१५ ॥

विशेषतश्च वासार्थं सभां ग्रामे वृकस्थले ।
विदधे कौरवो राजा बहुरत्नां मनोरमाम् ॥ ०१६ ॥

एतद्विधाय वै सर्वं देवार्हमतिमानुषम् ।
आचख्यौ धृतराष्ट्राय राजा दुर्योधनस्तदा ॥ ०१७ ॥

ताः सभाः केशवः सर्वा रत्नानि विविधानि च ।
असमीक्ष्यैव दाशार्ह उपायात्कुरुसद्म तत् ॥ ०१८ ॥

---

# अध्याय ०८४

धृतराष्ट्र उवाच ॥

उपप्लव्यादिह क्षत्तरुपयातो जनार्दनः ।
वृकस्थले निवसति स च प्रातरिहेष्यति ॥ ००१ ॥

आहुकानामधिपतिः पुरोगः सर्वसात्वताम् ।
महामना महावीर्यो महामात्रो जनार्दनः ॥ ००२ ॥

स्फीतस्य वृष्णिवंशस्य भर्ता गोप्ता च माधवः ।
त्रयाणामपि लोकानां भगवान्प्रपितामहः ॥ ००३ ॥

वृष्ण्यन्धकाः सुमनसो यस्य प्रज्ञामुपासते ।
आदित्या वसवो रुद्रा यथा बुद्धिं बृहस्पतेः ॥ ००४ ॥

तस्मै पूजां प्रयोक्ष्यामि दाशार्हाय महात्मने ।
प्रत्यक्षं तव धर्मज्ञ तन्मे कथयतः शृणु ॥ ००५ ॥

एकवर्णैः सुकृष्णाङ्गैर्बाह्लिजातैर्हयोत्तमैः ।
चतुर्युक्तान्रथांस्तस्मै रौक्मान्दास्यामि षोडश ॥ ००६ ॥

नित्यप्रभिन्नान्मातङ्गानीषादन्तान्प्रहारिणः ।
अष्टानुचरमेकैकमष्टौ दास्यामि केशवे ॥ ००७ ॥

दासीनामप्रजातानां शुभानां रुक्मवर्चसाम् ।
शतमस्मै प्रदास्यामि दासानामपि तावतः ॥ ००८ ॥

आविकं बहु सुस्पर्शं पार्वतीयैरुपाहृतम् ।
तदप्यस्मै प्रदास्यामि सहस्राणि दशाष्ट च ॥ ००९ ॥

अजिनानां सहस्राणि चीनदेशोद्भवानि च ।
तान्यप्यस्मै प्रदास्यामि यावदर्हति केशवः ॥ ०१० ॥

दिवा रात्रौ च भात्येष सुतेजा विमलो मणिः ।
तमप्यस्मै प्रदास्यामि तमप्यर्हति केशवः ॥ ०११ ॥

एकेनापि पतत्यह्ना योजनानि चतुर्दश ।
यानमश्वतरीयुक्तं दास्ये तस्मै तदप्यहम् ॥ ०१२ ॥

यावन्ति वाहनान्यस्य यावन्तः पुरुषाश्च ते ।
ततोऽष्टगुणमप्यस्मै भोज्यं दास्याम्यहं सदा ॥ ०१३ ॥

मम पुत्राश्च पौत्राश्च सर्वे दुर्योधनादृते ।
प्रत्युद्यास्यन्ति दाशार्हं रथैर्मृष्टैरलङ्कृताः ॥ ०१४ ॥

स्वलङ्कृताश्च कल्याण्यः पादैरेव सहस्रशः ।

वारमुख्या महाभागं प्रत्युद्यास्यन्ति केशवम् ॥ ०१५ ॥

नगरादपि याः काश्चिद्गमिष्यन्ति जनार्दनम् ।
द्रष्टुं कन्याश्च कल्याण्यस्ताश्च यास्यन्त्यनावृताः ॥ ०१६ ॥

सस्त्रीपुरुषबालं हि नगरं मधुसूदनम् ।
उदीक्षते महात्मानं भानुमन्तमिव प्रजाः ॥ ०१७ ॥

महाध्वजपताकाश्च क्रियन्तां सर्वतोदिशम् ।
जलावसिक्तो विरजाः पन्थास्तस्येति चान्वशात् ॥ ०१८ ॥

दुःशासनस्य च गृहं दुर्योधनगृहाद्वरम् ।
तदस्य क्रियतां क्षिप्रं सुसंमृष्टमलङ्कृतम् ॥ ०१९ ॥

एतद्धि रुचिराकारैः प्रासादैरुपशोभितम् ।
शिवं च रमणीयं च सर्वर्तु सुमहाधनम् ॥ ०२० ॥

सर्वमस्मिन्गृहे रत्नं मम दुर्योधनस्य च ।
यद्यदर्हेत्स वार्ष्णेयस्तत्तद्देयमसंशयम् ॥ ०२१ ॥

---

# अध्याय ०८५

विदुर उवाच ॥

राजन्बहुमतश्चासि त्रैलोक्यस्यापि सत्तमः ।
संभावितश्च लोकस्य संमतश्चासि भारत ॥ ००१ ॥

यत्त्वमेवङ्गते ब्रूयाः पश्चिमे वयसि स्थितः ।

शास्त्राद्वा सुप्रतर्काद्वा सुस्थिरः स्थविरो ह्यसि ॥ ००२ ॥

लेखाश्मनीव भाः सूर्ये महोर्मिरिव सागरे ।
धर्मस्त्वयि महान्राजन्निति व्यवसिताः प्रजाः ॥ ००३ ॥

सदैव भावितो लोको गुणौघैस्तव पार्थिव ।
गुणानां रक्षणे नित्यं प्रयतस्व सबान्धवः ॥ ००४ ॥

आर्जवं प्रतिपद्यस्व मा बाल्याद्बहुधा नशीः ।
राज्यं पुत्रांश्च पौत्रांश्च सुहृदश्चापि सुप्रियान् ॥ ००५ ॥

यत्त्वं दित्ससि कृष्णाय राजन्नतिथये बहु ।
एतदन्यच्च दाशार्हः पृथिवीमपि चार्हति ॥ ००६ ॥

न तु त्वं धर्ममुद्दिश्य तस्य वा प्रियकारणात् ।
एतदिच्छसि कृष्णाय सत्येनात्मानमालभे ॥ ००७ ॥

मायैषातत्त्वमेवैतच्छद्मैतद्भूरिदक्षिण ।
जानामि ते मतं राजन्गूढं बाह्येन कर्मणा ॥ ००८ ॥

पञ्च पञ्चैव लिप्सन्ति ग्रामकान्पाण्डवा नृप ।
न च दित्ससि तेभ्यस्तांस्तच्छमं कः करिष्यति ॥ ००९ ॥

अर्थेन तु महाबाहुं वार्ष्णेयं त्वं जिहीर्षसि ।
अनेनैवाभ्युपायेन पाण्डवेभ्यो बिभित्ससि ॥ ०१० ॥

न च वित्तेन शक्योऽसौ नोद्यमेन न गर्हया ।
अन्यो धनञ्जयात्कर्तुमेतत्तत्त्वं ब्रवीमि ते ॥ ०११ ॥

वेद कृष्णस्य माहात्म्यं वेदास्य दृढभक्तिताम् ।
अत्याज्यमस्य जानामि प्राणैस्तुल्यं धनञ्जयम् ॥ ०१२ ॥

अन्यत्कुम्भादपां पूर्णादन्यत्पादावसेचनात् ।
अन्यत्कुशलसंप्रश्नान्नैषिष्यति जनार्दनः ॥ ०१३ ॥

यत्त्वस्य प्रियमातिथ्यं मानार्हस्य महात्मनः ।
तदस्मै क्रियतां राजन्मानार्हो हि जनार्दनः ॥ ०१४ ॥

आशंसमानः कल्याणं कुरूनभ्येति केशवः ।
येनैव राजन्नर्थेन तदेवास्मा उपाकुरु ॥ ०१५ ॥

शममिच्छति दाशार्हस्तव दुर्योधनस्य च ।
पाण्डवानां च राजेन्द्र तदस्य वचनं कुरु ॥ ०१६ ॥

पितासि राजन्पुत्रास्ते वृद्धस्त्वं शिशवः परे ।
वर्तस्व पितृवत्तेषु वर्तन्ते ते हि पुत्रवत् ॥ ०१७ ॥

---

## अध्याय ०८६

दुर्योधन उवाच ॥

यदाह विदुरः कृष्णे सर्वं तत्सत्यमुच्यते ।
अनुरक्तो ह्यसंहार्यः पार्थान्प्रति जनार्दनः ॥ ००१ ॥

यत्तु सत्कारसंयुक्तं देयं वसु जनार्दने ।
अनेकरूपं राजेन्द्र न तद्देयं कदाचन ॥ ००२ ॥

देशः कालस्तथायुक्तो न हि नार्हति केशवः ।

मंस्यत्यधोक्षजो राजन्भयादर्चति मामिति ॥ ००३ ॥

अवमानश्च यत्र स्यात्क्षत्रियस्य विशां पते ।
न तत्कुर्याद्बुधः कार्यमिति मे निश्चिता मतिः ॥ ००४ ॥

स हि पूज्यतमो देवः कृष्णः कमललोचनः ।
त्रयाणामपि लोकानां विदितं मम सर्वथा ॥ ००५ ॥

न तु तस्मिन्प्रदेयं स्यात्तथा कार्यगतिः प्रभो ।
विग्रहः समुपारब्धो न हि शाम्यत्यविग्रहात् ॥ ००६ ॥

वैशंपायन उवाच ॥

तस्य तद्वचनं श्रुत्वा भीष्मः कुरुपितामहः ।
वैचित्रवीर्यं राजानमिदं वचनमब्रवीत् ॥ ००७ ॥

सत्कृतोऽसत्कृतो वापि न क्रुध्येत जनार्दनः ।
नालमन्यमवज्ञातुमवज्ञातोऽपि केशवः ॥ ००८ ॥

यत्तु कार्यं महाबाहो मनसा कार्यतां गतम् ।
सर्वोपायैर्न तच्छक्यं केनचित्कर्तुमन्यथा ॥ ००९ ॥

स यद्ब्रूयान्महाबाहुस्तत्कार्यमविशङ्कया ।
वासुदेवेन तीर्थेन क्षिप्रं संशाम्य पाण्डवैः ॥ ०१० ॥

धर्म्यमर्थ्यं स धर्मात्मा ध्रुवं वक्ता जनार्दनः ।
तस्मिन्वाच्याः प्रिया वाचो भवता बान्धवैः सह ॥ ०११ ॥

दुर्योधन उवाच ॥

न पर्यायोऽस्ति यद्राजञ्श्रियं निष्केवलामहम् ।

तैः सहेमामुपाश्नीयां जीवञ्जीवैः पितामह ॥ ०१२ ॥

इदं तु सुमहत्कार्यं श्रृणु मे यत्समर्थितम् ।
परायणं पाण्डवानां नियंस्यामि जनार्दनम् ॥ ०१३ ॥

तस्मिन्बद्धे भविष्यन्ति वृष्णयः पृथिवी तथा ।
पाण्डवाश्च विधेया मे स च प्रातरिहेष्यति ॥ ०१४ ॥

अत्रोपायं यथा सम्यङ्ङ बुध्येत जनार्दनः ।
न चापायो भवेत्कश्चित्तद्भवान्प्रब्रवीतु मे ॥ ०१५ ॥

वैशंपायन उवाच ॥

तस्य तद्वचनं श्रुत्वा घोरं कृष्णाभिसंहितम् ।
धृतराष्ट्रः सहामात्यो व्यथितो विमनाभवत् ॥ ०१६ ॥

ततो दुर्योधनमिदं धृतराष्ट्रोऽब्रवीद्वचः ।
मैवं वोचः प्रजापाल नैष धर्मः सनातनः ॥ ०१७ ॥

दूतश्च हि हृषीकेशः संबन्धी च प्रियश्च नः ।
अपापः कौरवेयेषु कथं बन्धनमर्हति ॥ ०१८ ॥

भीष्म उवाच ॥

परीतो धृतराष्ट्रायं तव पुत्रः सुमन्दधीः ।
वृणोत्यनर्थं न त्वर्थं याच्यमानः सुहृद्गणैः ॥ ०१९ ॥

इममुत्पथि वर्तन्तं पापं पापानुबन्धिनम् ।
वाक्यानि सुहृदां हित्वा त्वमप्यस्यानुवर्तसे ॥ ०२० ॥

कृष्णमक्लिष्टकर्माणमासाद्यायं सुदुर्मतिः ।

तव पुत्रः सहामात्यः क्षणेन न भविष्यति ॥ ०२१ ॥

पापस्यास्य नृशंसस्य त्यक्तधर्मस्य दुर्मतेः ।
नोत्सहेऽनर्थसंयुक्तां वाचं श्रोतुं कथञ्चन ॥ ०२२ ॥

वैशंपायन उवाच ॥

इत्युक्त्वा भरतश्रेष्ठो वृद्धः परममन्युमान् ।
उत्थाय तस्मात्प्रातिष्ठद्भीष्मः सत्यपराक्रमः ॥ ०२३ ॥

---

# अध्याय ०८७

वैशंपायन उवाच ॥

प्रातरुत्थाय कृष्णस्तु कृतवान्सर्वमाह्निकम् ।
ब्राह्मणैरभ्यनुज्ञातः प्रययौ नगरं प्रति ॥ ००१ ॥

तं प्रयान्तं महाबाहुमनुज्ञाप्य ततो नृप ।
पर्यवर्तन्त ते सर्वे वृकस्थलनिवासिनः ॥ ००२ ॥

धार्तराष्ट्रास्तमायान्तं प्रत्युज्जग्मुः स्वलङ्कृताः ।
दुर्योधनमृते सर्वे भीष्मद्रोणकृपादयः ॥ ००३ ॥

पौराश्च बहुला राजन्हृषीकेशं दिदृक्षवः ।
यानैर्बहुविधैरन्ये पद्भिरेव तथापरे ॥ ००४ ॥

स वै पथि समागम्य भीष्मेणाक्लिष्टकर्मणा ।

द्रोणेन धार्तराष्ट्रैश्च तैर्वृतो नगरं ययौ ॥ ००५ ॥

कृष्णसंमाननार्थं च नगरं समलङ्कृतम् ।
बभूवू राजमार्गाश्च बहुरत्नसमाचिताः ॥ ००६ ॥

न स्म कश्चिद्गृहे राजंस्तदासीद्भरतर्षभ ।
न स्त्री न वृद्धो न शिशुर्वासुदेवदिदृक्षया ॥ ००७ ॥

राजमार्गे नरा न स्म संभवन्त्यवनिं गताः ।
तथा हि सुमहद्राजन्हृषीकेशप्रवेशने ॥ ००८ ॥

आवृतानि वरस्त्रीभिर्गृहाणि सुमहान्त्यपि ।
प्रचलन्तीव भारेण दृश्यन्ते स्म महीतले ॥ ००९ ॥

तथा च गतिमन्तस्ते वासुदेवस्य वाजिनः ।
प्रनष्टगतयोऽभूवन्राजमार्गे नरैर्वृते ॥ ०१० ॥

स गृहं धृतराष्ट्रस्य प्राविशच्छत्रुकर्शनः ।
पाण्डुरं पुण्डरीकाक्षः प्रासादैरुपशोभितम् ॥ ०११ ॥

तिस्रः कक्ष्या व्यतिक्रम्य केशवो राजवेश्मनः ।
वैचित्रवीर्यं राजानमभ्यगच्छदरिंदमः ॥ ०१२ ॥

अभ्यागच्छति दाशार्हे प्रज्ञाचक्षुर्नरेश्वरः ।
सहैव द्रोणभीष्माभ्यामुदतिष्ठन्महायशाः ॥ ०१३ ॥

कृपश्च सोमदत्तश्च महाराजश्च बाह्लिकः ।
आसनेभ्योऽचलन्सर्वे पूजयन्तो जनार्दनम् ॥ ०१४ ॥

ततो राजानमासाद्य धृतराष्ट्रं यशस्विनम् ।
स भीष्मं पूजयामास वार्ष्णेयो वाग्भिरञ्जसा ॥ ०१५ ॥

तेषु धर्मानुपूर्वीं तां प्रयुज्य मधुसूदनः ।
यथावयः समीयाय राजभिस्तत्र माधवः ॥ ०१६ ॥

अथ द्रोणं सपुत्रं स बाह्लीकं च यशस्विनम् ।
कृपं च सोमदत्तं च समीयाय जनार्दनः ॥ ०१७ ॥

तत्रासीदूर्जितं मृष्टं काञ्चनं महदासनम् ।
शासनाद्धृतराष्ट्रस्य तत्रोपाविशदच्युतः ॥ ०१८ ॥

अथ गां मधुपर्कं चाप्युदकं च जनार्दने ।
उपजह्रुर्यथान्यायं धृतराष्ट्रपुरोहिताः ॥ ०१९ ॥

कृतातिथ्यस्तु गोविन्दः सर्वान्परिहसन्कुरून् ।
आस्ते संबन्धकं कुर्वन्कुरुभिः परिवारितः ॥ ०२० ॥

सोऽर्चितो धृतराष्ट्रेण पूजितश्च महायशाः ।
राजानं समनुज्ञाप्य निराक्रामदरिंदमः ॥ ०२१ ॥

तैः समेत्य यथान्यायं कुरुभिः कुरुसंसदि ।
विदुरावसथं रम्यमुपातिष्ठत माधवः ॥ ०२२ ॥

विदुरः सर्वकल्याणैरभिगम्य जनार्दनम् ।
अर्चयामास दाशार्हं सर्वकामैरुपस्थितम् ॥ ०२३ ॥

कृतातिथ्यं तु गोविन्दं विदुरः सर्वधर्मवित् ।
कुशलं पाण्डुपुत्राणामपृच्छन्मधुसूदनम् ॥ ०२४ ॥

प्रीयमाणस्य सुहृदो विदुषो बुद्धिसत्तमः ।
धर्मनित्यस्य च तदा गतदोषस्य धीमतः ॥ ०२५ ॥

तस्य सर्वं सविस्तारं पाण्डवानां विचेष्टितम् ।
क्षत्तुराचष्ट दाशार्हः सर्वप्रत्यक्षदर्शिवान् ॥ ०२६ ॥

---

# अध्याय ०८८

वैशंपायन उवाच ॥

अथोपगम्य विदुरमपराह्णे जनार्दनः ।
पितृष्वसारं गोविन्दः सोऽभ्यगच्छदरिंदमः ॥ ००१ ॥

सा दृष्ट्वा कृष्णमायान्तं प्रसन्नादित्यवर्चसम् ।
कण्ठे गृहीत्वा प्राक्रोशत्पृथा पार्थाननुस्मरन् ॥ ००२ ॥

तेषां सत्त्ववतां मध्ये गोविन्दं सहचारिणम् ।
चिरस्य दृष्ट्वा वार्ष्णेयं बाष्पमाहारयत्पृथा ॥ ००३ ॥

साब्रवीत्कृष्णमासीनं कृतातिथ्यं युधां पतिम् ।
बाष्पगद्गदपूर्णेन मुखेन परिशुष्यता ॥ ००४ ॥

ये ते बाल्यात्प्रभृत्येव गुरुशुश्रूषणे रताः ।
परस्परस्य सुहृदः संमताः समचेतसः ॥ ००५ ॥

निकृत्या भ्रंशिता राज्याज्जनार्हा निर्जनं गताः ।
विनीतक्रोधहर्षाश्च ब्रह्मण्याः सत्यवादिनः ॥ ००६ ॥

त्यक्त्वा प्रियसुखे पार्था रुदन्तीमपहाय माम् ।
अहार्षुश्च वनं यान्तः समूलं हृदयं मम ॥ ००७ ॥

अतदर्हा महात्मानः कथं केशव पाण्डवाः ।
ऊषुर्महावने तात सिंहव्याघ्रगजाकुले ॥ ००८ ॥

बाला विहीनाः पित्रा ते मया सततलालिताः ।
अपश्यन्तः स्वपितरौ कथमूषुर्महावने ॥ ००९ ॥

शङ्खदुन्दुभिनिर्घोषैर्मृदङ्गैर्वैणवैरपि ।
पाण्डवाः समबोध्यन्त बाल्यात्प्रभृति केशव ॥ ०१० ॥

ये स्म वारणशब्देन हयानां हेषितेन च ।
रथनेमिनिनादैश्च व्यबोध्यन्त सदा गृहे ॥ ०११ ॥

शङ्खभेरीनिनादेन वेणुवीणानुनादिना ।
पुण्याहघोषमिश्रेण पूज्यमाना द्विजातिभिः ॥ ०१२ ॥

वस्त्रै रत्नैरलङ्कारैः पूजयन्तो द्विजन्मनः ।
गीर्भिर्मङ्गलयुक्ताभिर्ब्राह्मणानां महात्मनाम् ॥ ०१३ ॥

अर्चितैरर्चनार्हैश्च स्तुवद्भिरभिनन्दिताः ।
प्रासादाग्रेष्वबोध्यन्त राङ्कवाजिनशायिनः ॥ ०१४ ॥

ते नूनं निनदं श्रुत्वा श्वापदानां महावने ।
न स्मोपयान्ति निद्रां वै अतदर्हा जनार्दन ॥ ०१५ ॥

भेरीमृदङ्गनिनदैः शङ्खवैणवनिस्वनैः ।
स्त्रीणां गीतनिनादैश्च मधुरैर्मधुसूदन ॥ ०१६ ॥

बन्दिमागधसूतैश्च स्तुवद्भिर्बोधिताः कथम् ।
महावने व्यबोध्यन्त श्वापदानां रुतेन ते ॥ ०१७ ॥

ह्रीमान्सत्यधृतिर्दान्तो भूतानामनुकम्पिता ।
कामद्वेषौ वशे कृत्वा सतां वर्त्मानुवर्तते ॥ ०१८ ॥

अम्बरीषस्य मान्धातुर्ययातेर्नहुषस्य च ।
भरतस्य दिलीपस्य शिबेरौशीनरस्य च ॥ ०१९ ॥

राजर्षीणां पुराणानां धुरं धत्ते दुरुद्वहाम् ।
शीलवृत्तोपसंपन्नो धर्मज्ञः सत्यसङ्गरः ॥ ०२० ॥

राजा सर्वगुणोपेतस्त्रैलोक्यस्यापि यो भवेत् ।
अजातशत्रुर्धर्मात्मा शुद्धजाम्बूनदप्रभः ॥ ०२१ ॥

श्रेष्ठः कुरुषु सर्वेषु धर्मतः श्रुतवृत्ततः ।
प्रियदर्शनो दीर्घभुजः कथं कृष्ण युधिष्ठिरः ॥ ०२२ ॥

यः स नागायुतप्राणो वातरंहा वृकोदरः ।
अमर्षी पाण्डवो नित्यं प्रियो भ्रातुः प्रियङ्करः ॥ ०२३ ॥

कीचकस्य च सज्ञातेर्यो हन्ता मधुसूदन ।
शूरः क्रोधवशानां च हिडिम्बस्य बकस्य च ॥ ०२४ ॥

पराक्रमे शक्रसमो वायुवेगसमो जवे ।
महेश्वरसमः क्रोधे भीमः प्रहरतां वरः ॥ ०२५ ॥

क्रोधं बलममर्षं च यो निधाय परंतपः ।
जितात्मा पाण्डवोऽमर्षी भ्रातुस्तिष्ठति शासने ॥ ०२६ ॥

तेजोराशिं महात्मानं बलौघममितौजसम् ।
भीमं प्रदर्शनेनापि भीमसेनं जनार्दन ॥ ०२७ ॥

तं ममाचक्ष्व वार्ष्णेय कथमद्य वृकोदरः ॥ ०२७ ॥

आस्ते परिघबाहुः स मध्यमः पाण्डवोऽच्युत ।
अर्जुनेनार्जुनो यः स कृष्ण बाहुसहस्रिणा  ॥ ०२८  ॥

द्विबाहुः स्पर्धते नित्यमतीतेनापि केशव  ॥ ०२८  ॥

क्षिपत्येकेन वेगेन पञ्च बाणशतानि यः ।
इष्वस्त्रे सदृशो राज्ञः कार्तवीर्यस्य पाण्डवः  ॥ ०२९  ॥

तेजसादित्यसदृशो महर्षिप्रतिमो दमे ।
क्षमया पृथिवीतुल्यो महेन्द्रसमविक्रमः  ॥ ०३०  ॥

आधिराज्यं महद्दीप्तं प्रथितं मधुसूदन ।
आहृतं येन वीर्येण कुरूणां सर्वराजसु  ॥ ०३१  ॥

यस्य बाहुबलं घोरं कौरवाः पर्युपासते ।
स सर्वरथिनां श्रेष्ठः पाण्डवः सत्यविक्रमः  ॥ ०३२  ॥

योऽपाश्रयः पाण्डवानां देवानामिव वासवः ।
स ते भ्राता सखा चैव कथमद्य धनञ्जयः  ॥ ०३३  ॥

दयावान्सर्वभूतेषु ह्रीनिषेधो महास्त्रवित् ।
मृदुश्च सुकुमारश्च धार्मिकश्च प्रियश्च मे  ॥ ०३४  ॥

सहदेवो महेष्वासः शूरः समितिशोभनः ।
भ्रातॄणां कृष्ण शुश्रूषुर्धर्मार्थकुशलो युवा  ॥ ०३५  ॥

सदैव सहदेवस्य भ्रातरो मधुसूदन ।
वृत्तं कल्याणवृत्तस्य पूजयन्ति महात्मनः  ॥ ०३६  ॥

ज्येष्ठापचायिनं वीरं सहदेवं युधां पतिम् ।

शुश्रूषुं मम वार्ष्णेय माद्रीपुत्रं प्रचक्ष्व मे ॥ ०३७ ॥

सुकुमारो युवा शूरो दर्शनीयश्च पाण्डवः ।
भ्रातॄणां कृष्ण सर्वेषां प्रियः प्राणो बहिश्चरः ॥ ०३८ ॥

चित्रयोधी च नकुलो महेष्वासो महाबलः ।
कच्चित्स कुशली कृष्ण वत्सो मम सुखैधितः ॥ ०३९ ॥

सुखोचितमदुःखार्हं सुकुमारं महारथम् ।
अपि जातु महाबाहो पश्येयं नकुलं पुनः ॥ ०४० ॥

पक्ष्मसंपातजे काले नकुलेन विनाकृता ।
न लभामि सुखं वीर साद्य जीवामि पश्य माम् ॥ ०४१ ॥

सर्वैः पुत्रैः प्रियतमा द्रौपदी मे जनार्दन ।
कुलीना शीलसंपन्ना सर्वैः समुदिता गुणैः ॥ ०४२ ॥

पुत्रलोकात्पतिलोकान्वृण्वाना सत्यवादिनी ।
प्रियान्पुत्रान्परित्यज्य पाण्डवानन्वपद्यत ॥ ०४३ ॥

महाभिजनसंपन्ना सर्वकामैः सुपूजिता ।
ईश्वरी सर्वकल्याणी द्रौपदी कथमच्युत ॥ ०४४ ॥

पतिभिः पञ्चभिः शूरैरग्निकल्पैः प्रहारिभिः ।
उपपन्ना महेष्वासैर्द्रौपदी दुःखभागिनी ॥ ०४५ ॥

चतुर्दशमिमं वर्षं यन्नापश्यमरिंदम ।
पुत्राधिभिः परिद्यूनां द्रौपदीं सत्यवादिनीम् ॥ ०४६ ॥

न नूनं कर्मभिः पुण्यैरश्नुते पुरुषः सुखम् ।
द्रौपदी चेत्तथावृत्ता नाश्नुते सुखमव्ययम् ॥ ०४७ ॥

न प्रियो मम कृष्णाय बीभत्सुर्न युधिष्ठिरः ।
भीमसेनो यमौ वापि यदपश्यं सभागताम्  ॥ ०४८  ॥

न मे दुःखतरं किञ्चिद्भूतपूर्वं ततोऽधिकम् ।
यद्द्रौपदीं निवातस्थां श्वशुराणां समीपगाम्  ॥ ०४९  ॥

आनायितामनार्येण क्रोधलोभानुवर्तिना ।
सर्वे प्रैक्षन्त कुरव एकवस्त्रां सभागताम्  ॥ ०५०  ॥

तत्रैव धृतराष्ट्रश्च महाराजश्च बाह्लिकः ।
कृपश्च सोमदत्तश्च निर्विण्णाः कुरवस्तथा  ॥ ०५१  ॥

तस्यां संसदि सर्वस्यां क्षत्तारं पूजयाम्यहम् ।
वृत्तेन हि भवत्यार्यो न धनेन न विद्यया  ॥ ०५२  ॥

तस्य कृष्ण महाबुद्धेर्गम्भीरस्य महात्मनः ।
क्षत्तुः शीलमलङ्कारो लोकान्विष्टभ्य तिष्ठति  ॥ ०५३  ॥

सा शोकार्ता च हृष्टा च दृष्ट्वा गोविन्दमागतम् ।
नानाविधानि दुःखानि सर्वाण्येवान्वकीर्तयत्  ॥ ०५४  ॥

पूर्वैराचरितं यत्तत्कुराजभिररिंदम ।
अक्षद्यूतं मृगवधः कच्चिदेषां सुखावहम्  ॥ ०५५  ॥

तन्मां दहति यत्कृष्णा सभायां कुरुसंनिधौ ।
धार्तराष्ट्रैः परिक्लिष्टा यथा नकुशलं तथा  ॥ ०५६  ॥

निर्वासनं च नगरात्प्रव्रज्या च परंतप ।
नानाविधानां दुःखानामावासोऽस्मि जनार्दन  ॥ ०५७  ॥

अज्ञातचर्या बालानामवरोधश्च केशव ॥ ०५७ ॥

न स्म क्लेशतमं मे स्यात्पुत्रैः सह परंतप ।
दुर्योधनेन निकृता वर्षमद्य चतुर्दशम् ॥ ०५८ ॥

दुःखादपि सुखं न स्याद्यदि पुण्यफलक्षयः ।
न मे विशेषो जात्वासीद्धार्तराष्ट्रेषु पाण्डवैः ॥ ०५९ ॥

तेन सत्येन कृष्ण त्वां हतामित्रं श्रिया वृतम् ।
अस्माद्विमुक्तं सङ्ग्रामात्पश्येयं पाण्डवैः सह ॥ ०६० ॥

नैव शक्याः पराजेतुं सत्त्वं ह्येषां तथागतम् ॥ ०६० ॥

पितरं त्वेव गर्हेयं नात्मानं न सुयोधनम् ।
येनाहं कुन्तिभोजाय धनं धूर्तैरिवार्पिता ॥ ०६१ ॥

बालां मामार्यकस्तुभ्यं क्रीडन्तीं कन्दुहस्तकाम् ।
अददात्कुन्तिभोजाय सखा सख्ये महात्मने ॥ ०६२ ॥

साहं पित्रा च निकृता श्वशुरैश्च परंतप ।
अत्यन्तदुःखिता कृष्ण किं जीवितफलं मम ॥ ०६३ ॥

यन्मा वागब्रवीन्नक्तं सूतके सव्यसाचिनः ।
पुत्रस्ते पृथिवीं जेता यशश्चास्य दिवं स्पृशेत् ॥ ०६४ ॥

हत्वा कुरून्ग्रामजन्ये राज्यं प्राप्य धनञ्जयः ।
भ्रातृभिः सह कौन्तेयस्त्रीन्मेधानाहरिष्यति ॥ ०६५ ॥

नाहं तामभ्यसूयामि नमो धर्माय वेधसे ।
कृष्णाय महते नित्यं धर्मो धारयति प्रजाः ॥ ०६६ ॥

धर्मश्चेदस्ति वार्ष्णेय तथा सत्यं भविष्यति ।
त्वं चापि तत्तथा कृष्ण सर्वं संपादयिष्यसि ॥ ०६७ ॥

न मां माधव वैधव्यं नार्थनाशो न वैरिता ।
तथा शोकाय भवति यथा पुत्रैर्विनाभवः ॥ ०६८ ॥

याहं गाण्डीवधन्वानं सर्वशस्त्रभृतां वरम् ।
धनञ्जयं न पश्यामि का शान्तिर्हृदयस्य मे ॥ ०६९ ॥

इदं चतुर्दशं वर्षं यन्नापश्यं युधिष्ठिरम् ।
धनञ्जयं च गोविन्द यमौ तं च वृकोदरम् ॥ ०७० ॥

जीवनाशं प्रनष्टानां श्राद्धं कुर्वन्ति मानवाः ।
अर्थतस्ते मम मृतास्तेषां चाहं जनार्दन ॥ ०७१ ॥

ब्रूया माधव राजानं धर्मात्मानं युधिष्ठिरम् ।
भूयांस्ते हीयते धर्मो मा पुत्रक वृथा कृथाः ॥ ०७२ ॥

पराश्रया वासुदेव या जीवामि धिगस्तु माम् ।
वृत्तेः कृपणलब्धाया अप्रतिष्ठैव ज्यायसी ॥ ०७३ ॥

अथो धनञ्जयं ब्रूया नित्योद्युक्तं वृकोदरम् ।
यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः ॥ ०७४ ॥

अस्मिंश्चेदागते काले कालो वोऽतिक्रमिष्यति ।
लोकसंभाविताः सन्तः सुनृशंसं करिष्यथ ॥ ०७५ ॥

नृशंसेन च वो युक्तांस्त्यजेयं शाश्वतीः समाः ।
काले हि समनुप्राप्ते त्यक्तव्यमपि जीवितम् ॥ ०७६ ॥

माद्रीपुत्रौ च वक्तव्यौ क्षत्रधर्मरतौ सदा ।

विक्रमेणार्जितान्भोगान्वृणीतं जीवितादपि ॥ ०७७ ॥

विक्रमाधिगता ह्यर्थाः क्षत्रधर्मेण जीवतः ।
मनो मनुष्यस्य सदा प्रीणन्ति पुरुषोत्तम ॥ ०७८ ॥

गत्वा ब्रूहि महाबाहो सर्वशस्त्रभृतां वरम् ।
अर्जुनं पाण्डवं वीरं द्रौपद्याः पदवीं चर ॥ ०७९ ॥

विदितौ हि तवात्यन्तं क्रुद्धाविव यथान्तकौ ।
भीमार्जुनौ नयेतां हि देवानपि परां गतिम् ॥ ०८० ॥

तयोश्चैतदवज्ञानं यत्सा कृष्णा सभां गता ।
दुःशासनश्च कर्णश्च परुषाण्यभ्यभाषताम् ॥ ०८१ ॥

दुर्योधनो भीमसेनमभ्यगच्छन्मनस्विनम् ।
पश्यतां कुरुमुख्यानां तस्य द्रक्ष्यति यत्फलम् ॥ ०८२ ॥

न हि वैरं समासाद्य प्रशाम्यति वृकोदरः ।
सुचिरादपि भीमस्य न हि वैरं प्रशाम्यति ॥ ०८३ ॥

यावदन्तं न नयति शात्रवाञ्शत्रुकर्शनः ॥ ०८३ ॥

न दुःखं राज्यहरणं न च द्यूते पराजयः ।
प्रव्राजनं च पुत्राणां न मे तद्दुःखकारणम् ॥ ०८४ ॥

यत्तु सा बृहती श्यामा एकवस्त्रा सभां गता ।
अश्रृणोत्परुषा वाचस्ततो दुःखतरं नु किम् ॥ ०८५ ॥

स्त्रीधर्मिणी वरारोहा क्षत्रधर्मरता सदा ।
नाध्यगच्छत्तथा नाथं कृष्णा नाथवती सती ॥ ०८६ ॥

यस्या मम सपुत्रायास्त्वं नाथो मधुसूदन ।
रामश्च बलिनां श्रेष्ठः प्रद्युम्नश्च महारथः ॥ ०८७ ॥

साहमेवंविधं दुःखं सहेऽद्य पुरुषोत्तम ।
भीमे जीवति दुर्धर्षे विजये चापलायिनि ॥ ०८८ ॥

तत आश्वासयामास पुत्राधिभिरभिप्लुताम् ।
पितृष्वसारं शोचन्तीं शौरिः पार्थसखः पृथाम् ॥ ०८९ ॥

का नु सीमन्तिनी त्वादृग्लोकेष्वस्ति पितृष्वसः ।
शूरस्य राज्ञो दुहिता आजमीढकुलं गता ॥ ०९० ॥

महाकुलीना भवती ह्रदाद्ध्रदमिवागता ।
ईश्वरी सर्वकल्याणी भर्त्रा परमपूजिता ॥ ०९१ ॥

वीरसूर्वीरपत्नी च सर्वैः समुदिता गुणैः ।
सुखदुःखे महाप्राज्ञे त्वादृशी सोढुमर्हति ॥ ०९२ ॥

निद्रातन्द्री क्रोधहर्षौ क्षुत्पिपासे हिमातपौ ।
एतानि पार्था निर्जित्य नित्यं वीराः सुखे रताः ॥ ०९३ ॥

त्यक्तग्राम्यसुखाः पार्था नित्यं वीरसुखप्रियाः ।
न ते स्वल्पेन तुष्येयुर्महोत्साहा महाबलाः ॥ ०९४ ॥

अन्तं धीरा निषेवन्ते मध्यं ग्राम्यसुखप्रियाः ।
उत्तमांश्च परिक्लेशान्भोगांश्चातीव मानुषान् ॥ ०९५ ॥

अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे ।
अन्तप्राप्तिं सुखामाहुर्दुःखमन्तरमन्तयोः ॥ ०९६ ॥

अभिवादयन्ति भवतीं पाण्डवाः सह कृष्णया ।

आत्मानं च कुशलिनं निवेद्याहुरनामयम् ॥ ०९७ ॥

अरोगान्सर्वसिद्धार्थान्क्षिप्रं द्रक्ष्यसि पाण्डवान् ।
ईश्वरान्सर्वलोकस्य हतामित्राञ्श्रिया वृतान् ॥ ०९८ ॥

एवमाश्वासिता कुन्ती प्रत्युवाच जनार्दनम् ।
पुत्राधिभिरभिध्वस्ता निगृह्याबुद्धिजं तमः ॥ ०९९ ॥

यद्यत्तेषां महाबाहो पथ्यं स्यान्मधुसूदन ।
यथा यथा त्वं मन्येथाः कुर्याः कृष्ण तथा तथा ॥ १०० ॥

अविलोपेन धर्मस्य अनिकृत्या परंतप ।
प्रभावज्ञास्मि ते कृष्ण सत्यस्याभिजनस्य च ॥ १०१ ॥

व्यवस्थायां च मित्रेषु बुद्धिविक्रमयोस्तथा ।
त्वमेव नः कुले धर्मस्त्वं सत्यं त्वं तपो महत् ॥ १०२ ॥

त्वं त्राता त्वं महद्ब्रह्म त्वयि सर्वं प्रतिष्ठितम् ।
यथैवात्थ तथैवैतत्त्वयि सत्यं भविष्यति ॥ १०३ ॥

तामामन्त्र्य च गोविन्दः कृत्वा चाभिप्रदक्षिणम् ।
प्रातिष्ठत महाबाहुर्दुर्योधनगृहान्प्रति ॥ १०४ ॥

---

# अध्याय ०८९

वैशंपायन उवाच ॥

पृथामामन्त्र्य गोविन्दः कृत्वा चापि प्रदक्षिणम् ।

दुर्योधनगृहं शौरिरभ्यगच्छदरिंदमः ॥ ००१ ॥

लक्ष्म्या परमया युक्तं पुरंदरगृहोपमम् ।
तस्य कक्ष्या व्यतिक्रम्य तिस्रो द्वाःस्थैरवारितः ॥ ००२ ॥

ततोऽभ्रघनसङ्काशं गिरिकूटमिवोच्छ्रितम् ।
श्रिया ज्वलन्तं प्रासादमारुरोह महायशाः ॥ ००३ ॥

तत्र राजसहस्रैश्च कुरुभिश्चाभिसंवृतम् ।
धार्तराष्ट्रं महाबाहुं ददर्शासीनमासने ॥ ००४ ॥

दुःशासनं च कर्णं च शकुनिं चापि सौबलम् ।
दुर्योधनसमीपे तानासनस्थान्ददर्श सः ॥ ००५ ॥

अभ्यागच्छति दाशार्हे धार्तराष्ट्रो महायशाः ।
उदतिष्ठत्सहामात्यः पूजयन्मधुसूदनम् ॥ ००६ ॥

समेत्य धार्तराष्ट्रेण सहामात्येन केशवः ।
राजभिस्तत्र वार्ष्णेयः समागच्छद्यथावयः ॥ ००७ ॥

तत्र जाम्बूनदमयं पर्यङ्कं सुपरिष्कृतम् ।
विविधास्तरणास्तीर्णमभ्युपाविशदच्युतः ॥ ००८ ॥

तस्मिन्गां मधुपर्कं च उपहृत्य जनार्दने ।
निवेदयामास तदा गृहान्राज्यं च कौरवः ॥ ००९ ॥

तत्र गोविन्दमासीनं प्रसन्नादित्यवर्चसम् ।
उपासां चक्रिरे सर्वे कुरवो राजभिः सह ॥ ०१० ॥

ततो दुर्योधनो राजा वार्ष्णेयं जयतां वरम् ।
न्यमन्त्रयद्भोजनेन नाभ्यनन्दच्च केशवः ॥ ०११ ॥

ततो दुर्योधनः कृष्णमब्रवीद्राजसंसदि ।
मृदुपूर्वं शठोदर्कं कर्णमाभाष्य कौरवः ॥ ०१२ ॥

कस्मादन्नानि पानानि वासांसि शयनानि च ।
त्वदर्थमुपनीतानि नाग्रहीस्त्वं जनार्दन ॥ ०१३ ॥

उभयोश्चाददः साह्यमुभयोश्च हिते रतः ।
संबन्धी दयितश्चासि धृतराष्ट्रस्य माधव ॥ ०१४ ॥

त्वं हि गोविन्द धर्मार्थौ वेत्थ तत्त्वेन सर्वशः ।
तत्र कारणमिच्छामि श्रोतुं चक्रगदाधर ॥ ०१५ ॥

स एवमुक्तो गोविन्दः प्रत्युवाच महामनाः ।
ओघमेघस्वनः काले प्रगृह्य विपुलं भुजम् ॥ ०१६ ॥

अनम्बूकृतमग्रस्तमनिरस्तमसङ्कुलम् ।
राजीवनेत्रो राजानं हेतुमद्वाक्यमुत्तमम् ॥ ०१७ ॥

कृतार्था भुञ्जते दूताः पूजां गृह्णन्ति चैव हि ।
कृतार्थं मां सहामात्यस्त्वमर्चिष्यसि भारत ॥ ०१८ ॥

एवमुक्तः प्रत्युवाच धार्तराष्ट्रो जनार्दनम् ।
न युक्तं भवतास्मासु प्रतिपत्तुमसांप्रतम् ॥ ०१९ ॥

कृतार्थं चाकृतार्थं च त्वां वयं मधुसूदन ।
यतामहे पूजयितुं गोविन्द न च शक्नुमः ॥ ०२० ॥

न च तत्कारणं विद्मो यस्मिन्नो मधुसूदन ।
पूजां कृतां प्रीयमाणैर्नामंस्थाः पुरुषोत्तम ॥ ०२१ ॥

वैरं नो नास्ति भवता गोविन्द न च विग्रहः ।
स भवान्प्रसमीक्ष्यैतन्नेदृशं वक्तुमर्हति ॥ ०२२ ॥

एवमुक्तः प्रत्युवाच धार्तराष्ट्रं जनार्दनः ।
अभिवीक्ष्य सहामात्यं दाशार्हः प्रहसन्निव ॥ ०२३ ॥

नाहं कामान्न संरम्भान्न द्वेषान्नार्थकारणात् ।
न हेतुवादाल्लोभाद्वा धर्मं जह्यां कथञ्चन ॥ ०२४ ॥

संप्रीतिभोज्यान्यन्नानि आपद्भोज्यानि वा पुनः ।
न च संप्रीयसे राजन्न चाप्यापद्गता वयम् ॥ ०२५ ॥

अकस्माद्द्विषसे राजञ्जन्मप्रभृति पाण्डवान् ।
प्रियानुवर्तिनो भ्रातॄन्सर्वैः समुदितान्गुणैः ॥ ०२६ ॥

अकस्माच्चैव पार्थानां द्वेषणं नोपपद्यते ।
धर्मे स्थिताः पाण्डवेयाः कस्तान्किं वक्तुमर्हति ॥ ०२७ ॥

यस्तान्द्वेष्टि स मां द्वेष्टि यस्ताननु स मामनु ।
ऐकात्म्यं मां गतं विद्धि पाण्डवैर्धर्मचारिभिः ॥ ०२८ ॥

कामक्रोधानुवर्ती हि यो मोहाद्विरुरुत्सते ।
गुणवन्तं च यो द्वेष्टि तमाहुः पुरुषाधमम् ॥ ०२९ ॥

यः कल्याणगुणाञ्ज्ञातीन्मोहाल्लोभाद्दिदृक्षते ।
सोऽजितात्माजितक्रोधो न चिरं तिष्ठति श्रियम् ॥ ०३० ॥

अथ यो गुणसंपन्नान्हृदयस्याप्रियानपि ।
प्रियेण कुरुते वश्यांश्चिरं यशसि तिष्ठति ॥ ०३१ ॥

सर्वमेतदभोक्तव्यमन्नं दुष्टाभिसंहितम् ।

क्षत्तुरेकस्य भोक्तव्यमिति मे धीयते मतिः ॥ ०३२ ॥

एवमुक्त्वा महाबाहुर्दुर्योधनममर्षणम् ।
निश्चक्राम ततः शुभ्राद्धार्तराष्ट्रनिवेशनात् ॥ ०३३ ॥

निर्याय च महाबाहुर्वासुदेवो महामनाः ।
निवेशाय ययौ वेश्म विदुरस्य महात्मनः ॥ ०३४ ॥

तमभ्यगच्छद्द्रोणश्च कृपो भीष्मोऽथ बाह्लिकः ।
कुरवश्च महाबाहुं विदुरस्य गृहे स्थितम् ॥ ०३५ ॥

तेऽभिगम्याब्रुवंस्तत्र कुरवो मधुसूदनम् ।
निवेदयामो वार्ष्णेय सरत्नांस्ते गृहान्वयम् ॥ ०३६ ॥

तानुवाच महातेजाः कौरवान्मधुसूदनः ।
सर्वे भवन्तो गच्छन्तु सर्वा मेऽपचितिः कृता ॥ ०३७ ॥

यातेषु कुरुषु क्षत्ता दाशार्हमपराजितम् ।
अभ्यर्चयामास तदा सर्वकामैः प्रयत्नवान् ॥ ०३८ ॥

ततः क्षत्तान्नपानानि शुचीनि गुणवन्ति च ।
उपाहरदनेकानि केशवाय महात्मने ॥ ०३९ ॥

तैर्तर्पयित्वा प्रथमं ब्राह्मणान्मधुसूदनः ।
वेदविद्भ्यो ददौ कृष्णः परमद्रविणान्यपि ॥ ०४० ॥

ततोऽनुयायिभिः सार्धं मरुद्भिरिव वासवः ।
विदुरान्नानि बुभुजे शुचीनि गुणवन्ति च ॥ ०४१ ॥

# अध्याय ०९०

वैशंपायन उवाच ॥

तं भुक्तवन्तमाश्वस्तं निशायां विदुरोऽब्रवीत् ।
नेदं सम्यग्व्यवसितं केशवागमनं तव ॥ ००१ ॥

अर्थधर्मातिगो मूढः संरम्भी च जनार्दन ।
मानघ्नो मानकामश्च वृद्धानां शासनातिगः ॥ ००२ ॥

धर्मशास्त्रातिगो मन्दो दुरात्मा प्रग्रहं गतः ।
अनेयः श्रेयसां पापो धार्तराष्ट्रो जनार्दन ॥ ००३ ॥

कामात्मा प्राज्ञमानी च मित्रध्रुक्सर्वशङ्कितः ।
अकर्ता चाकृतज्ञश्च त्यक्तधर्मः प्रियानृतः ॥ ००४ ॥

एतैश्चान्यैश्च बहुभिर्दोषैरेष समन्वितः ।
त्वयोच्यमानः श्रेयोऽपि संरम्भान्न ग्रहीष्यति ॥ ००५ ॥

सेनासमुदयं दृष्ट्वा पार्थिवं मधुसूदन ।
कृतार्थं मन्यते बाल आत्मानमविचक्षणः ॥ ००६ ॥

एकः कर्णः पराञ्जेतुं समर्थ इति निश्चितम् ।
धार्तराष्ट्रस्य दुर्बुद्धेः स शमं नोपयास्यति ॥ ००७ ॥

भीष्मे द्रोणे कृपे कर्णे द्रोणपुत्रे जयद्रथे ।
भूयसीं वर्तते वृत्तिं न शमे कुरुते मनः ॥ ००८ ॥

निश्चितं धार्तराष्ट्राणां सकर्णानां जनार्दन ।
भीष्मद्रोणकृपान्पार्था न शक्ताः प्रतिवीक्षितुम् ॥ ००९ ॥

संविद्ध धार्तराष्ट्राणां सर्वेषामेव केशव ।
शमे प्रयतमानस्य तव सौभ्रात्रकाङ्क्षिणः ॥ ०१० ॥

न पाण्डवानामस्माभिः प्रतिदेयं यथोचितम् ।
इति व्यवसितास्तेषु वचनं स्यान्निरर्थकम् ॥ ०११ ॥

यत्र सूक्तं दुरुक्तं च समं स्यान्मधुसूदन ।
न तत्र प्रलपेत्प्राज्ञो बधिरेष्विव गायनः ॥ ०१२ ॥

अविजानत्सु मूढेषु निर्मर्यादेषु माधव ।
न त्वं वाक्यं ब्रुवन्युक्तश्चाण्डालेषु द्विजो यथा ॥ ०१३ ॥

सोऽयं बलस्थो मूढश्च न करिष्यति ते वचः ।
तस्मिन्निरर्थकं वाक्यमुक्तं संपत्स्यते तव ॥ ०१४ ॥

तेषां समुपविष्टानां सर्वेषां पापचेतसाम् ।
तव मध्यावतरणं मम कृष्ण न रोचते ॥ ०१५ ॥

दुर्बुद्धीनामशिष्टानां बहूनां पापचेतसाम् ।
प्रतीपं वचनं मध्ये तव कृष्ण न रोचते ॥ ०१६ ॥

अनुपासितवृद्धत्वाच्छ्रिया मोहाच्च दर्पितः ।
वयोदर्पादमर्षाच्च न ते श्रेयो ग्रहीष्यति ॥ ०१७ ॥

बलं बलवदप्यस्य यदि वक्ष्यसि माधव ।
त्वय्यस्य महती शङ्का न करिष्यति ते वचः ॥ ०१८ ॥

नेदमद्य युधा शक्यमिन्द्रेणापि सहामरैः ।
इति व्यवसिताः सर्वे धार्तराष्ट्रा जनार्दन ॥ ०१९ ॥

तेष्वेवमुपपन्नेषु कामक्रोधानुवर्तिषु ।

समर्थमपि ते वाक्यमसमर्थं भविष्यति ॥ ०२० ॥

मध्ये तिष्ठन्हस्त्यनीकस्य मन्दो ; रथाश्वयुक्तस्य बलस्य मूढः ।
दुर्योधनो मन्यते वीतमन्युः ; कृत्स्ना मयेयं पृथिवी जितेति ॥ ०२१ ॥

आशंसते धृतराष्ट्रस्य पुत्रो ; महाराज्यमसपत्नं पृथिव्याम् ।
तस्मिञ्शमः केवलो नोपलभ्यो ; बद्धं सन्तमागतं मन्यतेऽर्थम् ॥ ०२२ ॥

पर्यस्तेयं पृथिवी कालपक्वा ; दुर्योधनार्थे पाण्डवान्योद्धुकामाः ।
समागताः सर्वयोधाः पृथिव्यां ; राजानश्च क्षितिपालैः समेताः ॥ ०२३ ॥

सर्वे चैते कृतवैराः पुरस्ता ;त्त्वया राजानो हृतसाराश्च कृष्ण ।
तवोद्वेगात्संश्रिता धार्तराष्ट्रा ;न्सुसंहताः सह कर्णेन वीराः ॥ ०२४ ॥

त्यक्तात्मानः सह दुर्योधनेन ; सृष्टा योद्धुं पाण्डवान्सर्वयोधाः ।
तेषां मध्ये प्रविशेथा यदि त्वं ; न तन्मतं मम दाशार्ह वीर ॥ ०२५ ॥

तेषां समुपविष्टानां बहूनां दुष्टचेतसाम् ।
कथं मध्यं प्रपद्येथाः शत्रूणां शत्रुकर्शन ॥ ०२६ ॥

सर्वथा त्वं महाबाहो देवैरपि दुरुत्सहः ।
प्रभावं पौरुषं बुद्धिं जानामि तव शत्रुहन् ॥ ०२७ ॥

या मे प्रीतिः पाण्डवेषु भूयः सा त्वयि माधव ।
प्रेम्णा च बहुमानाच्च सौहृदाच्च ब्रवीम्यहम् ॥ ०२८ ॥

# अध्याय ०९१

भगवानुवाच ॥

यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयाद्विचक्षणः ।
यथा वाच्यस्त्वद्विधेन सुहृदा मद्विधः सुहृत् ॥ ००१ ॥

धर्मार्थयुक्तं तथ्यं च यथा त्वय्युपपद्यते ।
तथा वचनमुक्तोऽस्मि त्वयैतत्पितृमातृवत् ॥ ००२ ॥

सत्यं प्राप्तं च युक्तं चाप्येवमेव यथात्थ माम् ।
शृणुष्वागमने हेतुं विदुरावहितो भव ॥ ००३ ॥

दौरात्म्यं धार्तराष्ट्रस्य क्षत्रियाणां च वैरिताम् ।
सर्वमेतदहं जानन्क्षत्तः प्राप्तोऽद्य कौरवान् ॥ ००४ ॥

पर्यस्तां पृथिवीं सर्वां साश्वां सरथकुञ्जराम् ।
यो मोचयेन्मृत्युपाशात्प्राप्नुयाद्धर्ममुत्तमम् ॥ ००५ ॥

धर्मकार्यं यतञ्शक्त्या न चेच्छक्नोति मानवः ।
प्राप्तो भवति तत्पुण्यमत्र मे नास्ति संशयः ॥ ००६ ॥

मनसा चिन्तयन्पापं कर्मणा नाभिरोचयन् ।
न प्राप्नोति फलं तस्य एवं धर्मविदो विदुः ॥ ००७ ॥

सोऽहं यतिष्ये प्रशमं क्षत्तः कर्तुममायया ।
कुरूणां सृञ्जयानां च सङ्ग्रामे विनशिष्यताम् ॥ ००८ ॥

सेयमापन्महाघोरा कुरुष्वेव समुत्थिता ।
कर्णदुर्योधनकृता सर्वे ह्येते तदन्वयाः ॥ ००९ ॥

व्यसनैः क्लिश्यमानं हि यो मित्रं नाभिपद्यते ।
अनुनीय यथाशक्ति तं नृशंसं विदुर्बुधाः ॥ ०१० ॥

आ केशग्रहणान्मित्रमकार्यात्संनिवर्तयन् ।
अवाच्यः कस्यचिद्भवति कृतयत्नो यथाबलम् ॥ ०११ ॥

तत्समर्थं शुभं वाक्यं धर्मार्थसहितं हितम् ।
धार्तराष्ट्रः सहामात्यो ग्रहीतुं विदुरार्हति ॥ ०१२ ॥

हितं हि धार्तराष्ट्राणां पाण्डवानां तथैव च ।
पृथिव्यां क्षत्रियाणां च यतिष्येऽहममायया ॥ ०१३ ॥

हिते प्रयतमानं मां शङ्केद्दुर्योधनो यदि ।
हृदयस्य च मे प्रीतिरानृण्यं च भविष्यति ॥ ०१४ ॥

ज्ञातीनां हि मिथो भेदे यन्मित्रं नाभिपद्यते ।
सर्वयत्नेन मध्यस्थं न तन्मित्रं विदुर्बुधाः ॥ ०१५ ॥

न मां ब्रूयुरधर्मज्ञा मूढा असुहृदस्तथा ।
शक्तो नावारयत्कृष्णः संरब्धान्कुरुपाण्डवान् ॥ ०१६ ॥

उभयोः साधयन्नर्थमहमागत इत्युत ।
तत्र यत्नमहं कृत्वा गच्छेयं नृष्ववाच्यताम् ॥ ०१७ ॥

मम धर्मार्थयुक्तं हि श्रुत्वा वाक्यमनामयम् ।
न चेदादास्यते बालो दिष्टस्य वशमेष्यति ॥ ०१८ ॥

अहापयन्पाण्डवार्थं यथाव ;च्छमं कुरूणां यदि चाचरेयम् ।
पुण्यं च मे स्याच्चरितं महार्थं ; मुच्येरंश्च कुरवो मृत्युपाशात् ॥ ०१९ ॥

अपि वाचं भाषमाणस्य काव्यां ; धर्मारामामर्थवतीमहिंस्राम् ।

अवेक्षेरन्धार्तराष्ट्राः समर्थां ; मां च प्राप्तं कुरवः पूजयेयुः ॥ ०२० ॥

न चापि मम पर्याप्ताः सहिताः सर्वपार्थिवाः ।
क्रुद्धस्य प्रमुखे स्थातुं सिंहस्येवेतरे मृगाः ॥ ०२१ ॥

वैशंपायन उवाच ॥

इत्येवमुक्त्वा वचनं वृष्णीनामृषभस्तदा ।
शयने सुखसंस्पर्शे शिश्ये यदुसुखावहः ॥ ०२२ ॥

---

# अध्याय ०९२

वैशंपायन उवाच ॥

तथा कथयतोरेव तयोर्बुद्धिमतोस्तदा ।
शिवा नक्षत्रसंपन्ना सा व्यतीयाय शर्वरी ॥ ००१ ॥

धर्मार्थकामयुक्ताश्च विचित्रार्थपदाक्षराः ।
श्रृण्वतो विविधा वाचो विदुरस्य महात्मनः ॥ ००२ ॥

कथाभिरनुरूपाभिः कृष्णस्यामिततेजसः ।
अकामस्येव कृष्णस्य सा व्यतीयाय शर्वरी ॥ ००३ ॥

ततस्तु स्वरसंपन्ना बहवः सूतमागधाः ।
शङ्खदुन्दुभिनिर्घोषैः केशवं प्रत्यबोधयन् ॥ ००४ ॥

तत उत्थाय दाशार्ह ऋषभः सर्वसात्वताम् ।

सर्वमावश्यकं चक्रे प्रातःकार्यं जनार्दनः ॥ ००५ ॥

कृतोदकार्यजप्यः स हुताग्निः समलङ्कृतः ।
तत आदित्यमुद्यन्तमुपातिष्ठत माधवः ॥ ००६ ॥

अथ दुर्योधनः कृष्णं शकुनिश्चापि सौबलः ।
संध्यां तिष्ठन्तमभ्येत्य दाशार्हमपराजितम् ॥ ००७ ॥

आचक्षेतां तु कृष्णस्य धृतराष्ट्रं सभागतम् ।
कुरूंश्च भीष्मप्रमुखान्राज्ञः सर्वांश्च पार्थिवान् ॥ ००८ ॥

त्वामर्थयन्ते गोविन्द दिवि शक्रमिवामराः ।
तावभ्यनन्दद्गोविन्दः साम्ना परमवल्गुना ॥ ००९ ॥

ततो विमल आदित्ये ब्राह्मणेभ्यो जनार्दनः ।
ददौ हिरण्यं वासांसि गाश्चाश्वांश्च परंतपः ॥ ०१० ॥

विसृष्टवन्तं रत्नानि दाशार्हमपराजितम् ।
तिष्ठन्तमुपसङ्गम्य ववन्दे सारथिस्तदा ॥ ०११ ॥

तमुपस्थितमाज्ञाय रथं दिव्यं महामनाः ।
महाभ्रघननिर्घोषं सर्वरत्नविभूषितम् ॥ ०१२ ॥

अग्निं प्रदक्षिणं कृत्वा ब्राह्मणांश्च जनार्दनः ।
कौस्तुभं मणिमामुच्य श्रिया परमया ज्वलन् ॥ ०१३ ॥

कुरुभिः संवृतः कृष्णो वृष्णिभिश्चाभिरक्षितः ।
आतिष्ठत रथं शौरिः सर्वयादवनन्दनः ॥ ०१४ ॥

अन्वारुरोह दाशार्हं विदुरः सर्वधर्मवित् ।
सर्वप्राणभृतां श्रेष्ठं सर्वधर्मभृतां वरम् ॥ ०१५ ॥

ततो दुर्योधनः कृष्णं शकुनिश्चापि सौबलः ।
द्वितीयेन रथेनैनमन्वयातां परंतपम् ॥ ०१६ ॥

सात्यकिः कृतवर्मा च वृष्णीनां च महारथाः ।
पृष्ठतोऽनुययुः कृष्णं रथैरश्वैर्गजैरपि ॥ ०१७ ॥

तेषां हेमपरिष्कारा युक्ताः परमवाजिभिः ।
गच्छतां घोषिणश्चित्राश्चारु बभ्राजिरे रथाः ॥ ०१८ ॥

संमृष्टसंसिक्तरजः प्रतिपेदे महापथम् ।
राजर्षिचरितं काले कृष्णो धीमाञ्श्रिया ज्वलन् ॥ ०१९ ॥

ततः प्रयाते दाशार्हे प्रावाद्यन्तैकपुष्कराः ।
शङ्खाश्च दध्मिरे तत्र वाद्यान्यन्यानि यानि च ॥ ०२० ॥

प्रवीराः सर्वलोकस्य युवानः सिंहविक्रमाः ।
परिवार्य रथं शौरेरगच्छन्त परंतपाः ॥ ०२१ ॥

ततोऽन्ये बहुसाहस्रा विचित्राद्भुतवाससः ।
असिप्रासायुधधराः कृष्णस्यासन्पुरःसराः ॥ ०२२ ॥

गजाः परःशतास्तत्र वराश्वाश्वाः सहस्रशः ।
प्रयान्तमन्वयुर्वीरं दाशार्हमपराजितम् ॥ ०२३ ॥

पुरं कुरूणां संवृत्तं द्रष्टुकामं जनार्दनम् ।
सवृद्धबालं सस्त्रीकं रथ्यागतमरिंदमम् ॥ ०२४ ॥

वेदिकापाश्रिताभिश्च समाक्रान्तान्यनेकशः ।
प्रचलन्तीव भारेण योषिद्भिर्भवनान्युत ॥ ०२५ ॥

संपूज्यमानः कुरुभिः संश्रृण्वन्विविधाः कथाः ।
यथार्हं प्रतिसत्कुर्वन्प्रेक्षमाणः शनैर्ययौ ॥ ०२६ ॥

ततः सभां समासाद्य केशवस्यानुयायिनः ।
सशङ्खैर्वेणुनिर्घोषैर्दिशः सर्वा व्यनादयन् ॥ ०२७ ॥

ततः सा समितिः सर्वा राज्ञाममिततेजसाम् ।
संप्राकम्पत हर्षेण कृष्णागमनकाङ्क्षया ॥ ०२८ ॥

ततोऽभ्याशगते कृष्णे समहृष्यन्नराधिपाः ।
श्रुत्वा तं रथनिर्घोषं पर्जन्यनिनदोपमम् ॥ ०२९ ॥

आसाद्य तु सभाद्वारमृषभः सर्वसात्वताम् ।
अवतीर्य रथाच्छौरिः कैलासशिखरोपमात् ॥ ०३० ॥

नगमेघप्रतीकाशां ज्वलन्तीमिव तेजसा ।
महेन्द्रसदनप्रख्यां प्रविवेश सभां ततः ॥ ०३१ ॥

पाणौ गृहीत्वा विदुरं सात्यकिं च महायशाः ।
ज्योतींष्यादित्यवद्राजन्कुरून्प्रच्छादयञ्श्रिया ॥ ०३२ ॥

अग्रतो वासुदेवस्य कर्णदुर्योधनावुभौ ।
वृष्णयः कृतवर्मा च आसन्कृष्णस्य पृष्ठतः ॥ ०३३ ॥

धृतराष्ट्रं पुरस्कृत्य भीष्मद्रोणादयस्ततः ।
आसनेभ्योऽचलन्सर्वे पूजयन्तो जनार्दनम् ॥ ०३४ ॥

अभ्यागच्छति दाशार्हे प्रज्ञाचक्षुर्महामनाः ।
सहैव भीष्मद्रोणाभ्यामुदतिष्ठन्महायशाः ॥ ०३५ ॥

उत्तिष्ठति महाराजे धृतराष्ट्रे जनेश्वरे ।

तानि राजसहस्राणि समुत्तस्थुः समन्ततः ॥ ०३६ ॥

आसनं सर्वतोभद्रं जाम्बूनदपरिष्कृतम् ।
कृष्णार्थे कल्पितं तत्र धृतराष्ट्रस्य शासनात् ॥ ०३७ ॥

स्मयमानस्तु राजानं भीष्मद्रोणौ च माधवः ।
अभ्यभाषत धर्मात्मा राज्ञश्चान्यान्यथावयः ॥ ०३८ ॥

तत्र केशवमानर्चुः सम्यगभ्यागतं सभाम् ।
राजानः पार्थिवाः सर्वे कुरवश्च जनार्दनम् ॥ ०३९ ॥

तत्र तिष्ठन्स दाशार्हो राजमध्ये परंतपः ।
अपश्यदन्तरिक्षस्थानृषीन्परपुरञ्जयः ॥ ०४० ॥

ततस्तानभिसंप्रेक्ष्य नारदप्रमुखानृषीन् ।
अभ्यभाषत दाशार्हो भीष्मं शांतनवं शनैः ॥ ०४१ ॥

पार्थिवीं समितिं द्रष्टुमृषयोऽभ्यागता नृप ।
निमन्त्र्यन्तामासनैश्च सत्कारेण च भूयसा ॥ ०४२ ॥

नैतेष्वनुपविष्टेषु शक्यं केनचिदासितुम् ।
पूजा प्रयुज्यतामाशु मुनीनां भावितात्मनाम् ॥ ०४३ ॥

ऋषीञ्शांतनवो दृष्ट्वा सभाद्वारमुपस्थितान् ।
त्वरमाणस्ततो भृत्यानासनानीत्यचोदयत् ॥ ०४४ ॥

आसनान्यथ मृष्टानि महान्ति विपुलानि च ।
मणिकाञ्चनचित्राणि समाजह्रुस्ततस्ततः ॥ ०४५ ॥

तेषु तत्रोपविष्टेषु गृहीतार्घेषु भारत ।
निषसादासने कृष्णो राजानश्च यथासनम् ॥ ०४६ ॥

दुःशासनः सात्यकये ददावासनमुत्तमम् ।
विविंशतिर्ददौ पीठं काञ्चनं कृतवर्मणे ॥ ०४७ ॥

अविदूरेऽथ कृष्णस्य कर्णदुर्योधनावुभौ ।
एकासने महात्मानौ निषीदतुरमर्षणौ ॥ ०४८ ॥

गान्धारराजः शकुनिर्गान्धारैरभिरक्षितः ।
निषसादासने राजा सहपुत्रो विशां पते ॥ ०४९ ॥

विदुरो मणिपीठे तु शुक्लस्पर्ध्याजिनोत्तरे ।
संस्पृशन्नासनं शौरेर्महामतिरुपाविशत् ॥ ०५० ॥

चिरस्य दृष्ट्वा दाशार्हं राजानः सर्वपार्थिवाः ।
अमृतस्येव नातृप्यन्प्रेक्षमाणा जनार्दनम् ॥ ०५१ ॥

अतसीपुष्पसङ्काशः पीतवासा जनार्दनः ।
व्यभ्राजत सभामध्ये हेम्नीवोपहितो मणिः ॥ ०५२ ॥

ततस्तूष्णीं सर्वमासीद्गोविन्दगतमानसम् ।
न तत्र कश्चित्किञ्चिद्धि व्याजहार पुमान्कचित् ॥ ०५३ ॥

---

# अध्याय ०९३

वैशंपायन उवाच ॥

तेष्वासीनेषु सर्वेषु तूष्णींभूतेषु राजसु ।

वाक्यमभ्याददे कृष्णः सुदंष्ट्रो दुन्दुभिस्वनः ॥ ००१ ॥

जीमूत इव घर्मान्ते सर्वां संश्रावयन्सभाम् ।
धृतराष्ट्रमभिप्रेक्ष्य समभाषत माधवः ॥ ००२ ॥

कुरूणां पाण्डवानां च शमः स्यादिति भारत ।
अप्रयत्नेन वीराणामेतद्यतितुमागतः ॥ ००३ ॥

राजन्नान्यत्प्रवक्तव्यं तव निःश्रेयसं वचः ।
विदितं ह्येव ते सर्वं वेदितव्यमरिंदम ॥ ००४ ॥

इदमद्य कुलं श्रेष्ठं सर्वराजसु पार्थिव ।
श्रुतवृत्तोपसंपन्नं सर्वैः समुदितं गुणैः ॥ ००५ ॥

कृपानुकम्पा कारुण्यमानृशंस्यं च भारत ।
तथार्जवं क्षमा सत्यं कुरुष्वेतद्विशिष्यते ॥ ००६ ॥

तस्मिन्नेवंविधे राजन्कुले महति तिष्ठति ।
त्वन्निमित्तं विशेषेण नेह युक्तमसांप्रतम् ॥ ००७ ॥

त्वं हि वारयिता श्रेष्ठः कुरूणां कुरुसत्तम ।
मिथ्या प्रचरतां तात बाह्येष्वाभ्यन्तरेषु च ॥ ००८ ॥

ते पुत्रास्तव कौरव्य दुर्योधनपुरोगमाः ।
धर्मार्थौ पृष्ठतः कृत्वा प्रचरन्ति नृशंसवत् ॥ ००९ ॥

अशिष्टा गतमर्यादा लोभेन हृतचेतसः ।
स्वेषु बन्धुषु मुख्येषु तद्वेत्थ भरतर्षभ ॥ ०१० ॥

सेयमापन्महाघोरा कुरुष्वेव समुत्थिता ।
उपेक्ष्यमाणा कौरव्य पृथिवीं घातयिष्यति ॥ ०११ ॥

शक्या चेयं शमयितुं त्वं चेदिच्छसि भारत ।
न दुष्करो ह्यत्र शमो मतो मे भरतर्षभ ॥ ०१२ ॥

त्वय्यधीनः शमो राजन्मयि चैव विशां पते ।
पुत्रान्स्थापय कौरव्य स्थापयिष्याम्यहं परान् ॥ ०१३ ॥

आज्ञा तव हि राजेन्द्र कार्या पुत्रैः सहान्वयैः ।
हितं बलवदप्येषां तिष्ठतां तव शासने ॥ ०१४ ॥

तव चैव हितं राजन्पाण्डवानामथो हितम् ।
शमे प्रयतमानस्य मम शासनकाङ्क्षिणाम् ॥ ०१५ ॥

स्वयं निष्फलमालक्ष्य संविधत्स्व विशां पते ।
सहभूतास्तु भरतास्तवैव स्युर्जनेश्वर ॥ ०१६ ॥

धर्मार्थयोस्तिष्ठ राजन्पाण्डवैरभिरक्षितः ।
न हि शक्यास्तथाभूता यत्नादपि नराधिप ॥ ०१७ ॥

न हि त्वां पाण्डवैर्जेतुं रक्ष्यमाणं महात्मभिः ।
इन्द्रोऽपि देवैः सहितः प्रसहेत कुतो नृपाः ॥ ०१८ ॥

यत्र भीष्मश्च द्रोणश्च कृपः कर्णो विविंशतिः ।
अश्वत्थामा विकर्णश्च सोमदत्तोऽथ बाह्लिकः ॥ ०१९ ॥

सैन्धवश्च कलिङ्गश्च काम्बोजश्च सुदक्षिणः ।
युधिष्ठिरो भीमसेनः सव्यसाची यमौ तथा ॥ ०२० ॥

सात्यकिश्च महातेजा युयुत्सुश्च महारथः ।
को नु तान्विपरीतात्मा युध्येत भरतर्षभ ॥ ०२१ ॥

लोकस्येश्वरतां भूयः शत्रुभिश्चाप्रधृष्यताम् ।
प्राप्स्यसि त्वममित्रघ्न सहितः कुरुपाण्डवैः ॥ ०२२ ॥

तस्य ते पृथिवीपालास्त्वत्समाः पृथिवीपते ।
श्रेयांसश्चैव राजानः संधास्यन्ते परंतप ॥ ०२३ ॥

स त्वं पुत्रैश्च पौत्रैश्च भ्रातृभिः पितृभिस्तथा ।
सुहृद्भिः सर्वतो गुप्तः सुखं शक्ष्यसि जीवितुम् ॥ ०२४ ॥

एतानेव पुरोधाय सत्कृत्य च यथा पुरा ।
अखिलां भोक्ष्यसे सर्वां पृथिवीं पृथिवीपते ॥ ०२५ ॥

एतैर्हि सहितः सर्वैः पाण्डवैः स्वैश्च भारत ।
अन्यान्विजेष्यसे शत्रूनेष स्वार्थस्तवाखिलः ॥ ०२६ ॥

तैरेवोपार्जितां भूमिं भोक्ष्यसे च परंतप ।
यदि संपत्स्यसे पुत्रैः सहामात्यैर्नराधिप ॥ ०२७ ॥

संयुगे वै महाराज दृश्यते सुमहान्क्षयः ।
क्षये चोभयतो राजन्कं धर्ममनुपश्यसि ॥ ०२८ ॥

पाण्डवैर्निहतैः संख्ये पुत्रैर्वापि महाबलैः ।
यद्विन्देथाः सुखं राजंस्तद्ब्रूहि भरतर्षभ ॥ ०२९ ॥

शूराश्च हि कृतास्त्राश्च सर्वे युद्धाभिकाङ्क्षिणः ।
पाण्डवास्तावकाश्चैव तान्रक्ष महतो भयात् ॥ ०३० ॥

न पश्येम कुरून्सर्वान्पाण्डवांश्चैव संयुगे ।
क्षीणानुभयतः शूरान्रथेभ्यो रथिभिर्हतान् ॥ ०३१ ॥

समवेताः पृथिव्यां हि राजानो राजसत्तम ।

अमर्षवशमापन्ना नाशयेयुरिमाः प्रजाः ॥ ०३२ ॥

त्राहि राजन्निमं लोकं न नश्येयुरिमाः प्रजाः ।
त्वयि प्रकृतिमापन्ने शेषं स्यात्कुरुनन्दन ॥ ०३३ ॥

शुक्ला वदान्या ह्रीमन्त आर्याः पुण्याभिजातयः ।
अन्योन्यसचिवा राजंस्तान्पाहि महतो भयात् ॥ ०३४ ॥

शिवेनेमे भूमिपालाः समागम्य परस्परम् ।
सह भुक्त्वा च पीत्वा च प्रतियान्तु यथागृहम् ॥ ०३५ ॥

सुवाससः स्रग्विणश्च सत्कृत्य भरतर्षभ ।
अमर्षांश्च निराकृत्य वैराणि च परंतप ॥ ०३६ ॥

हार्दं यत्पाण्डवेष्वासीत्प्राप्तेऽस्मिन्नायुषः क्षये ।
तदेव ते भवत्वद्य शश्वच्च भरतर्षभ ॥ ०३७ ॥

बाला विहीनाः पित्रा ते त्वयैव परिवर्धिताः ।
तान्पालय यथान्यायं पुत्रांश्च भरतर्षभ ॥ ०३८ ॥

भवतैव हि रक्ष्यास्ते व्यसनेषु विशेषतः ।
मा ते धर्मस्तथैवार्थो नश्येत भरतर्षभ ॥ ०३९ ॥

आहुस्त्वां पाण्डवा राजन्नभिवाद्य प्रसाद्य च ।
भवतः शासनाद्दुःखमनुभूतं सहानुगैः ॥ ०४० ॥

द्वादशेमानि वर्षाणि वने निर्व्युषितानि नः ।
त्रयोदशं तथाज्ञातैः सजने परिवत्सरम् ॥ ०४१ ॥

स्थाता नः समये तस्मिन्पितेति कृतनिश्चयाः ।
नाहास्म समयं तात तच्च नो ब्राह्मणा विदुः ॥ ०४२ ॥

तस्मिन्नः समये तिष्ठ स्थितानां भरतर्षभ ।
नित्यं सङ्क्लेशिता राजन्स्वराज्यांशं लभेमहि ॥ ०४३ ॥

त्वं धर्ममर्थं युञ्जानः सम्यङ्नस्त्रातुमर्हसि ।
गुरुत्वं भवति प्रेक्ष्य बहून्क्लेशांस्तितिक्ष्महे ॥ ०४४ ॥

स भवान्मातृपितृवदस्मासु प्रतिपद्यताम् ।
गुरोर्गरीयसी वृत्तिर्या च शिष्यस्य भारत ॥ ०४५ ॥

पित्रा स्थापयितव्या हि वयमुत्पथमास्थिताः ।
संस्थापय पथिष्वस्मांस्तिष्ठ राजन्स्ववर्त्मनि ॥ ०४६ ॥

आहुश्चेमां परिषदं पुत्रास्ते भरतर्षभ ।
धर्मज्ञेषु सभासत्सु नेह युक्तमसांप्रतम् ॥ ०४७ ॥

यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च ।
हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ॥ ०४८ ॥

विद्धो धर्मो ह्यधर्मेण सभां यत्र प्रपद्यते ।
न चास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः ॥ ०४९ ॥

धर्म एतानारुजति यथा नद्यनुकूलजान् ॥ ०४९ ॥

ये धर्ममनुपश्यन्तस्तूष्णीं ध्यायन्त आसते ।
ते सत्यमाहुर्धर्मं च न्याय्यं च भरतर्षभ ॥ ०५० ॥

शक्यं किमन्यद्वक्तुं ते दानादन्यज्जनेश्वर ।
ब्रुवन्तु वा महीपालाः सभायां ये समासते ॥ ०५१ ॥

धर्मार्थौ संप्रधार्यैव यदि सत्यं ब्रवीम्यहम् ॥ ०५१ ॥

प्रमुञ्चेमान्मृत्युपाशात्क्षत्रियान्क्षत्रियर्षभ ।
प्रशाम्य भरतश्रेष्ठ मा मन्युवशमन्वगाः ॥ ०५२ ॥

पित्र्यं तेभ्यः प्रदायांशं पाण्डवेभ्यो यथोचितम् ।
ततः सपुत्रः सिद्धार्थो भुङ्क्ष्व भोगान्परंतप ॥ ०५३ ॥

अजातशत्रुं जानीषे स्थितं धर्मे सतां सदा ।
सपुत्रे त्वयि वृत्तिं च वर्तते यां नराधिप ॥ ०५४ ॥

दाहितश्च निरस्तश्च त्वामेवोपाश्रितः पुनः ।
इन्द्रप्रस्थं त्वयैवासौ सपुत्रेण विवासितः ॥ ०५५ ॥

स तत्र निवसन्सर्वान्वशमानीय पार्थिवान् ।
त्वन्मुखानकरोद्राजन्न च त्वामत्यवर्तत ॥ ०५६ ॥

तस्यैवं वर्तमानस्य सौबलेन जिहीर्षता ।
राष्ट्राणि धनधान्यं च प्रयुक्तः परमोपधिः ॥ ०५७ ॥

स तामवस्थां संप्राप्य कृष्णां प्रेक्ष्य सभागताम् ।
क्षत्रधर्मादमेयात्मा नाकम्पत युधिष्ठिरः ॥ ०५८ ॥

अहं तु तव तेषां च श्रेय इच्छामि भारत ।
धर्मादर्थात्सुखाच्चैव मा राजन्नीनशः प्रजाः ॥ ०५९ ॥

अनर्थमर्थं मन्वाना अर्थं वानर्थमात्मनः ।
लोभेऽतिप्रसृतान्पुत्रान्निगृह्णीष्व विशां पते ॥ ०६० ॥

स्थिताः शुश्रूषितुं पार्थाः स्थिता योद्धुमरिंदमाः ।
यत्ते पथ्यतमं राजंस्तस्मिंस्तिष्ठ परंतप ॥ ०६१ ॥

तद्वाक्यं पार्थिवाः सर्वे हृदयैः समपूजयन् ।
न तत्र कश्चिद्वक्तुं हि वाचं प्राक्रामदग्रतः ॥ ०६२ ॥

---

# अध्याय ०९४

वैशंपायन उवाच ॥

तस्मिन्नभिहिते वाक्ये केशवेन महात्मना ।
स्तिमिता हृष्टरोमाण आसन्सर्वे सभासदः ॥ ००१ ॥

कः स्विदुत्तरमेतस्माद्वक्तुमुत्सहते पुमान् ।
इति सर्वे मनोभिस्ते चिन्तयन्ति स्म पार्थिवाः ॥ ००२ ॥

तथा तेषु च सर्वेषु तूष्णींभूतेषु राजसु ।
जामदग्न्य इदं वाक्यमब्रवीत्कुरुसंसदि ॥ ००३ ॥

इमामेकोपमां राजञ्शृणु सत्यामशङ्कितः ।
तां श्रुत्वा श्रेय आदत्स्व यदि साध्विति मन्यसे ॥ ००४ ॥

राजा दम्भोद्भवो नाम सार्वभौमः पुराभवत् ।
अखिलां बुभुजे सर्वां पृथिवीमिति नः श्रुतम् ॥ ००५ ॥

स स्म नित्यं निशापाये प्रातरुत्थाय वीर्यवान् ।
ब्राह्मणान्क्षत्रियांश्चैव पृच्छन्नास्ते महारथः ॥ ००६ ॥

अस्ति कश्चिद्विशिष्टो वा मद्विधो वा भवेद्युधि ।
शूद्रो वैश्यः क्षत्रियो वा ब्राह्मणो वापि शस्त्रभृत् ॥ ००७ ॥

इति ब्रुवन्नन्वचरत्स राजा पृथिवीमिमाम् ।
दर्पेण महता मत्तः कञ्चिदन्यमचिन्तयन् ॥ ००८ ॥

तं स्म वैद्या अकृपणा ब्राह्मणाः सर्वतोऽभयाः ।
प्रत्यषेधन्त राजानं श्लाघमानं पुनः पुनः ॥ ००९ ॥

प्रतिषिध्यमानोऽप्यसकृत्पृच्छत्येव स वै द्विजान् ।
अभिमानी श्रिया मत्तस्तमूचुर्ब्राह्मणास्तदा ॥ ०१० ॥

तपस्विनो महात्मानो वेदव्रतसमन्विताः ।
उदीर्यमाणं राजानं क्रोधदीप्ता द्विजातयः ॥ ०११ ॥

अनेकजननं सख्यं ययोः पुरुषसिंहयोः ।
तयोस्त्वं न समो राजन्भवितासि कदाचन ॥ ०१२ ॥

एवमुक्तः स राजा तु पुनः पप्रच्छ तान्द्विजान् ।
क्व तौ वीरौ क्वजन्मानौ किङ्कर्माणौ च कौ च तौ ॥ ०१३ ॥

ब्राह्मणा ऊचुः ॥

नरो नारायणश्चैव तापसाविति नः श्रुतम् ।
आयातौ मानुषे लोके ताभ्यां युध्यस्व पार्थिव ॥ ०१४ ॥

श्रूयते तौ महात्मानौ नरनारायणावुभौ ।
तपो घोरमनिर्देश्यं तप्येते गन्धमादने ॥ ०१५ ॥

राम उवाच ॥

स राजा महतीं सेनां योजयित्वा षडङ्गिनीम् ।
अमृष्यमाणः संप्रायाद्यत्र तावपराजितौ ॥ ०१६ ॥

स गत्वा विषमं घोरं पर्वतं गन्धमादनम् ।
मृगयाणोऽन्वगच्छत्तौ तापसावपराजितौ ॥ ०१७ ॥

तौ दृष्ट्वा क्षुत्पिपासाभ्यां कृशौ धमनिसंततौ ।
शीतवातातपैश्चैव कर्शितौ पुरुषोत्तमौ ॥ ०१८ ॥

अभिगम्योपसङ्गृह्य पर्यपृच्छदनामयम् ॥ ०१८ ॥

तमर्चित्वा मूलफलैरासनेनोदकेन च ।
न्यमन्त्रयेतां राजानं किं कार्यं क्रियतामिति ॥ ०१९ ॥

दम्भोद्भव उवाच ॥

बाहुभ्यां मे जिता भूमिर्निहताः सर्वशत्रवः ।
भवद्भ्यां युद्धमाकाङ्क्षन्नुपयातोऽस्मि पर्वतम् ॥ ०२० ॥

आतिथ्यं दीयतामेतत्काङ्क्षितं मे चिरं प्रति ॥ ०२० ॥

नरनारायणावूचतुः ॥

अपेतक्रोधलोभोऽयमाश्रमो राजसत्तम ।
न ह्यस्मिन्नाश्रमे युद्धं कुतः शस्त्रं कुतोऽनृजुः ॥ ०२१ ॥

अन्यत्र युद्धमाकाङ्क्ष बहवः क्षत्रियाः क्षितौ ॥ ०२१ ॥

राम उवाच ॥

उच्यमानस्तथापि स्म भूय एवाभ्यभाषत ।
पुनः पुनः क्षम्यमाणः सान्त्व्यमानश्च भारत ॥ ०२२ ॥

दम्भोद्भवो युद्धमिच्छन्नाह्वयत्येव तापसौ ॥ ०२२ ॥

ततो नरस्त्विषीकाणां मुष्टिमादाय कौरव ।
अब्रवीदेहि युध्यस्व युद्धकामुक क्षत्रिय ॥ ०२३ ॥

सर्वशस्त्राणि चादत्स्व योजयस्व च वाहिनीम् ।
अहं हि ते विनेष्यामि युद्धश्रद्धामितः परम् ॥ ०२४ ॥

दम्भोद्भव उवाच ॥

यद्येतदस्त्रमस्मासु युक्तं तापस मन्यसे ।
एतेनापि त्वया योत्स्ये युद्धार्थी ह्यहमागतः ॥ ०२५ ॥

राम उवाच ॥

इत्युक्त्वा शरवर्षेण सर्वतः समवाकिरत् ।
दम्भोद्भवस्तापसं तं जिघांसुः सहसैनिकः ॥ ०२६ ॥

तस्य तानस्यतो घोरानिषून्परतनुच्छिदः ।
कदर्थीकृत्य स मुनिरिषीकाभिरपानुदत् ॥ ०२७ ॥

ततोऽस्मै प्रासृजद्घोरमैषीकमपराजितः ।
अस्त्रमप्रतिसंधेयं तदद्भुतमिवाभवत् ॥ ०२८ ॥

तेषामक्षीणि कर्णांश्च नस्तकांश्चैव मायया ।
निमित्तवेधी स मुनिरिषीकाभिः समर्पयत् ॥ ०२९ ॥

स दृष्ट्वा श्वेतमाकाशमिषीकाभिः समाचितम् ।
पादयोर्न्यपतद्राजा स्वस्ति मेऽस्त्विति चाब्रवीत् ॥ ०३० ॥

तमब्रवीन्नरो राजञ्शरण्यः शरणैषिणाम् ।
ब्रह्मण्यो भव धर्मात्मा मा च स्मैवं पुनः कृथाः ॥ ०३१ ॥

मा च दर्पसमाविष्टः क्षेप्सीः कांश्चित्कदाचन ।
अल्पीयांसं विशिष्टं वा तत्ते राजन्परं हितम्  ॥ ०३२  ॥

कृतप्रज्ञो वीतलोभो निरहङ्कार आत्मवान् ।
दान्तः क्षान्तो मृदुः क्षेमः प्रजाः पालय पार्थिव  ॥ ०३३  ॥

अनुज्ञातः स्वस्ति गच्छ मैवं भूयः समाचरेः ।
कुशलं ब्राह्मणान्पृच्छेरावयोर्वचनाद्भृशम्  ॥ ०३४  ॥

ततो राजा तयोः पादावभिवाद्य महात्मनोः ।
प्रत्याजगाम स्वपुरं धर्मं चैवाचिनोद्भृशम्  ॥ ०३५  ॥

सुमहच्चापि तत्कर्म यन्नरेण कृतं पुरा ।
ततो गुणैः सुबहुभिः श्रेष्ठो नारायणोऽभवत्  ॥ ०३६  ॥

तस्माद्यावद्धनुःश्रेष्ठे गाण्डीवेऽस्त्रं न युज्यते ।
तावत्त्वं मानमुत्सृज्य गच्छ राजन्धनञ्जयम्  ॥ ०३७  ॥

काकुदीकं शुकं नाकमक्षिसंतर्जनं तथा ।
संतानं नर्तनं घोरमास्यमोदकमष्टमम्  ॥ ०३८  ॥

एतैर्विद्धाः सर्व एव मरणं यान्ति मानवाः ।
उन्मत्ताश्च विचेष्टन्ते नष्टसञ्ज्ञा विचेतसः  ॥ ०३९  ॥

स्वपन्ते च प्लवन्ते च छर्दयन्ति च मानवाः ।
मूत्रयन्ते च सततं रुदन्ति च हसन्ति च  ॥ ०४०  ॥

असंख्येया गुणाः पार्थे तद्विशिष्टो जनार्दनः ।
त्वमेव भूयो जानासि कुन्तीपुत्रं धनञ्जयम्  ॥ ०४१  ॥

नरनारायणौ यौ तौ तावेवार्जुनकेशवौ ।
विजानीहि महाराज प्रवीरौ पुरुषर्षभौ ॥ ०४२ ॥

यद्येतदेवं जानासि न च मामतिशङ्कसे ।
आर्यां मतिं समास्थाय शाम्य भारत पाण्डवैः ॥ ०४३ ॥

अथ चेन्मन्यसे श्रेयो न मे भेदो भवेदिति ।
प्रशाम्य भरतश्रेष्ठ मा च युद्धे मनः कृथाः ॥ ०४४ ॥

भवतां च कुरुश्रेष्ठ कुलं बहुमतं भुवि ।
तत्तथैवास्तु भद्रं ते स्वार्थमेवानुचिन्तय ॥ ०४५ ॥

---

# अध्याय ०९५

वैशंपायन उवाच ॥

जामदग्न्यवचः श्रुत्वा कण्वोऽपि भगवानृषिः ।
दुर्योधनमिदं वाक्यमब्रवीत्कुरुसंसदि ॥ ००१ ॥

अक्षयश्चाव्ययश्चैव ब्रह्मा लोकपितामहः ।
तथैव भगवन्तौ तौ नरनारायणावृषी ॥ ००२ ॥

आदित्यानां हि सर्वेषां विष्णुरेकः सनातनः ।
अजय्यश्चाव्ययश्चैव शाश्वतः प्रभुरीश्वरः ॥ ००३ ॥

निमित्तमरणास्त्वन्ये चन्द्रसूर्यौ मही जलम् ।
वायुरग्निस्तथाकाशं ग्रहास्तारागणास्तथा ॥ ००४ ॥

ते च क्षयान्ते जगतो हित्वा लोकत्रयं सदा ।
क्षयं गच्छन्ति वै सर्वे सृज्यन्ते च पुनः पुनः ॥ ००५ ॥

मुहूर्तमरणास्त्वन्ये मानुषा मृगपक्षिणः ।
तिर्यग्योन्यश्च ये चान्ये जीवलोकचराः स्मृताः ॥ ००६ ॥

भूयिष्ठेन तु राजानः श्रियं भुक्त्वायुषः क्षये ।
मरणं प्रतिगच्छन्ति भोक्तुं सुकृतदुष्कृतम् ॥ ००७ ॥

स भवान्धर्मपुत्रेण शमं कर्तुमिहार्हति ।
पाण्डवाः कुरवश्चैव पालयन्तु वसुंधराम् ॥ ००८ ॥

बलवानहमित्येव न मन्तव्यं सुयोधन ।
बलवन्तो हि बलिभिर्दृश्यन्ते पुरुषर्षभ ॥ ००९ ॥

न बलं बलिनां मध्ये बलं भवति कौरव ।
बलवन्तो हि ते सर्वे पाण्डवा देवविक्रमाः ॥ ०१० ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मातलेर्दातुकामस्य कन्यां मृगयतो वरम् ॥ ०११ ॥

मतस्त्रैलोक्यराजस्य मातलिर्नाम सारथिः ।
तस्यैकैव कुले कन्या रूपतो लोकविश्रुता ॥ ०१२ ॥

गुणकेशीति विख्याता नाम्ना सा देवरूपिणी ।
श्रिया च वपुषा चैव स्त्रियोऽन्याः सातिरिच्यते ॥ ०१३ ॥

तस्याः प्रदानसमयं मातलिः सह भार्यया ।
ज्ञात्वा विममृशे राजंस्तत्परः परिचिन्तयन् ॥ ०१४ ॥

धिक्खल्वलघुशीलानामुच्छ्रितानां यशस्विनाम् ।

नराणामृद्धसत्त्वानां कुले कन्याप्ररोहणम् ॥ ०१५ ॥

मातुः कुलं पितृकुलं यत्र चैव प्रदीयते ।
कुलत्रयं संशयितं कुरुते कन्यका सताम् ॥ ०१६ ॥

देवमानुषलोकौ द्वौ मानसेनैव चक्षुषा ।
अवगाह्यैव विचितौ न च मे रोचते वरः ॥ ०१७ ॥

न देवान्नैव दितिजान्न गन्धर्वान्न मानुषान् ।
अरोचयं वरकृते तथैव बहुलानृषीन् ॥ ०१८ ॥

भार्यया तु स संमन्त्र्य सह रात्रौ सुधर्मया ।
मातलिर्नागलोकाय चकार गमने मतिम् ॥ ०१९ ॥

न मे देवमनुष्येषु गुणकेश्याः समो वरः ।
रूपतो दृश्यते कश्चिन्नागेषु भविता ध्रुवम् ॥ ०२० ॥

इत्यामन्त्र्य सुधर्मां स कृत्वा चाभिप्रदक्षिणम् ।
कन्यां शिरस्युपाघ्राय प्रविवेश महीतलम् ॥ ०२१ ॥

---

# अध्याय ०९६

कण्व उवाच ॥

मातलिस्तु व्रजन्मार्गे नारदेन महर्षिणा ।
वरुणं गच्छता द्रष्टुं समागच्छद्यदृच्छया ॥ ००१ ॥

नारदोऽथाब्रवीदेनं क्व भवान्गन्तुमुद्यतः ।

स्वेन वा सूत कार्येण शासनाद्वा शतक्रतोः ॥ ००२ ॥

मातलिर्नारदेनैवं संपृष्टः पथि गच्छता ।
यथावत्सर्वमाचष्ट स्वकार्यं वरुणं प्रति ॥ ००३ ॥

तमुवाचाथ स मुनिर्गच्छावः सहिताविति ।
सलिलेशदिदृक्षार्थमहमप्युद्यतो दिवः ॥ ००४ ॥

अहं ते सर्वमाख्यास्ये दर्शयन्वसुधातलम् ।
दृष्ट्वा तत्र वरं कञ्चिद्रोचयिष्याव मातले ॥ ००५ ॥

अवगाह्य ततो भूमिमुभौ मातलिनारदौ ।
ददृशाते महात्मानौ लोकपालमपां पतिम् ॥ ००६ ॥

तत्र देवर्षिसदृशीं पूजां प्राप स नारदः ।
महेन्द्रसदृशीं चैव मातलिः प्रत्यपद्यत ॥ ००७ ॥

तावुभौ प्रीतमनसौ कार्यवत्तां निवेद्य ह ।
वरुणेनाभ्यनुज्ञातौ नागलोकं विचेरतुः ॥ ००८ ॥

नारदः सर्वभूतानामन्तर्भूमिनिवासिनाम् ।
जानंश्चकार व्याख्यानं यन्तुः सर्वमशेषतः ॥ ००९ ॥

नारद उवाच ॥

दृष्टस्ते वरुणस्तात पुत्रपौत्रसमावृतः ।
पश्योदकपतेः स्थानं सर्वतोभद्रमृद्धिमत् ॥ ०१० ॥

एष पुत्रो महाप्राज्ञो वरुणस्येह गोपतेः ।
एष तं शीलवृत्तेन शौचेन च विशिष्यते ॥ ०११ ॥

एषोऽस्य पुत्रोऽभिमतः पुष्करः पुष्करेक्षणः ।
रूपवान्दर्शनीयश्च सोमपुत्र्या वृतः पतिः ॥ ०१२ ॥

ज्योत्स्नाकालीति यामाहुर्द्वितीयां रूपतः श्रियम् ।
आदित्यस्यैव गोः पुत्रो ज्येष्ठः पुत्रः कृतः स्मृतः ॥ ०१३ ॥

भवनं पश्य वारुण्या यदेतत्सर्वकाञ्चनम् ।
यां प्राप्य सुरतां प्राप्ताः सुराः सुरपतेः सखे ॥ ०१४ ॥

एतानि हृतराज्यानां दैतेयानां स्म मातले ।
दीप्यमानानि दृश्यन्ते सर्वप्रहरणान्युत ॥ ०१५ ॥

अक्षयाणि किलैतानि विवर्तन्ते स्म मातले ।
अनुभावप्रयुक्तानि सुरैरवजितानि ह ॥ ०१६ ॥

अत्र राक्षसजात्यश्च भूतजात्यश्च मातले ।
दिव्यप्रहरणाश्चासन्पूर्वदैवतनिर्मिताः ॥ ०१७ ॥

अग्निरेष महार्चिष्माञ्जागर्ति वरुणह्रदे ।
वैष्णवं चक्रमाविद्धं विधूमेन हविष्मता ॥ ०१८ ॥

एष गाण्डीमयश्चापो लोकसंहारसंभृतः ।
रक्ष्यते दैवतैर्नित्यं यतस्तद्गाण्डिवं धनुः ॥ ०१९ ॥

एष कृत्ये समुत्पन्ने तत्तद्धारयते बलम् ।
सहस्रशतसंख्येन प्राणेन सततं ध्रुवम् ॥ ०२० ॥

अशास्यानपि शास्त्येष रक्षोबन्धुषु राजसु ।
सृष्टः प्रथमजो दण्डो ब्रह्मणा ब्रह्मवादिना ॥ ०२१ ॥

एतच्छत्रं नरेन्द्राणां महच्छक्रेण भाषितम् ।

पुत्राः सलिलराजस्य धारयन्ति महोदयम् ॥ ०२२ ॥

एतत्सलिलराजस्य छत्रं छत्रगृहे स्थितम् ।
सर्वतः सलिलं शीतं जीमूत इव वर्षति ॥ ०२३ ॥

एतच्छत्रात्परिभ्रष्टं सलिलं सोमनिर्मलम् ।
तमसा मूर्छितं याति येन नार्छति दर्शनम् ॥ ०२४ ॥

बह्नन्यद्भुतरूपाणि द्रष्टव्यानीह मातले ।
तव कार्योपरोधस्तु तस्माद्गच्छाव माचिरम् ॥ ०२५ ॥

---

# अध्याय ०९७

नारद उवाच ॥

एतत्तु नागलोकस्य नाभिस्थाने स्थितं पुरम् ।
पातालमिति विख्यातं दैत्यदानवसेवितम् ॥ ००१ ॥

इदमद्भिः समं प्राप्ता ये केचिद्ध्रुवजङ्गमाः ।
प्रविशन्तो महानादं नदन्ति भयपीडिताः ॥ ००२ ॥

अत्रासुरोऽग्निः सततं दीप्यते वारिभोजनः ।
व्यापारेण धृतात्मानं निबद्धं समबुध्यत ॥ ००३ ॥

अत्रामृतं सुरैः पीत्वा निहितं निहतारिभिः ।
अतः सोमस्य हानिश्च वृद्धिश्चैव प्रदृश्यते ॥ ००४ ॥

अत्र दिव्यं हयशिरः काले पर्वणि पर्वणि ।
उत्तिष्ठति सुवर्णाभं वार्भिरापूरयञ्जगत्  ॥ ००५  ॥

यस्मादत्र समग्रास्ताः पतन्ति जलमूर्तयः ।
तस्मात्पातालमित्येतत्ख्यायते पुरमुत्तमम्  ॥ ००६  ॥

ऐरावतोऽस्मात्सलिलं गृहीत्वा जगतो हितः ।
मेघेष्वामुञ्चते शीतं यन्महेन्द्रः प्रवर्षति  ॥ ००७  ॥

अत्र नानाविधाकारास्तिमयो नैकरूपिणः ।
अप्सु सोमप्रभां पीत्वा वसन्ति जलचारिणः  ॥ ००८  ॥

अत्र सूर्यांशुभिर्भिन्नाः पातालतलमाश्रिताः ।
मृता दिवसतः सूत पुनर्जीवन्ति ते निशि  ॥ ००९  ॥

उदये नित्यशश्चात्र चन्द्रमा रश्मिभिर्वृतः ।
अमृतं स्पृश्य संस्पर्शात्सञ्जीवयति देहिनः  ॥ ०१०  ॥

अत्र तेऽधर्मनिरता बद्धाः कालेन पीडिताः ।
दैतेया निवसन्ति स्म वासवेन हृतश्रियः  ॥ ०११  ॥

अत्र भूतपतिर्नाम सर्वभूतमहेश्वरः ।
भूतये सर्वभूतानामचरत्तप उत्तमम्  ॥ ०१२  ॥

अत्र गोव्रतिनो विप्राः स्वाध्यायाम्नायकर्शिताः ।
त्यक्तप्राणा जितस्वर्गा निवसन्ति महर्षयः  ॥ ०१३  ॥

यत्रतत्रशयो नित्यं येनकेनचिदाशितः ।
येनकेनचिदाच्छन्नः स गोव्रत इहोच्यते  ॥ ०१४  ॥

ऐरावतो नागराजो वामनः कुमुदोऽञ्जनः ।

प्रसूताः सुप्रतीकस्य वंशे वारणसत्तमाः ॥ ०१५ ॥

पश्य यद्यत्र ते कश्चिद्रोचते गुणतो वरः ।
वरयिष्याव तं गत्वा यत्नमास्थाय मातले ॥ ०१६ ॥

अण्डमेतज्जले न्यस्तं दीप्यमानमिव श्रिया ।
आ प्रजानां निसर्गाद्वै नोद्भिद्यति न सर्पति ॥ ०१७ ॥

नास्य जातिं निसर्गं वा कथ्यमानं शृणोमि वै ।
पितरं मातरं वापि नास्य जानाति कश्चन ॥ ०१८ ॥

अतः किल महानग्निरन्तकाले समुत्थितः ।
धक्ष्यते मातले सर्वं त्रैलोक्यं सचराचरम् ॥ ०१९ ॥

कण्व उवाच ॥

मातलिस्त्वब्रवीच्छ्रुत्वा नारदस्याथ भाषितम् ।
न मेऽत्र रोचते कश्चिदन्यतो व्रज माचिरम् ॥ ०२० ॥

---

# अध्याय ०९८

नारद उवाच ॥

हिरण्यपुरमित्येतत्ख्यातं पुरवरं महत् ।
दैत्यानां दानवानां च मायाशतविचारिणाम् ॥ ००१ ॥

अनल्पेन प्रयत्नेन निर्मितं विश्वकर्मणा ।
मयेन मनसा सृष्टं पातालतलमाश्रितम् ॥ ००२ ॥

अत्र मायासहस्राणि विकुर्वाणा महौजसः ।
दानवा निवसन्ति स्म शूरा दत्तवराः पुरा ॥ ००३ ॥

नैते शक्रेण नान्येन वरुणेन यमेन वा ।
शक्यन्ते वशमानेतुं तथैव धनदेन च ॥ ००४ ॥

असुराः कालखञ्जाश्च तथा विष्णुपदोद्भवाः ।
नैरृता यातुधानाश्च ब्रह्मवेदोद्भवाश्च ये ॥ ००५ ॥

दंष्ट्रिणो भीमरूपाश्च निवसन्त्यात्मरक्षिणः ।
मायावीर्योपसंपन्ना निवसन्त्यात्मरक्षिणः ॥ ००६ ॥

निवातकवचा नाम दानवा युद्धदुर्मदाः ।
जानासि च यथा शक्रो नैताञ्शक्नोति बाधितुम् ॥ ००७ ॥

बहुशो मातले त्वं च तव पुत्रश्च गोमुखः ।
निर्भग्नो देवराजश्च सहपुत्रः शचीपतिः ॥ ००८ ॥

पश्य वेश्मानि रौक्माणि मातले राजतानि च ।
कर्मणा विधियुक्तेन युक्तान्युपगतानि च ॥ ००९ ॥

वैडूर्यहरितानीव प्रवालरुचिराणि च ।
अर्कस्फटिकशुभ्राणि वज्रसारोज्ज्वलानि च ॥ ०१० ॥

पार्थिवानीव चाभान्ति पुनर्नगमयानि च ।
शैलानीव च दृश्यन्ते तारकाणीव चाप्युत ॥ ०११ ॥

सूर्यरूपाणि चाभान्ति दीप्ताग्निसदृशानि च ।
मणिजालविचित्राणि प्रांशूनि निबिडानि च ॥ ०१२ ॥

नैतानि शक्यं निर्देष्टुं रूपतो द्रव्यतस्तथा ।
गुणतश्चैव सिद्धानि प्रमाणगुणवन्ति च ॥ ०१३ ॥

आक्रीडान्पश्य दैत्यानां तथैव शयनान्युत ।
रत्नवन्ति महार्हाणि भाजनान्यासनानि च ॥ ०१४ ॥

जलदाभांस्तथा शैलांस्तोयप्रस्रवणान्वितान् ।
कामपुष्पफलांश्चैव पादपान्कामचारिणः ॥ ०१५ ॥

मातले कश्चिदत्रापि रुचितस्ते वरो भवेत् ।
अथ वान्यां दिशं भूमेर्गच्छाव यदि मन्यसे ॥ ०१६ ॥

कण्व उवाच ॥

मातलिस्त्वब्रवीदेनं भाषमाणं तथाविधम् ।
देवर्षे नैव मे कार्यं विप्रियं त्रिदिवौकसाम् ॥ ०१७ ॥

नित्यानुषक्तवैरा हि भ्रातरो देवदानवाः ।
अरिपक्षेण संबन्धं रोचयिष्याम्यहं कथम् ॥ ०१८ ॥

अन्यत्र साधु गच्छावो द्रष्टुं नार्हामि दानवान् ।
जानामि तु तथात्मानं दित्सात्मकमलं यथा ॥ ०१९ ॥

---

# अध्याय ०९९

नारद उवाच ॥

अयं लोकः सुपर्णानां पक्षिणां पन्नगाशिनाम् ।

विक्रमे गमने भारे नैषामस्ति परिश्रमः ॥ ००१ ॥

वैनतेयसुतैः सूत षड्भिस्ततमिदं कुलम् ।
सुमुखेन सुनाम्ना च सुनेत्रेण सुवर्चसा ॥ ००२ ॥

सुरूपपक्षिराजेन सुबलेन च मातले ।
वर्धितानि प्रसूत्या वै विनताकुलकर्तृभिः ॥ ००३ ॥

पक्षिराजाभिजात्यानां सहस्राणि शतानि च ।
कश्यपस्य ततो वंशे जातैर्भूतिविवर्धनैः ॥ ००४ ॥

सर्वे ह्येते श्रिया युक्ताः सर्वे श्रीवत्सलक्षणाः ।
सर्वे श्रियमभीप्सन्तो धारयन्ति बलान्युत ॥ ००५ ॥

कर्मणा क्षत्रियाश्चैते निर्घृणा भोगिभोजिनः ।
ज्ञातिसङ्क्षयकर्तृत्वाद्ब्राह्मण्यं न लभन्ति वै ॥ ००६ ॥

नामानि चैषां वक्ष्यामि यथा प्राधान्यतः शृणु ।
मातले श्लाघ्यमेतद्धि कुलं विष्णुपरिग्रहम् ॥ ००७ ॥

दैवतं विष्णुरेतेषां विष्णुरेव परायणम् ।
हृदि चैषां सदा विष्णुर्विष्णुरेव गतिः सदा ॥ ००८ ॥

सुवर्णचूडो नागाशी दारुणश्चण्डतुण्डकः ।
अनलश्चानिलश्चैव विशालाक्षोऽथ कुण्डली ॥ ००९ ॥

काश्यपिर्ध्वजविष्कम्भो वैनतेयोऽथ वामनः ।
वातवेगो दिशाचक्षुर्निमेषो निमिषस्तथा ॥ ०१० ॥

त्रिवारः सप्तवारश्च वाल्मीकिर्द्वीपकस्तथा ।
दैत्यद्वीपः सरिद्वीपः सारसः पद्मकेसरः ॥ ०११ ॥

सुमुखः सुखकेतुश्च चित्रबर्हस्तथानघः ।
मेघकृत्कुमुदो दक्षः सर्पान्तः सोमभोजनः ॥ ०१२ ॥

गुरुभारः कपोतश्च सूर्यनेत्रश्चिरान्तकः ।
विष्णुधन्वा कुमारश्च परिबर्हो हरिस्तथा ॥ ०१३ ॥

सुस्वरो मधुपर्कश्च हेमवर्णस्तथैव च ।
मलयो मातरिश्वा च निशाकरदिवाकरौ ॥ ०१४ ॥

एते प्रदेशमात्रेण मयोक्ता गरुडात्मजाः ।
प्राधान्यतोऽथ यशसा कीर्तिताः प्राणतश्च ते ॥ ०१५ ॥

यद्यत्र न रुचिः काचिदेहि गच्छाव मातले ।
तं नयिष्यामि देशं त्वां रुचिं यत्रोपलप्स्यसे ॥ ०१६ ॥

---

# अध्याय १००

नारद उवाच ॥

इदं रसातलं नाम सप्तमं पृथिवीतलम् ।
यत्रास्ते सुरभिर्माता गवाममृतसंभवा ॥ ००१ ॥

क्षरन्ती सततं क्षीरं पृथिवीसारसंभवम् ।
षण्णां रसानां सारेण रसमेकमनुत्तमम् ॥ ००२ ॥

अमृतेनाभितृप्तस्य सारमुद्गिरतः पुरा ।
पितामहस्य वदनादुदतिष्ठदनिन्दिता ॥ ००३ ॥

यस्याः क्षीरस्य धाराया निपतन्त्या महीतले ।
ह्रदः कृतः क्षीरनिधिः पवित्रं परमुत्तमम्  ॥ ००४  ॥

पुष्पितस्येव फेनस्य पर्यन्तमनुवेष्टितम् ।
पिबन्तो निवसन्त्यत्र फेनपा मुनिसत्तमाः  ॥ ००५  ॥

फेनपा नाम नाम्ना ते फेनाहाराश्च मातले ।
उग्रे तपसि वर्तन्ते येषां बिभ्यति देवताः  ॥ ००६  ॥

अस्याश्चतस्रो धेन्वोऽन्या दिक्षु सर्वासु मातले ।
निवसन्ति दिशापाल्यो धारयन्त्यो दिशः स्मृताः  ॥ ००७  ॥

पूर्वां दिशं धारयते सुरूपा नाम सौरभी ।
दक्षिणां हंसका नाम धारयत्यपरां दिशम्  ॥ ००८  ॥

पश्चिमा वारुणी दिक्क धार्यते वै सुभद्रया ।
महानुभावया नित्यं मातले विश्वरूपया  ॥ ००९  ॥

सर्वकामदुघा नाम धेनुर्धारयते दिशम् ।
उत्तरां मातले धर्म्यां तथैलविलसञ्ज्ञिताम्  ॥ ०१०  ॥

आसां तु पयसा मिश्रं पयो निर्मथ्य सागरे ।
मन्थानं मन्दरं कृत्वा देवैरसुरसंहितैः  ॥ ०११  ॥

उद्धृता वारुणी लक्ष्मीरमृतं चापि मातले ।
उच्चैःश्रवाश्चाश्वराजो मणिरत्नं च कौस्तुभम्  ॥ ०१२  ॥

सुधाहारेषु च सुधां स्वधाभोजिषु च स्वधाम् ।
अमृतं चामृताशेषु सुरभिः क्षरते पयः  ॥ ०१३  ॥

अत्र गाथा पुरा गीता रसातलनिवासिभिः ।
पौराणी श्रूयते लोके गीयते या मनीषिभिः ॥ ०१४ ॥

न नागलोके न स्वर्गे न विमाने त्रिविष्टपे ।
परिवासः सुखस्तादृग्रसातलतले यथा ॥ ०१५ ॥

---

# अध्याय १०१

नारद उवाच ॥

इयं भोगवती नाम पुरी वासुकिपालिता ।
यादृशी देवराजस्य पुरीवर्यामरावती ॥ ००१ ॥

एष शेषः स्थितो नागो येनेयं धार्यते सदा ।
तपसा लोकमुख्येन प्रभावमहता मही ॥ ००२ ॥

श्वेतोच्चयनिभाकारो नानाविधविभूषणः ।
सहस्रं धारयन्मूर्ध्ना ज्वालाजिह्वो महाबलः ॥ ००३ ॥

इह नानाविधाकारा नानाविधविभूषणाः ।
सुरसायाः सुता नागा निवसन्ति गतव्यथाः ॥ ००४ ॥

मणिस्वस्तिकचक्राङ्काः कमण्डलुकलक्षणाः ।
सहस्रसंख्या बलिनः सर्वे रौद्राः स्वभावतः ॥ ००५ ॥

सहस्रशिरसः केचित्केचित्पञ्चशताननाः ।
शतशीर्षास्तथा केचित्केचित्त्रिशिरसोऽपि च ॥ ००६ ॥

द्विपञ्चशिरसः केचित्केचित्सप्तमुखास्तथा ।
महाभोगा महाकायाः पर्वताभोगभोगिनः ॥ ००७ ॥

बहूनीह सहस्राणि प्रयुतान्यर्बुदानि च ।
नागानामेकवंशानां यथाश्रेष्ठांस्तु मे शृणु ॥ ००८ ॥

वासुकिस्तक्षकश्चैव कर्कोटकधनञ्जयौ ।
कालीयो नहुषश्चैव कम्बलाश्वतरावुभौ ॥ ००९ ॥

बाह्यकुण्डो मणिर्नागस्तथैवापूरणः खगः ।
वामनश्चैलपत्रश्च कुकुरः कुकुणस्तथा ॥ ०१० ॥

आर्यको नन्दकश्चैव तथा कलशपोतकौ ।
कैलासकः पिञ्जरको नागश्चैरावतस्तथा ॥ ०११ ॥

सुमनोमुखो दधिमुखः शङ्खो नन्दोपनन्दकौ ।
आप्तः कोटनकश्चैव शिखी निष्ठूरिकस्तथा ॥ ०१२ ॥

तित्तिरिर्हस्तिभद्रश्च कुमुदो माल्यपिण्डकः ।
द्वौ पद्मौ पुण्डरीकश्च पुष्पो मुद्गरपर्णकः ॥ ०१३ ॥

करवीरः पीठरकः संवृत्तो वृत्त एव च ।
पिण्डारो बिल्वपत्रश्च मूषिकादः शिरीषकः ॥ ०१४ ॥

दिलीपः शङ्खशीर्षश्च ज्योतिष्कोऽथापराजितः ।
कौरव्यो धृतराष्ट्रश्च कुमारः कुशकस्तथा ॥ ०१५ ॥

विरजा धारणश्चैव सुबाहुर्मुखरो जयः ।
बधिरान्धौ विकुण्डश्च विरसः सुरसस्तथा ॥ ०१६ ॥

एते चान्ये च बहवः कश्यपस्यात्मजाः स्मृताः ।

मातले पश्य यद्यत्र कश्चित्ते रोचते वरः ॥ ०१७ ॥

कण्व उवाच ॥

मातलिस्त्वेकमव्यग्रः सततं संनिरीक्ष्य वै ।
पप्रच्छ नारदं तत्र प्रीतिमानिव चाभवत् ॥ ०१८ ॥

स्थितो य एष पुरतः कौरव्यस्यार्यकस्य च ।
द्युतिमान्दर्शनीयश्च कस्यैष कुलनन्दनः ॥ ०१९ ॥

कः पिता जननी चास्य कतमस्यैष भोगिनः ।
वंशस्य कस्यैष महान्केतुभूत इव स्थितः ॥ ०२० ॥

प्रणिधानेन धैर्येण रूपेण वयसा च मे ।
मनः प्रविष्टो देवर्षे गुणकेश्याः पतिर्वरः ॥ ०२१ ॥

मातलिं प्रीतिमनसं दृष्ट्वा सुमुखदर्शनात् ।
निवेदयामास तदा माहात्म्यं जन्म कर्म च ॥ ०२२ ॥

ऐरावतकुले जातः सुमुखो नाम नागराट् ।
आर्यकस्य मतः पौत्रो दौहित्रो वामनस्य च ॥ ०२३ ॥

एतस्य हि पिता नागश्चिकुरो नाम मातले ।
नचिराद्वैनतेयेन पञ्चत्वमुपपादितः ॥ ०२४ ॥

ततोऽब्रवीत्प्रीतमना मातलिर्नारदं वचः ।
एष मे रुचितस्तात जामाता भुजगोत्तमः ॥ ०२५ ॥

क्रियतामत्र यत्नो हि प्रीतिमानस्म्यनेन वै ।
अस्य नागपतेर्दातुं प्रियां दुहितरं मुने ॥ ०२६ ॥

# अध्याय १०२

नारद उवाच ॥

सूतोऽयं मातलिर्नाम शक्रस्य दयितः सुहृत् ।
शुचिः शीलगुणोपेतस्तेजस्वी वीर्यवान्बली ॥ ००१ ॥

शक्रस्यायं सखा चैव मन्त्री सारथिरेव च ।
अल्पान्तरप्रभावश्च वासवेन रणे रणे ॥ ००२ ॥

अयं हरिसहस्रेण युक्तं जैत्रं रथोत्तमम् ।
देवासुरेषु युद्धेषु मनसैव नियच्छति ॥ ००३ ॥

अनेन विजितानश्वैर्दोर्भ्यां जयति वासवः ।
अनेन प्रहृते पूर्वं बलभित्प्रहरत्युत ॥ ००४ ॥

अस्य कन्या वरारोहा रूपेणासदृशी भुवि ।
सत्त्वशीलगुणोपेता गुणकेशीति विश्रुता ॥ ००५ ॥

तस्यास्य यत्नाच्चरतस्त्रैलोक्यममरद्युते ।
सुमुखो भवतः पौत्रो रोचते दुहितुः पतिः ॥ ००६ ॥

यदि ते रोचते सौम्य भुजगोत्तम माचिरम् ।
क्रियतामार्यक क्षिप्रं बुद्धिः कन्याप्रतिग्रहे ॥ ००७ ॥

यथा विष्णुकुले लक्ष्मीर्यथा स्वाहा विभावसोः ।
कुले तव तथैवास्तु गुणकेशी सुमध्यमा ॥ ००८ ॥

पौत्रस्यार्थे भवांस्तस्माद्गुणकेशीं प्रतीच्छतु ।
सदृशीं प्रतिरूपस्य वासवस्य शचीमिव ॥ ००९ ॥

पितृहीनमपि ह्येनं गुणतो वरयामहे ।
बहुमानाच्च भवतस्तथैवैरावतस्य च ॥ ०१० ॥

सुमुखस्य गुणैश्चैव शीलशौचदमादिभिः ॥ ०१० ॥

अभिगम्य स्वयं कन्यामयं दातुं समुद्यतः ।
मातलेस्तस्य संमानं कर्तुमर्हो भवानपि ॥ ०११ ॥

कण्व उवाच ॥

स तु दीनः प्रहृष्टश्च प्राह नारदमार्यकः ।
व्रियमाणे तथा पौत्रे पुत्रे च निधनं गते ॥ ०१२ ॥

न मे नैतद्बहुमतं देवर्षे वचनं तव ।
सखा शक्रस्य संयुक्तः कस्यायं नेप्सितो भवेत् ॥ ०१३ ॥

कारणस्य तु दौर्बल्याच्चिन्तयामि महामुने ।
अस्य देहकरस्तात मम पुत्रो महाद्युते ॥ ०१४ ॥

भक्षितो वैनतेयेन दुःखार्तास्तेन वै वयम् ॥ ०१४ ॥

पुनरेव च तेनोक्तं वैनतेयेन गच्छता ।
मासेनान्येन सुमुखं भक्षयिष्य इति प्रभो ॥ ०१५ ॥

ध्रुवं तथा तद्भविता जानीमस्तस्य निश्चयम् ।
तेन हर्षः प्रनष्टो मे सुपर्णवचनेन वै ॥ ०१६ ॥

मातलिस्त्वब्रवीदेनं बुद्धिरत्र कृता मया ।
जामातृभावेन वृतः सुमुखस्तव पुत्रजः ॥ ०१७ ॥

सोऽयं मया च सहितो नारदेन च पन्नगः ।
त्रिलोकेशं सुरपतिं गत्वा पश्यतु वासवम् ॥ ०१८ ॥

शेषेणैवास्य कार्येण प्रज्ञास्याम्यहमायुषः ।
सुपर्णस्य विघाते च प्रयतिष्यामि सत्तम ॥ ०१९ ॥

सुमुखश्च मया सार्धं देवेशमभिगच्छतु ।
कार्यसंसाधनार्थाय स्वस्ति तेऽस्तु भुजङ्गम ॥ ०२० ॥

ततस्ते सुमुखं गृह्य सर्व एव महौजसः ।
ददृशुः शक्रमासीनं देवराजं महाद्युतिम् ॥ ०२१ ॥

सङ्गत्या तत्र भगवान्विष्णुरासीच्चतुर्भुजः ।
ततस्तत्सर्वमाचख्यौ नारदो मातलिं प्रति ॥ ०२२ ॥

ततः पुरंदरं विष्णुरुवाच भुवनेश्वरम् ।
अमृतं दीयतामस्मै क्रियताममरैः समः ॥ ०२३ ॥

मातलिर्नारदश्चैव सुमुखश्चैव वासव ।
लभन्तां भवतः कामात्काममेतं यथेप्सितम् ॥ ०२४ ॥

पुरंदरोऽथ सञ्चिन्त्य वैनतेयपराक्रमम् ।
विष्णुमेवाब्रवीदेनं भवानेव ददात्विति ॥ ०२५ ॥

विष्णुरुवाच ॥

ईशस्त्वमसि लोकानां चराणामचराश्च ये ।
त्वया दत्तमदत्तं कः कर्तुमुत्सहते विभो ॥ ०२६ ॥

कण्व उवाच ॥

प्रादाच्छक्रस्ततस्तस्मै पन्नगायायुरुत्तमम् ।
न त्वेनममृतप्राशं चकार बलवृत्रहा ॥ ०२७ ॥

लब्ध्वा वरं तु सुमुखः सुमुखः संबभूव ह ।
कृतदारो यथाकामं जगाम च गृहान्प्रति ॥ ०२८ ॥

नारदस्त्वार्यकश्चैव कृतकार्यौ मुदा युतौ ।
प्रतिजग्मतुरभ्यर्च्य देवराजं महाद्युतिम् ॥ ०२९ ॥

---

# अध्याय १०३

कण्व उवाच ॥

गरुडस्तत्तु शुश्राव यथावृत्तं महाबलः ।
आयुःप्रदानं शक्रेण कृतं नागस्य भारत ॥ ००१ ॥

पक्षवातेन महता रुद्ध्वा त्रिभुवनं खगः ।
सुपर्णः परमक्रुद्धो वासवं समुपाद्रवत् ॥ ००२ ॥

गरुड उवाच ॥

भगवन्किमवज्ञानात्क्षुधां प्रति भये मम ।
कामकारवरं दत्त्वा पुनश्चलितवानसि ॥ ००३ ॥

निसर्गात्सर्वभूतानां सर्वभूतेश्वरेण मे ।

आहारो विहितो धात्रा किमर्थं वार्यते त्वया ॥ ००४ ॥

वृतश्चैष महानागः स्थापितः समयश्च मे ।
अनेन च मया देव भर्तव्यः प्रसवो महान् ॥ ००५ ॥

एतस्मिंस्त्वन्यथाभूते नान्यं हिंसितुमुत्सहे ।
क्रीडसे कामकारेण देवराज यथेच्छकम् ॥ ००६ ॥

सोऽहं प्राणान्विमोक्ष्यामि तथा परिजनो मम ।
ये च भृत्या मम गृहे प्रीतिमान्भव वासव ॥ ००७ ॥

एतच्चैवाहमर्हामि भूयश्च बलवृत्रहन् ।
त्रैलोक्यस्येश्वरो योऽहं परभृत्यत्वमागतः ॥ ००८ ॥

त्वयि तिष्ठति देवेश न विष्णुः कारणं मम ।
त्रैलोक्यराज राज्यं हि त्वयि वासव शाश्वतम् ॥ ००९ ॥

ममापि दक्षस्य सुता जननी कश्यपः पिता ।
अहमप्युत्सहे लोकान्समस्तान्वोढुमञ्जसा ॥ ०१० ॥

असह्यं सर्वभूतानां ममापि विपुलं बलम् ।
मयापि सुमहत्कर्म कृतं दैतेयविग्रहे ॥ ०११ ॥

श्रुतश्रीः श्रुतसेनश्च विवस्वान्रोचनामुखः ।
प्रसभः कालकाक्षश्च मयापि दितिजा हताः ॥ ०१२ ॥

यत्तु ध्वजस्थानगतो यत्नात्परिचराम्यहम् ।
वहामि चैवानुजं ते तेन मामवमन्यसे ॥ ०१३ ॥

कोऽन्यो भारसहो ह्यस्ति कोऽन्योऽस्ति बलवत्तरः ।
मया योऽहं विशिष्टः सन्वहामीमं सबान्धवम् ॥ ०१४ ॥

अवज्ञाय तु यत्तेऽहं भोजनाद्यपरोपितः ।
तेन मे गौरवं नष्टं त्वत्तश्चास्माच्च वासव ॥ ०१५ ॥

अदित्यां य इमे जाता बलविक्रमशालिनः ।
त्वमेषां किल सर्वेषां विशेषाद्बलवत्तरः ॥ ०१६ ॥

सोऽहं पक्षैकदेशेन वहामि त्वां गतक्लमः ।
विमृश त्वं शनैस्तात को न्वत्र बलवानिति ॥ ०१७ ॥

कण्व उवाच ॥

तस्य तद्वचनं श्रुत्वा खगस्योदर्कदारुणम् ।
अक्षोभ्यं क्षोभयंस्तार्क्ष्यमुवाच रथचक्रभृत् ॥ ०१८ ॥

गरुत्मन्मन्यसेऽऽत्मानं बलवन्तं सुदुर्बलम् ।
अलमस्मत्समक्षं ते स्तोतुमात्मानमण्डज ॥ ०१९ ॥

त्रैलोक्यमपि मे कृत्स्नमशक्तं देहधारणे ।
अहमेवात्मनात्मानं वहामि त्वां च धारये ॥ ०२० ॥

इमं तावन्ममैकं त्वं बाहुं सव्येतरं वह ।
यद्येनं धारयस्येकं सफलं ते विकत्थितम् ॥ ०२१ ॥

ततः स भगवांस्तस्य स्कन्धे बाहुं समासजत् ।
निपपात स भारार्तो विह्वलो नष्टचेतनः ॥ ०२२ ॥

यावान्हि भारः कृत्स्नायाः पृथिव्याः पर्वतैः सह ।
एकस्या देहशाखायास्तावद्भारममन्यत ॥ ०२३ ॥

न त्वेनं पीडयामास बलेन बलवत्तरः ।

ततो हि जीवितं तस्य न व्यनीनशदच्युतः ॥ ०२४ ॥

विपक्षः स्रस्तकायश्च विचेता विह्वलः खगः ।
मुमोच पत्राणि तदा गुरुभारप्रपीडितः ॥ ०२५ ॥

स विष्णुं शिरसा पक्षी प्रणम्य विनतासुतः ।
विचेता विह्वलो दीनः किञ्चिद्वचनमब्रवीत् ॥ ०२६ ॥

भगव.ण्ल्लोकसारस्य सदृशेन वपुष्मता ।
भुजेन स्वैरमुक्तेन निष्पिष्टोऽस्मि महीतले ॥ ०२७ ॥

क्षन्तुमर्हसि मे देव विह्वलस्याल्पचेतसः ।
बलदाहविदग्धस्य पक्षिणो ध्वजवासिनः ॥ ०२८ ॥

न विज्ञातं बलं देव मया ते परमं विभो ।
तेन मन्याम्यहं वीर्यमात्मनोऽसदृशं परैः ॥ ०२९ ॥

ततश्चक्रे स भगवान्प्रसादं वै गरुत्मतः ।
मैवं भूय इति स्नेहात्तदा चैनमुवाच ह ॥ ०३० ॥

तथा त्वमपि गान्धारे यावत्पाण्डुसुतान्रणे ।
नासादयसि तान्वीरांस्तावज्जीवसि पुत्रक ॥ ०३१ ॥

भीमः प्रहरतां श्रेष्ठो वायुपुत्रो महाबलः ।
धनञ्जयश्चेन्द्रसुतो न हन्यातां तु कं रणे ॥ ०३२ ॥

विष्णुर्वायुश्च शक्रश्च धर्मस्तौ चाश्विनावुभौ ।
एते देवास्त्वया केन हेतुना शक्यमीक्षितुम् ॥ ०३३ ॥

तदलं ते विरोधेन शमं गच्छ नृपात्मज ।
वासुदेवेन तीर्थेन कुलं रक्षितुमर्हसि ॥ ०३४ ॥

प्रत्यक्षो ह्यस्य सर्वस्य नारदोऽयं महातपाः ।
माहात्म्यं यत्तदा विष्णोर्योऽयं चक्रगदाधरः ॥ ०३५ ॥

वैशंपायन उवाच ॥

दुर्योधनस्तु तच्छ्रुत्वा निःश्वसन्भृकुटीमुखः ।
राधेयमभिसंप्रेक्ष्य जहास स्वनवत्तदा ॥ ०३६ ॥

कदर्थीकृत्य तद्वाक्यमृषेः कण्वस्य दुर्मतिः ।
ऊरुं गजकराकारं ताडयन्निदमब्रवीत् ॥ ०३७ ॥

यथैवेश्वरसृष्टोऽस्मि यद्भावि या च मे गतिः ।
तथा महर्षे वर्तामि किं प्रलापः करिष्यति ॥ ०३८ ॥

---

# गालवचरितम्

## अध्याय १०४

जनमेजय उवाच ॥

अनर्थे जातनिर्बन्धं परार्थे लोभमोहितम् ।
अनार्यकेष्वभिरतं मरणे कृतनिश्चयम् ॥ ००१ ॥

ज्ञातीनां दुःखकर्तारं बन्धूनां शोकवर्धनम् ।
सुहृदां क्लेशदातारं द्विषतां हर्षवर्धनम् ॥ ००२ ॥

कथं नैनं विमार्गस्थं वारयन्तीह बान्धवाः ।
सौहृदाद्वा सुहृत्स्निग्धो भगवान्वा पितामहः ॥ ००३ ॥

वैशंपायन उवाच ॥

उक्तं भगवता वाक्यमुक्तं भीष्मेण यत्क्षमम् ।
उक्तं बहुविधं चैव नारदेनापि तच्छृणु ॥ ००४ ॥

नारद उवाच ॥

दुर्लभो वै सुहृच्छ्रोता दुर्लभश्च हितः सुहृत् ।
तिष्ठते हि सुहृद्यत्र न बन्धुस्तत्र तिष्ठति ॥ ००५ ॥

श्रोतव्यमपि पश्यामि सुहृदां कुरुनन्दन ।
न कर्तव्यश्च निर्बन्धो निर्बन्धो हि सुदारुणः ॥ ००६ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यथा निर्बन्धतः प्राप्तो गालवेन पराजयः ॥ ००७ ॥

विश्वामित्रं तपस्यन्तं धर्मो जिज्ञासया पुरा ।
अभ्यगच्छत्स्वयं भूत्वा वसिष्ठो भगवानृषिः ॥ ००८ ॥

सप्तर्षीणामन्यतमं वेषमास्थाय भारत ।
बुभुक्षुः क्षुधितो राजन्नाश्रमं कौशिकस्य ह ॥ ००९ ॥

विश्वामित्रोऽथ संभ्रान्तः श्रपयामास वै चरुम् ।
परमान्नस्य यत्नेन न च स प्रत्यपालयत् ॥ ०१० ॥

अन्नं तेन यदा भुक्तमन्यैर्दत्तं तपस्विभिः ।
अथ गृह्यान्नमत्युष्णं विश्वामित्रोऽभ्युपागमत् ॥ ०११ ॥

भुक्तं मे तिष्ठ तावत्त्वमित्युक्त्वा भगवान्ययौ ।
विश्वामित्रस्ततो राजन्स्थित एव महाद्युतिः ॥ ०१२ ॥

भक्तं प्रगृह्य मूर्ध्ना तद्बाहुभ्यां पार्श्वतोऽगमत् ।
स्थितः स्थाणुरिवाभ्याशे निश्चेष्टो मारुताशनः ॥ ०१३ ॥

तस्य शुश्रूषणे यत्नमकरोद्गालवो मुनिः ।
गौरवाद्बहुमानाच्च हार्देन प्रियकाम्यया ॥ ०१४ ॥

अथ वर्षशते पूर्णे धर्मः पुनरुपागमत् ।
वासिष्ठं वेषमास्थाय कौशिकं भोजनेप्सया ॥ ०१५ ॥

स दृष्ट्वा शिरसा भक्तं ध्रियमाणं महर्षिणा ।
तिष्ठता वायुभक्षेण विश्वामित्रेण धीमता ॥ ०१६ ॥

प्रतिगृह्य ततो धर्मस्तथैवोष्णं तथा नवम् ।
भुक्त्वा प्रीतोऽस्मि विप्रर्षे तमुक्त्वा स मुनिर्गतः ॥ ०१७ ॥

क्षत्रभावादपगतो ब्राह्मणत्वमुपागतः ।
धर्मस्य वचनात्प्रीतो विश्वामित्रस्तदाभवत् ॥ ०१८ ॥

विश्वामित्रस्तु शिष्यस्य गालवस्य तपस्विनः ।
शुश्रूषया च भक्त्या च प्रीतिमानित्युवाच तम् ॥ ०१९ ॥

अनुज्ञातो मया वत्स यथेष्टं गच्छ गालव ॥ ०१९ ॥

इत्युक्तः प्रत्युवाचेदं गालवो मुनिसत्तमम् ।
प्रीतो मधुरया वाचा विश्वामित्रं महाद्युतिम् ॥ ०२० ॥

दक्षिणां कां प्रयच्छामि भवते गुरुकर्मणि ।
दक्षिणाभिरुपेतं हि कर्म सिध्यति मानवम् ॥ ०२१ ॥

दक्षिणानां हि सृष्टानामपवर्गेण भुज्यते ।
स्वर्गे क्रतुफलं सद्भिर्दक्षिणा शान्तिरुच्यते ॥ ०२२ ॥

किमाहरामि गुर्वर्थं ब्रवीतु भगवानिति ॥ ०२२ ॥

जानमानस्तु भगवाञ्जितः शुश्रूषणेन च ।
विश्वामित्रस्तमसकृद्गच्छ गच्छेत्यचोदयत् ॥ ०२३ ॥

असकृद्गच्छ गच्छेति विश्वामित्रेण भाषितः ।
किं ददानीति बहुशो गालवः प्रत्यभाषत ॥ ०२४ ॥

निर्बन्धतस्तु बहुशो गालवस्य तपस्विनः ।
किञ्चिदागतसंरम्भो विश्वामित्रोऽब्रवीदिदम् ॥ ०२५ ॥

एकतःश्यामकर्णानां शतान्यष्टौ ददस्व मे ।
हयानां चन्द्रशुभ्राणां गच्छ गालव माचिरम् ॥ ०२६ ॥

---

# अध्याय १०५

नारद उवाच ॥

एवमुक्तस्तदा तेन विश्वामित्रेण धीमता ।
नास्ते न शेते नाहारं कुरुते गालवस्तदा ॥ ००१ ॥

त्वगस्थिभूतो हरिणश्चिन्ताशोकपरायणः ।
शोचमानोऽतिमात्रं स दह्यमानश्च मन्युना ॥ ००२ ॥

कुतः पुष्टानि मित्राणि कुतोऽर्थाः सञ्चयः कुतः ।
हयानां चन्द्रशुभ्राणां शतान्यष्टौ कुतो मम ॥ ००३ ॥

कुतो मे भोजनश्रद्धा सुखश्रद्धा कुतश्च मे ।
श्रद्धा मे जीवितस्यापि छिन्ना किं जीवितेन मे ॥ ००४ ॥

अहं पारं समुद्रस्य पृथिव्या वा परं परात् ।
गत्वात्मानं विमुञ्चामि किं फलं जीवितेन मे ॥ ००५ ॥

अधनस्याकृतार्थस्य त्यक्तस्य विविधैः फलैः ।
ऋणं धारयमाणस्य कुतः सुखमनीहया ॥ ००६ ॥

सुहृदां हि धनं भुक्त्वा कृत्वा प्रणयमीप्सितम् ।
प्रतिकर्तुमशक्तस्य जीवितान्मरणं वरम् ॥ ००७ ॥

प्रतिश्रुत्य करिष्येति कर्तव्यं तदकुर्वतः ।
मिथ्यावचनदग्धस्य इष्टापूर्तं प्रणश्यति ॥ ००८ ॥

न रूपमनृतस्यास्ति नानृतस्यास्ति संततिः ।
नानृतस्याधिपत्यं च कुत एव गतिः शुभा ॥ ००९ ॥

कुतः कृतघ्नस्य यशः कुतः स्थानं कुतः सुखम् ।
अश्रद्धेयः कृतघ्नो हि कृतघ्ने नास्ति निष्कृतिः ॥ ०१० ॥

न जीवत्यधनः पापः कुतः पापस्य तन्त्रणम् ।
पापो ध्रुवमवाप्नोति विनाशं नाशयन्कृतम् ॥ ०११ ॥

सोऽहं पापः कृतघ्नश्च कृपणश्चानृतोऽपि च ।
गुरोर्यः कृतकार्यः संस्तत्करोमि न भाषितम् ॥ ०१२ ॥

सोऽहं प्राणान्विमोक्ष्यामि कृत्वा यत्नमनुत्तमम् ॥ ०१२ ॥

अर्थना न मया काचित्कृतपूर्वा दिवौकसाम् ।
मानयन्ति च मां सर्वे त्रिदशा यज्ञसंस्तरे ॥ ०१३ ॥

अहं तु विबुधश्रेष्ठं देवं त्रिभुवनेश्वरम् ।
विष्णुं गच्छाम्यहं कृष्णं गतिं गतिमतां वरम् ॥ ०१४ ॥

भोगा यस्मात्प्रतिष्ठन्ते व्याप्य सर्वान्सुरासुरान् ।
प्रयतो द्रष्टुमिच्छामि महायोगिनमव्ययम् ॥ ०१५ ॥

एवमुक्ते सखा तस्य गरुडो विनतात्मजः ।
दर्शयामास तं प्राह संहृष्टः प्रियकाम्यया ॥ ०१६ ॥

सुहृद्भवान्मम मतः सुहृदां च मतः सुहृत् ।
ईप्सितेनाभिलाषेण योक्तव्यो विभवे सति ॥ ०१७ ॥

विभवश्चास्ति मे विप्र वासवावरजो द्विज ।
पूर्वमुक्तस्त्वदर्थं च कृतः कामश्च तेन मे ॥ ०१८ ॥

स भवानेतु गच्छाव नयिष्ये त्वां यथासुखम् ।
देशं पारं पृथिव्या वा गच्छ गालव माचिरम् ॥ ०१९ ॥

---

# अध्याय १०६

सुपर्ण उवाच ॥

अनुशिष्टोऽस्मि देवेन गालवाज्ञातयोनिना ।
ब्रूहि कामनुसंयामि द्रष्टुं प्रथमतो दिशम् ॥ ००१ ॥

पूर्वां वा दक्षिणां वाहमथ वा पश्चिमां दिशम् ।
उत्तरां वा द्विजश्रेष्ठ कुतो गच्छामि गालव ॥ ००२ ॥

यस्यामुदयते पूर्वं सर्वलोकप्रभावनः ।
सविता यत्र संध्यायां साध्यानां वर्तते तपः ॥ ००३ ॥

यस्यां पूर्वं मतिर्जाता यया व्याप्तमिदं जगत् ।
चक्षुषी यत्र धर्मस्य यत्र चैष प्रतिष्ठितः ॥ ००४ ॥

हुतं यतोमुखैर्हव्यं सर्पते सर्वतोदिशम् ।
एतद्द्वारं द्विजश्रेष्ठ दिवसस्य तथाध्वनः ॥ ००५ ॥

यत्र पूर्वं प्रसूता वै दाक्षायण्यः प्रजाः स्त्रियः ।
यस्यां दिशि प्रवृद्धाश्च कश्यपस्यात्मसंभवाः ॥ ००६ ॥

यतोमूला सुराणां श्रीर्यत्र शक्रोऽभ्यषिच्यत ।
सुरराज्येन विप्रर्षे देवैश्चात्र तपश्चितम् ॥ ००७ ॥

एतस्मात्कारणाद्ब्रह्मन्पूर्वेत्येषा दिगुच्यते ।
यस्मात्पूर्वतरे काले पूर्वमेषावृता सुरैः ॥ ००८ ॥

अत एव च पूर्वेषां पूर्वामाशामवेक्षताम् ।
पूर्वकार्याणि कार्याणि दैवानि सुखमीप्सता ॥ ००९ ॥

अत्र वेदाञ्जगौ पूर्वं भगवा.ण्ल्लोकभावनः ।
अत्रैवोक्ता सवित्रासीत्सावित्री ब्रह्मवादिषु ॥ ०१० ॥

अत्र दत्तानि सूर्येण यजूंषि द्विजसत्तम ।
अत्र लब्धवरैः सोमः सुरैः क्रतुषु पीयते ॥ ०११ ॥

अत्र तृप्ता हुतवहाः स्वां योनिमुपभुञ्जते ।
अत्र पातालमाश्रित्य वरुणः श्रियमाप च ॥ ०१२ ॥

अत्र पूर्वं वसिष्ठस्य पौराणस्य द्विजर्षभ ।
सूतिश्चैव प्रतिष्ठा च निधनं च प्रकाशते ॥ ०१३ ॥

ओङ्कारस्यात्र जायन्ते सूतयो दशतीर्दश ।
पिबन्ति मुनयो यत्र हविर्धाने स्म सोमपाः ॥ ०१४ ॥

प्रोक्षिता यत्र बहवो वराहाद्या मृगा वने ।
शक्रेण यत्र भागार्थे दैवतेषु प्रकल्पिताः ॥ ०१५ ॥

अत्राहिताः कृतघ्नाश्च मानुषाश्चासुराश्च ये ।
उदयंस्तान्हि सर्वान्वै क्रोधाद्धन्ति विभावसुः ॥ ०१६ ॥

एतद्द्वारं त्रिलोकस्य स्वर्गस्य च सुखस्य च ।
एष पूर्वो दिशाभागो विशावैनं यदीच्छसि ॥ ०१७ ॥

प्रियं कार्यं हि मे तस्य यस्यास्मि वचने स्थितः ।
ब्रूहि गालव यास्यामि शृणु चाप्यपरां दिशम् ॥ ०१८ ॥

---

# अध्याय १०७

सुपर्ण उवाच ॥

इयं विवस्वता पूर्वं श्रौतेन विधिना किल ।
गुरवे दक्षिणा दत्ता दक्षिणेत्युच्यतेऽथ दिक् ॥ ००१ ॥

अत्र लोकत्रयस्यास्य पितृपक्षः प्रतिष्ठितः ।
अत्रोष्मपानां देवानां निवासः श्रूयते द्विज ॥ ००२ ॥

अत्र विश्वे सदा देवाः पितृभिः सार्धमासते ।
इज्यमानाः स्म लोकेषु संप्राप्तास्तुल्यभागताम् ॥ ००३ ॥

एतद्द्वितीयं धर्मस्य द्वारमाचक्षते द्विज ।
त्रुटिशो लवशश्चात्र गण्यते कालनिश्चयः ॥ ००४ ॥

अत्र देवर्षयो नित्यं पितृलोकर्षयस्तथा ।
तथा राजर्षयः सर्वे निवसन्ति गतव्यथाः ॥ ००५ ॥

अत्र धर्मश्च सत्यं च कर्म चात्र निशाम्यते ।
गतिरेषा द्विजश्रेष्ठ कर्मणात्मावसादिनः ॥ ००६ ॥

एषा दिक्सा द्विजश्रेष्ठ यां सर्वः प्रतिपद्यते ।
वृता त्वनवबोधेन सुखं तेन न गम्यते ॥ ००७ ॥

नैर्ऋतानां सहस्राणि बहून्यत्र द्विजर्षभ ।
सृष्टानि प्रतिकूलानि द्रष्टव्यान्यकृतात्मभिः ॥ ००८ ॥

अत्र मन्दरकुञ्जेषु विप्रर्षिसदनेषु च ।
गन्धर्वा गान्ति गाथा वै चित्तबुद्धिहरा द्विज ॥ ००९ ॥

अत्र सामानि गाथाभिः श्रुत्वा गीतानि रैवतः ।
गतदारो गतामात्यो गतराज्यो वनं गतः ॥ ०१० ॥

अत्र सावर्णिना चैव यवक्रीतात्मजेन च ।
मर्यादा स्थापिता ब्रह्मन्यां सूर्यो नातिवर्तते ॥ ०११ ॥

अत्र राक्षसराजेन पौलस्त्येन महात्मना ।

रावणेन तपश्चीर्त्वा सुरेभ्योऽमरता वृता ॥ ०१२ ॥

अत्र वृत्तेन वृत्रोऽपि शक्रशत्रुत्वमीयिवान् ।
अत्र सर्वासवः प्राप्ताः पुनर्गच्छन्ति पञ्चधा ॥ ०१३ ॥

अत्र दुष्कृतकर्माणो नराः पच्यन्ति गालव ।
अत्र वैतरणी नाम नदी वितरणैर्वृता ॥ ०१४ ॥

अत्र गत्वा सुखस्यान्तं दुःखस्यान्तं प्रपद्यते ॥ ०१४ ॥

अत्रावृत्तो दिनकरः क्षरते सुरसं पयः ।
काष्ठां चासाद्य धानिष्ठां हिममुत्सृजते पुनः ॥ ०१५ ॥

अत्राहं गालव पुरा क्षुधार्तः परिचिन्तयन् ।
लब्धवान्युध्यमानौ द्वौ बृहन्तौ गजकच्छपौ ॥ ०१६ ॥

अत्र शक्रधनुर्नाम सूर्याज्जातो महानृषिः ।
विदुर्यं कपिलं देवं येनात्ताः सगरात्मजाः ॥ ०१७ ॥

अत्र सिद्धाः शिवा नाम ब्राह्मणा वेदपारगाः ।
अधीत्य सखिलान्वेदानालभन्ते यमक्षयम् ॥ ०१८ ॥

अत्र भोगवती नाम पुरी वासुकिपालिता ।
तक्षकेण च नागेन तथैवैरावतेन च ॥ ०१९ ॥

अत्र निर्याणकालेषु तमः संप्राप्यते महत् ।
अभेद्यं भास्करेणापि स्वयं वा कृष्णवर्त्मना ॥ ०२० ॥

एष तस्यापि ते मार्गः परितापस्य गालव ।
ब्रूहि मे यदि गन्तव्यं प्रतीचीं श्रृणु वा मम ॥ ०२१ ॥

# अध्याय १०८

सुपर्ण उवाच ॥

इयं दिग्दयिता राज्ञो वरुणस्य तु गोपतेः ।
सदा सलिलराजस्य प्रतिष्ठा चादिरेव च ॥ ००१ ॥

अत्र पश्चादहः सूर्यो विसर्जयति भाः स्वयम् ।
पश्चिमेत्यभिविख्याता दिगियं द्विजसत्तम ॥ ००२ ॥

यादसामत्र राज्येन सलिलस्य च गुप्तये ।
कश्यपो भगवान्देवो वरुणं स्माभ्यषेचयत् ॥ ००३ ॥

अत्र पीत्वा समस्तान्वै वरुणस्य रसांस्तु षट् ।
जायते तरुणः सोमः शुक्लस्यादौ तमिस्रहा ॥ ००४ ॥

अत्र पश्चात्कृता दैत्या वायुना संयतास्तदा ।
निःश्वसन्तो महानागैरर्दिताः सुषुपुर्द्विज ॥ ००५ ॥

अत्र सूर्यं प्रणयिनं प्रतिगृह्णाति पर्वतः ।
अस्तो नाम यतः संध्या पश्चिमा प्रतिसर्पति ॥ ००६ ॥

अतो रात्रिश्च निद्रा च निर्गता दिवसक्षये ।
जायते जीवलोकस्य हर्तुमर्धमिवायुषः ॥ ००७ ॥

अत्र देवीं दितिं सुप्तामात्मप्रसवधारिणीम् ।
विगर्भामकरोच्छक्रो यत्र जातो मरुद्गणः ॥ ००८ ॥

अत्र मूलं हिमवतो मन्दरं याति शाश्वतम् ।
अपि वर्षसहस्रेण न चास्यान्तोऽधिगम्यते ॥ ००९ ॥

अत्र काञ्चनशैलस्य काञ्चनाम्बुवहस्य च ।
उदधेस्तीरमासाद्य सुरभिः क्षरते पयः ॥ ०१० ॥

अत्र मध्ये समुद्रस्य कबन्धः प्रतिदृश्यते ।
स्वर्भानोः सूर्यकल्पस्य सोमसूर्यौ जिघांसतः ॥ ०११ ॥

सुवर्णशिरसोऽप्यत्र हरिरोम्णः प्रगायतः ।
अदृश्यस्याप्रमेयस्य श्रूयते विपुलो ध्वनिः ॥ ०१२ ॥

अत्र ध्वजवती नाम कुमारी हरिमेधसः ।
आकाशे तिष्ठ तिष्ठेति तस्थौ सूर्यस्य शासनात् ॥ ०१३ ॥

अत्र वायुस्तथा वह्निरापः खं चैव गालव ।
आह्निकं चैव नैशं च दुःखस्पर्शं विमुञ्चति ॥ ०१४ ॥

अतः प्रभृति सूर्यस्य तिर्यगावर्तते गतिः ॥ ०१४ ॥

अत्र ज्योतींषि सर्वाणि विशन्त्यादित्यमण्डलम् ।
अष्टाविंशतिरात्रं च चङ्क्रम्य सह भानुना ॥ ०१५ ॥

निष्पतन्ति पुनः सूर्यात्सोमसंयोगयोगतः ॥ ०१५ ॥

अत्र नित्यं स्रवन्तीनां प्रभवः सागरोदयः ।
अत्र लोकत्रयस्यापस्तिष्ठन्ति वरुणाश्रयाः ॥ ०१६ ॥

अत्र पन्नगराजस्याप्यनन्तस्य निवेशनम् ।
अनादिनिधनस्यात्र विष्णोः स्थानमनुत्तमम् ॥ ०१७ ॥

अत्रानलसखस्यापि पवनस्य निवेशनम् ।
महर्षेः कश्यपस्यात्र मारीचस्य निवेशनम् ॥ ०१८ ॥

एष ते पश्चिमो मार्गो दिग्द्वारेण प्रकीर्तितः ।
ब्रूहि गालव गच्छावो बुद्धिः का द्विजसत्तम ॥ ०१९ ॥

---

# अध्याय १०९

सुपर्ण उवाच ॥

यस्मादुत्तार्यते पापाद्यस्मान्निःश्रेयसोऽश्नुते ।
तस्मादुत्तारणफलादुत्तरेत्युच्यते बुधैः ॥ ००१ ॥

उत्तरस्य हिरण्यस्य परिवापस्य गालव ।
मार्गः पश्चिमपूर्वाभ्यां दिग्भ्यां वै मध्यमः स्मृतः ॥ ००२ ॥

अस्यां दिशि वरिष्ठायामुत्तरायां द्विजर्षभ ।
नासौम्यो नाविधेयात्मा नाधर्म्यो वसते जनः ॥ ००३ ॥

अत्र नारायणः कृष्णो जिष्णुश्चैव नरोत्तमः ।
बदर्यामाश्रमपदे तथा ब्रह्मा च शाश्वतः ॥ ००४ ॥

अत्र वै हिमवत्पृष्ठे नित्यमास्ते महेश्वरः ।
अत्र राज्येन विप्राणां चन्द्रमाश्चाभ्यषिच्यत ॥ ००५ ॥

अत्र गङ्गां महादेवः पतन्तीं गगनाच्च्युताम् ।
प्रतिगृह्य ददौ लोके मानुषे ब्रह्मवित्तम ॥ ००६ ॥

अत्र देव्या तपस्तप्तं महेश्वरपरीप्सया ।
अत्र कामश्च रोषश्च शैलश्चोमा च संबभुः ॥ ००७ ॥

अत्र राक्षसयक्षाणां गन्धर्वाणां च गालव ।
आधिपत्येन कैलासे धनदोऽप्यभिषेचितः ॥ ००८ ॥

अत्र चैत्ररथं रम्यमत्र वैखानसाश्रमः ।
अत्र मन्दाकिनी चैव मन्दरश्च द्विजर्षभ ॥ ००९ ॥

अत्र सौगन्धिकवनं नैर्ऋतैरभिरक्ष्यते ।
शाड्वलं कदलीस्कन्धमत्र संतानका नगाः ॥ ०१० ॥

अत्र संयमनित्यानां सिद्धानां स्वैरचारिणाम् ।
विमानान्यनुरूपाणि कामभोग्यानि गालव ॥ ०११ ॥

अत्र ते ऋषयः सप्त देवी चारुन्धती तथा ।
अत्र तिष्ठति वै स्वातिरत्रास्या उदयः स्मृतः ॥ ०१२ ॥

अत्र यज्ञं समारुह्य ध्रुवं स्थाता पितामहः ।
ज्योतींषि चन्द्रसूर्यौ च परिवर्तन्ति नित्यशः ॥ ०१३ ॥

अत्र गायन्तिकाद्वारं रक्षन्ति द्विजसत्तमाः ।
धामा नाम महात्मानो मुनयः सत्यवादिनः ॥ ०१४ ॥

न तेषां ज्ञायते सूतिर्नाकृतिर्न तपश्चितम् ।
परिवर्तसहस्राणि कामभोग्यानि गालव ॥ ०१५ ॥

यथा यथा प्रविशति तस्मात्परतरं नरः ।
तथा तथा द्विजश्रेष्ठ प्रविलीयति गालव ॥ ०१६ ॥

न तत्केनचिदन्येन गतपूर्वं द्विजर्षभ ।
ऋते नारायणं देवं नरं वा जिष्णुमव्ययम्  ॥ ०१७  ॥

अत्र कैलासमित्युक्तं स्थानमैलविलस्य तत् ।
अत्र विद्युत्प्रभा नाम जज्ञिरेऽप्सरसो दश  ॥ ०१८  ॥

अत्र विष्णुपदं नाम क्रमता विष्णुना कृतम् ।
त्रिलोकविक्रमे ब्रह्मन्नुत्तरां दिशमाश्रितम्  ॥ ०१९  ॥

अत्र राज्ञा मरुत्तेन यज्ञेनेष्टं द्विजोत्तम ।
उशीरबीजे विप्रर्षे यत्र जाम्बूनदं सरः  ॥ ०२०  ॥

जीमूतस्यात्र विप्रर्षेरुपतस्थे महात्मनः ।
साक्षाद्धैमवतः पुण्यो विमलः कमलाकरः  ॥ ०२१  ॥

ब्राह्मणेषु च यत्कृत्स्नं स्वन्तं कृत्वा धनं महत् ।
वव्रे वनं महर्षिः स जैमूतं तद्वनं ततः  ॥ ०२२  ॥

अत्र नित्यं दिशापालाः सायं प्रातर्द्विजर्षभ ।
कस्य कार्यं किमिति वै परिक्रोशन्ति गालव  ॥ ०२३  ॥

एवमेषा द्विजश्रेष्ठ गुणैरन्यैर्दिगुत्तरा ।
उत्तरेति परिख्याता सर्वकर्मसु चोत्तरा  ॥ ०२४  ॥

एता विस्तरशस्तात तव सङ्कीर्तिता दिशः ।
चतस्रः क्रमयोगेन कामाशां गन्तुमिच्छसि  ॥ ०२५  ॥

उद्यतोऽहं द्विजश्रेष्ठ तव दर्शयितुं दिशः ।
पृथिवीं चाखिलां ब्रह्मंस्तस्मादारोह मां द्विज  ॥ ०२६  ॥

# अध्याय ११०

गालव उवाच ॥

गरुत्मन्भुजगेन्द्रारे सुपर्ण विनतात्मज ।
नय मां ताक्ष्र्य पूर्वेण यत्र धर्मस्य चक्षुषी ॥ ००१ ॥

पूर्वमेतां दिशं गच्छ या पूर्वं परिकीर्तिता ।
दैवतानां हि सांनिध्यमत्र कीर्तितवानसि ॥ ००२ ॥

अत्र सत्यं च धर्मश्च त्वया सम्यक्प्रकीर्तितः ।
इच्छेयं तु समागन्तुं समस्तैर्दैवतैरहम् ॥ ००३ ॥

भूयश्च तान्सुरान्द्रष्टुमिच्छेयमरुणानुज ॥ ००३ ॥

नारद उवाच ॥

तमाह विनतासूनुरारोहस्वेति वै द्विजम् ।
आरुरोहाथ स मुनिर्गरुडं गालवस्तदा ॥ ००४ ॥

गालव उवाच ॥

क्रममाणस्य ते रूपं दृश्यते पन्नगाशन ।
भास्करस्येव पूर्वाह्णे सहस्रांशोर्विवस्वतः ॥ ००५ ॥

पक्षवातप्रणुन्नानां वृक्षाणामनुगामिनाम् ।
प्रस्थितानामिव समं पश्यामीह गतिं खग ॥ ००६ ॥

ससागरवनामुर्वीं सशैलवनकाननाम् ।

आकर्षन्निव चाभासि पक्षवातेन खेचर ॥ ००७ ॥

समीननागनक्रं च खमिवारोप्यते जलम् ।
वायुना चैव महता पक्षवातेन चानिशम् ॥ ००८ ॥

तुल्यरूपाननान्मत्स्यांस्तिमिमत्स्यांस्तिमिङ्गिलान् ।
नागांश्च नरवक्त्रांश्च पश्याम्युन्मथितानिव ॥ ००९ ॥

महार्णवस्य च रवैः श्रोत्रे मे बधिरीकृते ।
न शृणोमि न पश्यामि नात्मनो वेद्मि कारणम् ॥ ०१० ॥

शनैः साधु भवान्यातु ब्रह्महत्यामनुस्मरन् ।
न दृश्यते रविस्तात न दिशो न च खं खग ॥ ०११ ॥

तम एव तु पश्यामि शरीरं ते न लक्षये ।
मणीव जात्यौ पश्यामि चक्षुषी तेऽहमण्डज ॥ ०१२ ॥

शरीरे तु न पश्यामि तव चैवात्मनश्च ह ।
पदे पदे तु पश्यामि सलिलादग्निमुत्थितम् ॥ ०१३ ॥

स मे निर्वाप्य सहसा चक्षुषी शाम्यते पुनः ।
तन्निवर्त महान्कालो गच्छतो विनतात्मज ॥ ०१४ ॥

न मे प्रयोजनं किञ्चिद्गमने पन्नगाशन ।
संनिवर्त महावेग न वेगं विषहामि ते ॥ ०१५ ॥

गुरवे संश्रुतानीह शतान्यष्टौ हि वाजिनाम् ।
एकतःश्यामकर्णानां शुभ्राणां चन्द्रवर्चसाम् ॥ ०१६ ॥

तेषां चैवापवर्गाय मार्गं पश्यामि नाण्डज ।
ततोऽयं जीवितत्यागे दृष्टो मार्गो मयात्मनः ॥ ०१७ ॥

नैव मेऽस्ति धनं किञ्चिन्न धनेनान्वितः सुहृत् ।
न चार्थेनापि महता शक्यमेतद्व्यपोहितुम्  ॥ ०१८  ॥

नारद उवाच  ॥

एवं बहु च दीनं च ब्रुवाणं गालवं तदा ।
प्रत्युवाच व्रजन्नेव प्रहसन्विनतात्मजः  ॥ ०१९  ॥

नातिप्रज्ञोऽसि विप्रर्षे योऽऽत्मानं त्यक्तुमिच्छसि ।
न चापि कृत्रिमः कालः कालो हि परमेश्वरः  ॥ ०२०  ॥

किमहं पूर्वमेवेह भवता नाभिचोदितः ।
उपायोऽत्र महानस्ति येनैतदुपपद्यते  ॥ ०२१  ॥

तदेष ऋषभो नाम पर्वतः सागरोरसि ।
अत्र विश्रम्य भुक्त्वा च निवर्तिष्याव गालव  ॥ ०२२  ॥

---

# अध्याय १११

नारद उवाच  ॥

ऋषभस्य ततः शृङ्गे निपत्य द्विजपक्षिणौ ।
शाण्डिलीं ब्राह्मणीं तत्र ददृशाते तपोन्विताम्  ॥ ००१  ॥

अभिवाद्य सुपर्णस्तु गालवश्चाभिपूज्य ताम् ।
तया च स्वागतेनोक्तौ विष्टरे संनिषीदतुः  ॥ ००२  ॥

सिद्धमन्नं तया क्षिप्रं बलिमन्त्रोपबृंहितम् ।
भुक्त्वा तृप्तावुभौ भूमौ सुप्तौ तावन्नमोहितौ ॥ ००३ ॥

मुहूर्तात्प्रतिबुद्धस्तु सुपर्णो गमनेप्सया ।
अथ भ्रष्टतनूजाङ्गमात्मानं ददृशे खगः ॥ ००४ ॥

मांसपिण्डोपमोऽभूत्स मुखपादान्वितः खगः ।
गालवस्तं तथा दृष्ट्वा विषण्णः पर्यपृच्छत ॥ ००५ ॥

किमिदं भवता प्राप्तमिहागमनजं फलम् ।
वासोऽयमिह कालं तु कियन्तं नौ भविष्यति ॥ ००६ ॥

किं नु ते मनसा ध्यातमशुभं धर्मदूषणम् ।
न ह्ययं भवतः स्वल्पो व्यभिचारो भविष्यति ॥ ००७ ॥

सुपर्णोऽथाब्रवीद्विप्रं प्रध्यातं वै मया द्विज ।
इमां सिद्धामितो नेतुं तत्र यत्र प्रजापतिः ॥ ००८ ॥

यत्र देवो महादेवो यत्र विष्णुः सनातनः ।
यत्र धर्मश्च यज्ञश्च तत्रेयं निवसेदिति ॥ ००९ ॥

सोऽहं भगवतीं याचे प्रणतः प्रियकाम्यया ।
मयैतन्नाम प्रध्यातं मनसा शोचता किल ॥ ०१० ॥

तदेवं बहुमानात्ते मयेहानीप्सितं कृतम् ।
सुकृतं दुष्कृतं वा त्वं माहात्म्यात्क्षन्तुमर्हसि ॥ ०११ ॥

सा तौ तदाब्रवीत्तुष्टा पतगेन्द्रद्विजर्षभौ ।
न भेतव्यं सुपर्णोऽसि सुपर्ण त्यज संभ्रमम् ॥ ०१२ ॥

निन्दितास्मि त्वया वत्स न च निन्दां क्षमाम्यहम् ।

लोकेभ्यः स परिभ्रश्येद्यो मां निन्देत पापकृत्  ॥ ०१३  ॥

हीनयालक्षणैः सर्वैस्तथानिन्दितया मया ।
आचारं प्रतिगृह्णन्त्या सिद्धिः प्राप्तेयमुत्तमा  ॥ ०१४  ॥

आचाराल्लभते धर्ममाचाराल्लभते धनम् ।
आचाराच्छ्रियमाप्नोति आचारो हन्त्यलक्षणम्  ॥ ०१५  ॥

तदायुष्मन्खगपते यथेष्टं गम्यतामितः ।
न च ते गर्हणीयापि गर्हितव्याः स्त्रियः क्वचित्  ॥ ०१६  ॥

भवितासि यथापूर्वं बलवीर्यसमन्वितः ।
बभूवतुस्ततस्तस्य पक्षौ द्रविणवत्तरौ  ॥ ०१७  ॥

अनुज्ञातश्च शाण्डिल्या यथागतमुपागमत् ।
नैव चासादयामास तथारूपांस्तुरङ्गमान्  ॥ ०१८  ॥

विश्वामित्रोऽथ तं दृष्ट्वा गालवं चाध्वनि स्थितम् ।
उवाच वदतां श्रेष्ठो वैनतेयस्य संनिधौ  ॥ ०१९  ॥

यस्त्वया स्वयमेवार्थः प्रतिज्ञातो मम द्विज ।
तस्य कालोऽपवर्गस्य यथा वा मन्यते भवान्  ॥ ०२०  ॥

प्रतीक्षिष्याम्यहं कालमेतावन्तं तथा परम् ।
यथा संसिध्यते विप्र स मार्गस्तु निशम्यताम्  ॥ ०२१  ॥

सुपर्णोऽथाब्रवीद्दीनं गालवं भृशदुःखितम् ।
प्रत्यक्षं खल्विदानीं मे विश्वामित्रो यदुक्तवान्  ॥ ०२२  ॥

तदागच्छ द्विजश्रेष्ठ मन्त्रयिष्याव गालव ।
नादत्त्वा गुरवे शक्यं कृत्स्नमर्थं त्वयासितुम्  ॥ ०२३  ॥

# अध्याय ११२

नारद् उवाच ॥

अथाह गालवं दीनं सुपर्णः पततां वरः ।
निर्मितं वह्निना भूमौ वायुना वैधितं तथा ॥ ००१ ॥

यस्माद्धिरण्मयं सर्वं हिरण्यं तेन चोच्यते ॥ ००१ ॥

धत्ते धारयते चेदमेतस्मात्कारणाद्धनम् ।
तदेतत्त्रिषु लोकेषु धनं तिष्ठति शाश्वतम् ॥ ००२ ॥

नित्यं प्रोष्ठपदाभ्यां च शुक्रे धनपतौ तथा ।
मनुष्येभ्यः समादत्ते शुक्रश्चित्तार्जितं धनम् ॥ ००३ ॥

अजैकपादहिर्बुध्न्यै रक्ष्यते धनदेन च ।
एवं न शक्यते लब्धुमलब्धव्यं द्विजर्षभ ॥ ००४ ॥

ऋते च धनमश्वानां नावाप्तिर्विद्यते तव ।
अर्थं याचात्र राजानं कञ्चिद्राजर्षिवंशजम् ॥ ००५ ॥

अपीड्य राजा पौरान्हि यो नौ कुर्यात्कृतार्थिनौ ॥ ००५ ॥

अस्ति सोमान्ववाये मे जातः कश्चिन्नृपः सखा ।
अभिगच्छावहे तं वै तस्यास्ति विभवो भुवि ॥ ००६ ॥

ययातिर्नाम राजर्षिर्नाहुषः सत्यविक्रमः ।

स दास्यति मया चोक्तो भवता चार्थितः स्वयम् ॥ ००७ ॥

विभवश्चास्य सुमहानासीद्धनपतेरिव ।
एवं स तु धनं विद्वान्दानेनैव व्यशोधयत् ॥ ००८ ॥

तथा तौ कथयन्तौ च चिन्तयन्तौ च यत्क्षमम् ।
प्रतिष्ठाने नरपतिं ययातिं प्रत्युपस्थितौ ॥ ००९ ॥

प्रतिगृह्य च सत्कारमर्घादिं भोजनं वरम् ।
पृष्टश्चागमने हेतुमुवाच विनतासुतः ॥ ०१० ॥

अयं मे नाहुष सखा गालवस्तपसो निधिः ।
विश्वामित्रस्य शिष्योऽभूद्वर्षाण्ययुतशो नृप ॥ ०११ ॥

सोऽयं तेनाभ्यनुज्ञात उपकारेप्सया द्विजः ।
तमाह भगवान्कां ते ददानि गुरुदक्षिणाम् ॥ ०१२ ॥

असकृत्तेन चोक्तेन किञ्चिदागतमन्युना ।
अयमुक्तः प्रयच्छेति जानता विभवं लघु ॥ ०१३ ॥

एकतःश्यामकर्णानां शुभ्राणां शुद्धजन्मनाम् ।
अष्टौ शतानि मे देहि हयानां चन्द्रवर्चसाम् ॥ ०१४ ॥

गुर्वर्थो दीयतामेष यदि गालव मन्यसे ।
इत्येवमाह सक्रोधो विश्वामित्रस्तपोधनः ॥ ०१५ ॥

सोऽयं शोकेन महता तप्यमानो द्विजर्षभः ।
अशक्तः प्रतिकर्तुं तद्भवन्तं शरणं गतः ॥ ०१६ ॥

प्रतिगृह्य नरव्याघ्र त्वत्तो भिक्षां गतव्यथः ।
कृत्वापवर्गं गुरवे चरिष्यति महत्तपः ॥ ०१७ ॥

तपसः संविभागेन भवन्तमपि योक्ष्यते ।
स्वेन राजर्षितपसा पूर्णं त्वां पूरयिष्यति ॥ ०१८ ॥

यावन्ति रोमाणि हये भवन्ति हि नरेश्वर ।
तावतो वाजिदा लोकान्प्राप्नुवन्ति महीपते ॥ ०१९ ॥

पात्रं प्रतिग्रहस्यायं दातुं पात्रं तथा भवान् ।
शङ्खे क्षीरमिवासक्तं भवत्वेतत्तथोपमम् ॥ ०२० ॥

---

# अध्याय ११३

नारद उवाच ॥

एवमुक्तः सुपर्णेन तथ्यं वचनमुत्तमम् ।
विमृश्यावहितो राजा निश्चित्य च पुनः पुनः ॥ ००१ ॥

यष्टा क्रतुसहस्राणां दाता दानपतिः प्रभुः ।
ययातिर्वत्सकाशीश इदं वचनमब्रवीत् ॥ ००२ ॥

दृष्ट्वा प्रियसखं तार्क्ष्यं गालवं च द्विजर्षभम् ।
निदर्शनं च तपसो भिक्षां श्लाघ्यां च कीर्तिताम् ॥ ००३ ॥

अतीत्य च नृपानन्यानादित्यकुलसंभवान् ।
मत्सकाशमनुप्राप्तावेतौ बुद्धिमवेक्ष्य च ॥ ००४ ॥

अद्य मे सफलं जन्म तारितं चाद्य मे कुलम् ।
अद्यायं तारितो देशो मम तार्क्ष्य त्वयानघ ॥ ००५ ॥

वक्तुमिच्छामि तु सखे यथा जानासि मां पुरा ।
न तथा वित्तवानस्मि क्षीणं वित्तं हि मे सखे ॥ ००६ ॥

न च शक्तोऽस्मि ते कर्तुं मोघमागमनं खग ।
न चाशामस्य विप्रर्षेर्वितथां कर्तुमुत्सहे ॥ ००७ ॥

तत्तु दास्यामि यत्कार्यमिदं संपादयिष्यति ।
अभिगम्य हताशो हि निवृत्तो दहते कुलम् ॥ ००८ ॥

नातः परं वैनतेय किञ्चित्पापिष्ठमुच्यते ।
यथाशानाशनं लोके देहि नास्तीति वा वचः ॥ ००९ ॥

हताशो ह्यकृतार्थः सन्हतः संभावितो नरः ।
हिनस्ति तस्य पुत्रांश्च पौत्रांश्चाकुर्वतोऽर्थिनाम् ॥ ०१० ॥

तस्माच्चतुर्णां वंशानां स्थापयित्री सुता मम ।
इयं सुरसुतप्रख्या सर्वधर्मोपचायिनी ॥ ०११ ॥

सदा देवमनुष्याणामसुराणां च गालव ।
काङ्क्षिता रूपतो बाला सुता मे प्रतिगृह्यताम् ॥ ०१२ ॥

अस्याः शुल्कं प्रदास्यन्ति नृपा राज्यमपि ध्रुवम् ।
किं पुनः श्यामकर्णानां हयानां द्वे चतुःशते ॥ ०१३ ॥

स भवान्प्रतिगृह्णातु ममेमां माधवीं सुताम् ।
अहं दौहित्रवान्स्यां वै वर एष मम प्रभो ॥ ०१४ ॥

प्रतिगृह्य च तां कन्यां गालवः सह पक्षिणा ।
पुनर्द्रक्ष्याव इत्युक्त्वा प्रतस्थे सह कन्यया ॥ ०१५ ॥

उपलब्धमिदं द्वारमश्वानामिति चाण्डजः ।
उक्त्वा गालवमापृच्छ्य जगाम भवनं स्वकम् ॥ ०१६ ॥

गते पतगराजे तु गालवः सह कन्यया ।
चिन्तयानः क्षमं दाने राज्ञां वै शुल्कतोऽगमत् ॥ ०१७ ॥

सोऽगच्छन्मनसेक्ष्वाकुं हर्यश्वं राजसत्तमम् ।
अयोध्यायां महावीर्यं चतुरङ्गबलान्वितम् ॥ ०१८ ॥

कोशधान्यबलोपेतं प्रियपौरं द्विजप्रियम् ।
प्रजाभिकामं शाम्यन्तं कुर्वाणं तप उत्तमम् ॥ ०१९ ॥

तमुपागम्य विप्रः स हर्यश्वं गालवोऽब्रवीत् ।
कन्येयं मम राजेन्द्र प्रसवैः कुलवर्धिनी ॥ ०२० ॥

इयं शुल्केन भार्यार्थे हर्यश्व प्रतिगृह्यताम् ।
शुल्कं ते कीर्तयिष्यामि तच्छ्रुत्वा संप्रधार्यताम् ॥ ०२१ ॥

---

# अध्याय ११४

नारद उवाच ॥

हर्यश्वस्त्वब्रवीद्राजा विचिन्त्य बहुधा ततः ।
दीर्घमुष्णं च निःश्वस्य प्रजाहेतोर्नृपोत्तमः ॥ ००१ ॥

उन्नतेषून्नता षट्सु सूक्ष्मा सूक्ष्मेषु सप्तसु ।
गम्भीरा त्रिषु गम्भीरेष्वियं रक्ता च पञ्चसु ॥ ००२ ॥

बहुदेवासुरालोका बहुगन्धर्वदर्शना ।
बहुलक्षणसंपन्ना बहुप्रसवधारिणी ॥ ००३ ॥

समर्थेयं जनयितुं चक्रवर्तिनमात्मजम् ।
ब्रूहि शुल्कं द्विजश्रेष्ठ समीक्ष्य विभवं मम ॥ ००४ ॥

गालव उवाच ॥

एकतःश्यामकर्णानां शतान्यष्टौ ददस्व मे ।
हयानां चन्द्रशुभ्राणां देशजानां वपुष्मताम् ॥ ००५ ॥

ततस्तव भवित्रीयं पुत्राणां जननी शुभा ।
अरणीव हुताशानां योनिरायतलोचना ॥ ००६ ॥

नारद उवाच ॥

एतच्छ्रुत्वा वचो राजा हर्यश्वः काममोहितः ।
उवाच गालवं दीनो राजर्षिर्ऋषिसत्तमम् ॥ ००७ ॥

द्वे मे शते संनिहिते हयानां यद्विधास्तव ।
एष्टव्याः शतशस्त्वन्ये चरन्ति मम वाजिनः ॥ ००८ ॥

सोऽहमेकमपत्यं वै जनयिष्यामि गालव ।
अस्यामेतं भवान्कामं संपादयतु मे वरम् ॥ ००९ ॥

एतच्छ्रुत्वा तु सा कन्या गालवं वाक्यमब्रवीत् ।
मम दत्तो वरः कश्चित्केनचिद्ब्रह्मवादिना ॥ ०१० ॥

प्रसूत्यन्ते प्रसूत्यन्ते कन्यैव त्वं भविष्यसि ।
स त्वं ददस्व मां राज्ञे प्रतिगृह्य हयोत्तमान् ॥ ०११ ॥

नृपेभ्यो हि चतुर्भ्यस्ते पूर्णान्यष्टौ शतानि वै ।
भविष्यन्ति तथा पुत्रा मम चत्वार एव च ॥ ०१२ ॥

क्रियतां मम संहारो गुर्वर्थं द्विजसत्तम ।
एषा तावन्मम प्रज्ञा यथा वा मन्यसे द्विज ॥ ०१३ ॥

एवमुक्तस्तु स मुनिः कन्यया गालवस्तदा ।
हर्यश्वं पृथिवीपालमिदं वचनमब्रवीत् ॥ ०१४ ॥

इयं कन्या नरश्रेष्ठ हर्यश्व प्रतिगृह्यताम् ।
चतुर्भागेन शुल्कस्य जनयस्वैकमात्मजम् ॥ ०१५ ॥

प्रतिगृह्य स तां कन्यां गालवं प्रतिनन्द्य च ।
समये देशकाले च लब्धवान्सुतमीप्सितम् ॥ ०१६ ॥

ततो वसुमना नाम वसुभ्यो वसुमत्तरः ।
वसुप्रख्यो नरपतिः स बभूव वसुप्रदः ॥ ०१७ ॥

अथ काले पुनर्धीमान्गालवः प्रत्युपस्थितः ।
उपसङ्गम्य चोवाच हर्यश्वं प्रीतिमानसम् ॥ ०१८ ॥

जातो नृप सुतस्तेऽयं बालभास्करसंनिभः ।
कालो गन्तुं नरश्रेष्ठ भिक्षार्थमपरं नृपम् ॥ ०१९ ॥

हर्यश्वः सत्यवचने स्थितः स्थित्वा च पौरुषे ।
दुर्लभत्वाद्धयानां च प्रददौ माधवीं पुनः ॥ ०२० ॥

माधवी च पुनर्दीप्तां परित्यज्य नृपश्रियम् ।
कुमारी कामतो भूत्वा गालवं पृष्ठतोऽन्वगात् ॥ ०२१ ॥

त्वय्येव तावत्तिष्ठन्तु हया इत्युक्तवान्द्विजः ।
प्रययौ कन्यया सार्धं दिवोदासं प्रजेश्वरम्  ॥ ०२२  ॥

---

# अध्याय ११५

गालव उवाच  ॥

महावीर्यो महीपालः काशीनामीश्वरः प्रभुः ।
दिवोदास इति ख्यातो भैमसेनिर्नराधिपः  ॥ ००१  ॥

तत्र गच्छावहे भद्रे शनैरागच्छ मा शुचः ।
धार्मिकः संयमे युक्तः सत्यश्चैव जनेश्वरः  ॥ ००२  ॥

नारद उवाच  ॥

तमुपागम्य स मुनिर्न्यायतस्तेन सत्कृतः ।
गालवः प्रसवस्यार्थे तं नृपं प्रत्यचोदयत्  ॥ ००३  ॥

दिवोदास उवाच  ॥

श्रुतमेतन्मया पूर्वं किमुक्त्वा विस्तरं द्विज ।
काङ्क्षितो हि मयैषोऽर्थः श्रुत्वैतद्द्विजसत्तम  ॥ ००४  ॥

एतच्च मे बहुमतं यदुत्सृज्य नराधिपान् ।
मामेवमुपयातोऽसि भावि चैतदसंशयम्  ॥ ००५  ॥

स एव विभवोऽस्माकमश्वानामपि गालव ।

अहमप्येकमेवास्यां जनयिष्यामि पार्थिवम्  ॥ ००६  ॥

नारद उवाच  ॥

तथेत्युक्त्वा द्विजश्रेष्ठः प्रादात्कन्यां महीपतेः ।
विधिपूर्वं च तां राजा कन्यां प्रतिगृहीतवान्  ॥ ००७  ॥

रेमे स तस्यां राजर्षिः प्रभावत्यां यथा रविः ।
स्वाहायां च यथा वह्निर्यथा शच्यां स वासवः  ॥ ००८  ॥

यथा चन्द्रश्च रोहिण्यां यथा धूमोर्णया यमः ।
वरुणश्च यथा गौर्यां यथा चर्द्ध्यां धनेश्वरः  ॥ ००९  ॥

यथा नारायणो लक्ष्म्यां जाह्नव्यां च यथोदधिः ।
यथा रुद्रश्च रुद्राण्यां यथा वेद्यां पितामहः  ॥ ०१०  ॥

अदृश्यन्त्यां च वासिष्ठो वसिष्ठश्चाक्षमालया ।
च्यवनश्च सुकन्यायां पुलस्त्यः संध्यया यथा  ॥ ०११  ॥

अगस्त्यश्चापि वैदर्भ्यां सावित्र्यां सत्यवान्यथा ।
यथा भृगुः पुलोमायामदित्यां कश्यपो यथा  ॥ ०१२  ॥

रेणुकायां यथार्चीको हैमवत्यां च कौशिकः ।
बृहस्पतिश्च तारायां शुक्रश्च शतपर्वया  ॥ ०१३  ॥

यथा भूम्यां भूमिपतिरुर्वश्यां च पुरूरवाः ।
ऋचीकः सत्यवत्यां च सरस्वत्यां यथा मनुः  ॥ ०१४  ॥

तथा तु रममाणस्य दिवोदासस्य भूपतेः ।
माधवी जनयामास पुत्रमेकं प्रतर्दनम्  ॥ ०१५  ॥

अथाजगाम भगवान्दिवोदासं स गालवः ।
समये समनुप्राप्ते वचनं चेदमब्रवीत् ॥ ०१६ ॥

निर्यातयतु मे कन्यां भवांस्तिष्ठन्तु वाजिनः ।
यावदन्यत्र गच्छामि शुल्कार्थं पृथिवीपते ॥ ०१७ ॥

दिवोदासोऽथ धर्मात्मा समये गालवस्य ताम् ।
कन्यां निर्यातयामास स्थितः सत्ये महीपतिः ॥ ०१८ ॥

---

# अध्याय ११६

नारद उवाच ॥

तथैव सा श्रियं त्यक्त्वा कन्या भूत्वा यशस्विनी ।
माधवी गालवं विप्रमन्वयात्सत्यसङ्गरा ॥ ००१ ॥

गालवो विमृशन्नेव स्वकार्यगतमानसः ।
जगाम भोजनगरं द्रष्टुमौशीनरं नृपम् ॥ ००२ ॥

तमुवाचाथ गत्वा स नृपतिं सत्यविक्रमम् ।
इयं कन्या सुतौ द्वौ ते जनयिष्यति पार्थिवौ ॥ ००३ ॥

अस्यां भवानवाप्तार्थो भविता प्रेत्य चेह च ।
सोमार्कप्रतिसङ्काशौ जनयित्वा सुतौ नृप ॥ ००४ ॥

शुल्कं तु सर्वधर्मज्ञ हयानां चन्द्रवर्चसाम् ।
एकतःश्यामकर्णानां देयं मह्यं चतुःशतम् ॥ ००५ ॥

गुर्वर्थोऽयं समारम्भो न हयैः कृत्यमस्ति मे ।
यदि शक्यं महाराज क्रियतां मा विचार्यताम्  ॥ ००६  ॥

अनपत्योऽसि राजर्षे पुत्रौ जनय पार्थिव ।
पितॄन्पुत्रप्लवेन त्वमात्मानं चैव तारय  ॥ ००७  ॥

न पुत्रफलभोक्ता हि राजर्षे पात्यते दिवः ।
न याति नरकं घोरं यत्र गच्छन्त्यनात्मजाः  ॥ ००८  ॥

एतच्चान्यच्च विविधं श्रुत्वा गालवभाषितम् ।
उशीनरः प्रतिवचो ददौ तस्य नराधिपः  ॥ ००९  ॥

श्रुतवानस्मि ते वाक्यं यथा वदसि गालव ।
विधिस्तु बलवान्ब्रह्मन्प्रवणं हि मनो मम  ॥ ०१०  ॥

शते द्वे तु ममाश्वानामीदृशानां द्विजोत्तम ।
इतरेषां सहस्राणि सुबहूनि चरन्ति मे  ॥ ०११  ॥

अहमप्येकमेवास्यां जनयिष्यामि गालव ।
पुत्रं द्विज गतं मार्गं गमिष्यामि परैरहम्  ॥ ०१२  ॥

मूल्येनापि समं कुर्यां तवाहं द्विजसत्तम ।
पौरजानपदार्थं तु ममार्थो नात्मभोगतः  ॥ ०१३  ॥

कामतो हि धनं राजा पारक्यं यः प्रयच्छति ।
न स धर्मेण धर्मात्मन्युज्यते यशसा न च  ॥ ०१४  ॥

सोऽहं प्रतिग्रहीष्यामि ददात्वेतां भवान्मम ।
कुमारीं देवगर्भाभामेकपुत्रभवाय मे  ॥ ०१५  ॥

तथा तु बहुकल्याणमुक्तवन्तं नराधिपम् ।

उशीनरं द्विजश्रेष्ठो गालवः प्रत्यपूजयत् ॥ ०१६ ॥

उशीनरं प्रतिग्राह्य गालवः प्रययौ वनम् ।
रेमे स तां समासाद्य कृतपुण्य इव श्रियम् ॥ ०१७ ॥

कन्दरेषु च शैलानां नदीनां निर्झरेषु च ।
उद्यानेषु विचित्रेषु वनेषूपवनेषु च ॥ ०१८ ॥

हर्म्येषु रमणीयेषु प्रासादशिखरेषु च ।
वातायनविमानेषु तथा गर्भगृहेषु च ॥ ०१९ ॥

ततोऽस्य समये जज्ञे पुत्रो बालरविप्रभः ।
शिबिर्नाम्नाभिविख्यातो यः स पार्थिवसत्तमः ॥ ०२० ॥

उपस्थाय स तं विप्रो गालवः प्रतिगृह्य च ।
कन्यां प्रयातस्तां राजन्दृष्टवान्विनतात्मजम् ॥ ०२१ ॥

---

# अध्याय ११७

नारद उवाच ॥

गालवं वैनतेयोऽथ प्रहसन्निदमब्रवीत् ।
दिष्ट्या कृतार्थं पश्यामि भवन्तमिह वै द्विज ॥ ००१ ॥

गालवस्तु वचः श्रुत्वा वैनतेयेन भाषितम् ।
चतुर्भागावशिष्टं तदाचख्यौ कार्यमस्य हि ॥ ००२ ॥

सुपर्णस्त्वब्रवीदेनं गालवं पततां वरः ।

प्रयत्नस्ते न कर्तव्यो नैष संपत्स्यते तव ॥ ००३ ॥

पुरा हि कन्यकुब्जे वै गाधेः सत्यवतीं सुताम् ।
भार्यार्थेऽवरयत्कन्यामृचीकस्तेन भाषितः ॥ ००४ ॥

एकतःश्यामकर्णानां हयानां चन्द्रवर्चसाम् ।
भगवन्दीयतां मह्यं सहस्रमिति गालव ॥ ००५ ॥

ऋचीकस्तु तथेत्युक्त्वा वरुणस्यालयं गतः ।
अश्वतीर्थे हया.णल्लब्ध्वा दत्तवान्पार्थिवाय वै ॥ ००६ ॥

इष्ट्वा ते पुण्डरीकेण दत्ता राज्ञा द्विजातिषु ।
तेभ्यो द्वे द्वे शते क्रीत्वा प्राप्तास्ते पार्थिवैस्तदा ॥ ००७ ॥

अपराण्यपि चत्वारि शतानि द्विजसत्तम ।
नीयमानानि संतारे हृतान्यासन्वितस्तया ॥ ००८ ॥

एवं न शक्यमप्राप्यं प्राप्तुं गालव कर्हिचित् ॥ ००८ ॥

इमामश्वशताभ्यां वै द्वाभ्यां तस्मै निवेदय ।
विश्वामित्राय धर्मात्मन्षड्भिरश्वशतैः सह ॥ ००९ ॥

ततोऽसि गतसंमोहः कृतकृत्यो द्विजर्षभ ॥ ००९ ॥

गालवस्तं तथेत्युक्त्वा सुपर्णसहितस्ततः ।
आदायाश्वांश्च कन्यां च विश्वामित्रमुपागमत् ॥ ०१० ॥

गालव उवाच ॥

अश्वानां काङ्क्षितार्थानां षडिमानि शतानि वै ।
शतद्वयेन कन्येयं भवता प्रतिगृह्यताम् ॥ ०११ ॥

अस्यां राजर्षिभिः पुत्रा जाता वै धार्मिकास्त्रयः ।
चतुर्थं जनयत्वेकं भवानपि नरोत्तम ॥ ०१२ ॥

पूर्णान्येवं शतान्यष्टौ तुरगाणां भवन्तु ते ।
भवतो ह्यनृणो भूत्वा तपः कुर्यां यथासुखम् ॥ ०१३ ॥

नारद् उवाच ॥

विश्वामित्रस्तु तं दृष्ट्वा गालवं सह पक्षिणा ।
कन्यां च तां वरारोहामिदमित्यब्रवीद्वचः ॥ ०१४ ॥

किमियं पूर्वमेवेह न दत्ता मम गालव ।
पुत्रा ममैव चत्वारो भवेयुः कुलभावनाः ॥ ०१५ ॥

प्रतिगृह्णामि ते कन्यामेकपुत्रफलाय वै ।
अश्वाश्चाश्रममासाद्य तिष्ठन्तु मम सर्वशः ॥ ०१६ ॥

स तया रममाणोऽथ विश्वामित्रो महाद्युतिः ।
आत्मजं जनयामास माधवीपुत्रमष्टकम् ॥ ०१७ ॥

जातमात्रं सुतं तं च विश्वामित्रो महाद्युतिः ।
संयोज्यार्थैस्तथा धर्मैरश्वैस्तैः समयोजयत् ॥ ०१८ ॥

अथाष्टकः पुरं प्रायात्तदा सोमपुरप्रभम् ।
निर्यात्य कन्यां शिष्याय कौशिकोऽपि वनं ययौ ॥ ०१९ ॥

गालवोऽपि सुपर्णेन सह निर्यात्य दक्षिणाम् ।
मनसाभिप्रतीतेन कन्यामिदमुवाच ह ॥ ०२० ॥

जातो दानपतिः पुत्रस्त्वया शूरस्तथापरः ।

सत्यधर्मरतश्चान्यो यज्वा चापि तथापरः ॥ ०२१ ॥

तदागच्छ वरारोहे तारितस्ते पिता सुतैः ।
चत्वारश्चैव राजानस्तथाहं च सुमध्यमे ॥ ०२२ ॥

गालवस्त्वभ्यनुज्ञाय सुपर्णं पन्नगाशनम् ।
पितुर्निर्यात्य तां कन्यां प्रययौ वनमेव ह ॥ ०२३ ॥

---

# अध्याय ११८

नारद उवाच ॥

स तु राजा पुनस्तस्याः कर्तुकामः स्वयंवरम् ।
उपगम्याश्रमपदं गङ्गायमुनसङ्गमे ॥ ००१ ॥

गृहीतमाल्यदामां तां रथमारोप्य माधवीम् ।
पूरुर्यदुश्च भगिनीमाश्रमे पर्यधावताम् ॥ ००२ ॥

नागयक्षमनुष्याणां पतत्रिमृगपक्षिणाम् ।
शैलद्रुमवनौकानामासीत्तत्र समागमः ॥ ००३ ॥

नानापुरुषदेशानामीश्वरैश्च समाकुलम् ।
ऋषिभिर्ब्रह्मकल्पैश्च समन्तादावृतं वनम् ॥ ००४ ॥

निर्दिश्यमानेषु तु सा वरेषु वरवर्णिनी ।
वरानुत्क्रम्य सर्वांस्तान्वनं वृतवती वरम् ॥ ००५ ॥

अवतीर्य रथात्कन्या नमस्कृत्वा च बन्धुषु ।
उपगम्य वनं पुण्यं तपस्तेपे ययातिजा ॥ ००६ ॥

उपवासैश्च विविधैर्दीक्षाभिर्नियमैस्तथा ।
आत्मनो लघुतां कृत्वा बभूव मृगचारिणी ॥ ००७ ॥

वैडूर्याङ्कुरकल्पानि मृदूनि हरितानि च ।
चरन्ती शष्पमुख्यानि तिक्तानि मधुराणि च ॥ ००८ ॥

स्रवन्तीनां च पुण्यानां सुरसानि शुचीनि च ।
पिबन्ती वारिमुख्यानि शीतानि विमलानि च ॥ ००९ ॥

वनेषु मृगराजेषु सिंहविप्रोषितेषु च ।
दावाग्निविप्रमुक्तेषु शून्येषु गहनेषु च ॥ ०१० ॥

चरन्ती हरिणैः सार्धं मृगीव वनचारिणी ।
चचार विपुलं धर्मं ब्रह्मचर्येण संवृता ॥ ०११ ॥

ययातिरपि पूर्वेषां राज्ञां वृत्तमनुष्ठितः ।
बहुवर्षसहस्रायुरयुजत्कालधर्मणा ॥ ०१२ ॥

पूरुर्यदुश्च द्वौ वंशौ वर्धमानौ नरोत्तमौ ।
ताभ्यां प्रतिष्ठितो लोके परलोके च नाहुषः ॥ ०१३ ॥

महीयते नरपतिर्ययातिः स्वर्गमास्थितः ।
महर्षिकल्पो नृपतिः स्वर्गाग्र्यफलभुग्विभुः ॥ ०१४ ॥

बहुवर्षसहस्राख्ये काले बहुगुणे गते ।
राजर्षिषु निषण्णेषु महीयःसु महर्षिषु ॥ ०१५ ॥

अवमेने नरान्सर्वान्देवानृषिगणांस्तथा ।

ययातिर्मूढविज्ञानो विस्मयाविष्टचेतनः ॥ ०१६ ॥

ततस्तं बुबुधे देवः शक्रो बलनिषूदनः ।
ते च राजर्षयः सर्वे धिग्धिगित्येवमब्रुवन् ॥ ०१७ ॥

विचारश्च समुत्पन्नो निरीक्ष्य नहुषात्मजम् ।
को न्वयं कस्य वा राज्ञः कथं वा स्वर्गमागतः ॥ ०१८ ॥

कर्मणा केन सिद्धोऽयं क्व वानेन तपश्चितम् ।
कथं वा ज्ञायते स्वर्गे केन वा ज्ञायतेऽप्युत ॥ ०१९ ॥

एवं विचारयन्तस्ते राजानः स्वर्गवासिनः ।
दृष्ट्वा पप्रच्छुरन्योन्यं ययातिं नृपतिं प्रति ॥ ०२० ॥

विमानपालाः शतशः स्वर्गद्वाराभिरक्षिणः ।
पृष्टा आसनपालाश्च न जानीमेत्यथाब्रुवन् ॥ ०२१ ॥

सर्वे ते ह्यावृतज्ञाना नाभ्यजानन्त तं नृपम् ।
स मुहूर्तादथ नृपो हतौजा अभवत्तदा ॥ ०२२ ॥

---

# अध्याय ११९

नारद उवाच ॥

अथ प्रचलितः स्थानादासनाच्च परिच्युतः ।
कम्पितेनैव मनसा धर्षितः शोकवह्निना ॥ ००१ ॥

म्लानस्त्रग्भ्रष्टविज्ञानः प्रभ्रष्टमुकुटाङ्गदः ।
विघूर्णन्स्त्रस्तसर्वाङ्गः प्रभ्रष्टाभरणाम्बरः ॥ ००२ ॥

अदृश्यमानस्तान्पश्यन्नपश्यंश्च पुनः पुनः ।
शून्यः शून्येन मनसा प्रपतिष्यन्महीतलम् ॥ ००३ ॥

किं मया मनसा ध्यातमशुभं धर्मदूषणम् ।
येनाहं चलितः स्थानादिति राजा व्यचिन्तयत् ॥ ००४ ॥

ते तु तत्रैव राजानः सिद्धाश्चाप्सरसस्तथा ।
अपश्यन्त निरालम्बं ययातिं तं परिच्युतम् ॥ ००५ ॥

अथैत्य पुरुषः कश्चित्क्षीणपुण्यनिपातकः ।
ययातिमब्रवीद्राजन्देवराजस्य शासनात् ॥ ००६ ॥

अतीव मदमत्तस्त्वं न कञ्चिन्नावमन्यसे ।
मानेन भ्रष्टः स्वर्गस्ते नार्हस्त्वं पार्थिवात्मज ॥ ००७ ॥

न च प्रज्ञायसे गच्छ पतस्वेति तमब्रवीत् ॥ ००७ ॥

पतेयं सत्स्विति वचस्त्रिरुक्त्वा नहुषात्मजः ।
पतिष्यंश्चिन्तयामास गतिं गतिमतां वरः ॥ ००८ ॥

एतस्मिन्नेव काले तु नैमिषे पार्थिवर्षभान् ।
चतुरोऽपश्यत नृपस्तेषां मध्ये पपात सः ॥ ००९ ॥

प्रतर्दनो वसुमनाः शिबिरौशीनरोऽष्टकः ।
वाजपेयेन यज्ञेन तर्पयन्ति सुरेश्वरम् ॥ ०१० ॥

तेषामध्वरजं धूमं स्वर्गद्वारमुपस्थितम् ।
ययातिरुपजिघ्रन्वै निपपात महीं प्रति ॥ ०११ ॥

भूमौ स्वर्गे च संबद्धां नदीं धूममयीं नृपः ।
स गङ्गामिव गच्छन्तीमालम्ब्य जगतीपतिः ॥ ०१२ ॥

श्रीमत्स्ववभृथाग्र्येषु चतुर्षु प्रतिबन्धुषु ।
मध्ये निपतितो राजा लोकपालोपमेषु च ॥ ०१३ ॥

चतुर्षु हुतकल्पेषु राजसिंहमहाग्निषु ।
पपात मध्ये राजर्षिर्ययातिः पुण्यसङ्क्षये ॥ ०१४ ॥

तमाहुः पार्थिवाः सर्वे प्रतिमानमिव श्रियः ।
को भवान्कस्य वा बन्धुर्देशस्य नगरस्य वा ॥ ०१५ ॥

यक्षो वाप्यथ वा देवो गन्धर्वो राक्षसोऽपि वा ।
न हि मानुषरूपोऽसि को वार्थः काङ्क्षितस्त्वया ॥ ०१६ ॥

ययातिरुवाच ॥

ययातिरस्मि राजर्षिः क्षीणपुण्यश्च्युतो दिवः ।
पतेयं सत्स्विति ध्यायन्भवत्सु पतितस्ततः ॥ ०१७ ॥

राजान ऊचुः ॥

सत्यमेतद्भवतु ते काङ्क्षितं पुरुषर्षभ ।
सर्वेषां नः क्रतुफलं धर्मश्च प्रतिगृह्यताम् ॥ ०१८ ॥

ययातिरुवाच ॥

नाहं प्रतिग्रहधनो ब्राह्मणः क्षत्रियो ह्यहम् ।
न च मे प्रवणा बुद्धिः परपुण्यविनाशने ॥ ०१९ ॥

नारद उवाच ॥

एतस्मिन्नेव काले तु मृगचर्याक्रमागताम् ।
माधवीं प्रेक्ष्य राजानस्तेऽभिवाद्येदमब्रुवन् ॥ ०२० ॥

किमागमनकृत्यं ते किं कुर्वः शासनं तव ।
आज्ञाप्या हि वयं सर्वे तव पुत्रास्तपोधने ॥ ०२१ ॥

तेषां तद्भाषितं श्रुत्वा माधवी परया मुदा ।
पितरं समुपागच्छद्ययातिं सा ववन्द च ॥ ०२२ ॥

दृष्ट्वा मूर्ध्ना नतान्पुत्रांस्तापसी वाक्यमब्रवीत् ।
दौहित्रास्तव राजेन्द्र मम पुत्रा न ते पराः ॥ ०२३ ॥

इमे त्वां तारयिष्यन्ति दिष्टमेतत्पुरातनम् ॥ ०२३ ॥

अहं ते दुहिता राजन्माधवी मृगचारिणी ।
मयाप्युपचितो धर्मस्ततोऽर्धं प्रतिगृह्यताम् ॥ ०२४ ॥

यस्माद्राजन्नराः सर्वे अपत्यफलभागिनः ।
तस्मादिच्छन्ति दौहित्रान्यथा त्वं वसुधाधिप ॥ ०२५ ॥

ततस्ते पार्थिवाः सर्वे शिरसा जननीं तदा ।
अभिवाद्य नमस्कृत्य मातामहमथाब्रुवन् ॥ ०२६ ॥

उच्चैरनुपमैः स्निग्धैः स्वरैरापूर्य मेदिनीम् ।
मातामहं नृपतयस्तारयन्तो दिवश्च्युतम् ॥ ०२७ ॥

अथ तस्मादुपगतो गालवोऽप्याह पार्थिवम् ।
तपसो मेऽष्टभागेन स्वर्गमारोहतां भवान् ॥ ०२८ ॥

# अध्याय १२०

नारद उवाच ॥

प्रत्यभिज्ञातमात्रोऽथ सद्भिस्तैर्नरपुङ्गवः ।
ययातिर्दिव्यसंस्थानो बभूव विगतज्वरः ॥ ००१ ॥

दिव्यमाल्याम्बरधरो दिव्याभरणभूषितः ।
दिव्यगन्धगुणोपेतो न पृथ्वीमस्पृशत्पदा ॥ ००२ ॥

ततो वसुमनाः पूर्वमुच्चैरुच्चारयन्वचः ।
ख्यातो दानपतिर्लोके व्याजहार नृपं तदा ॥ ००३ ॥

प्राप्तवानस्मि यल्लोके सर्ववर्णेष्वगर्हया ।
तदप्यथ च दास्यामि तेन संयुज्यतां भवान् ॥ ००४ ॥

यत्फलं दानशीलस्य क्षमाशीलस्य यत्फलम् ।
यच्च मे फलमाधाने तेन संयुज्यतां भवान् ॥ ००५ ॥

ततः प्रतर्दनोऽप्याह वाक्यं क्षत्रियपुङ्गवः ।
यथा धर्मरतिर्नित्यं नित्यं युद्धपरायणः ॥ ००६ ॥

प्राप्तवानस्मि यल्लोके क्षत्रधर्मोद्भवं यशः ।
वीरशब्दफलं चैव तेन संयुज्यतां भवान् ॥ ००७ ॥

शिबिरौशीनरो धीमानुवाच मधुरां गिरम् ।
यथा बालेषु नारीषु वैहार्येषु तथैव च ॥ ००८ ॥

सङ्गरेषु निपातेषु तथापद्व्यसनेषु च ।
अनृतं नोक्तपूर्वं मे तेन सत्येन खं व्रज ॥ ००९ ॥

यथा प्राणांश्च राज्यं च राजन्कर्म सुखानि च ।
त्यजेयं न पुनः सत्यं तेन सत्येन खं व्रज ॥ ०१० ॥

यथा सत्येन मे धर्मो यथा सत्येन पावकः ।
प्रीतः शक्रश्च सत्येन तेन सत्येन खं व्रज ॥ ०११ ॥

अष्टकस्त्वथ राजर्षिः कौशिको माधवीसुतः ।
अनेकशतयज्वानं वचनं प्राह धर्मवित् ॥ ०१२ ॥

शतशः पुण्डरीका मे गोसवाश्च चिताः प्रभो ।
क्रतवो वाजपेयाश्च तेषां फलमवाप्नुहि ॥ ०१३ ॥

न मे रत्नानि न धनं न तथान्ये परिच्छदाः ।
क्रतुष्वनुपयुक्तानि तेन सत्येन खं व्रज ॥ ०१४ ॥

यथा यथा हि जल्पन्ति दौहित्रास्तं नराधिपम् ।
तथा तथा वसुमतीं त्यक्त्वा राजा दिवं ययौ ॥ ०१५ ॥

एवं सर्वे समस्तास्ते राजानः सुकृतैस्तदा ।
ययातिं स्वर्गतो भ्रष्टं तारयामासुरञ्जसा ॥ ०१६ ॥

दौहित्राः स्वेन धर्मेण यज्ञदानकृतेन वै ।
चतुर्षु राजवंशेषु संभूताः कुलवर्धनाः ॥ ०१७ ॥

मातामहं महाप्राज्ञं दिवमारोपयन्ति ते ॥ ०१७ ॥

राजान ऊचुः ॥

राजधर्मगुणोपेताः सर्वधर्मगुणान्विताः ।
दौहित्रास्ते वयं राजन्दिवमारोह पार्थिवः ॥ ०१८ ॥

---

# अध्याय १२१

नारद उवाच ॥

सद्भिरारोपितः स्वर्गं पार्थिवैर्भूरिदक्षिणैः ।
अभ्यनुज्ञाय दौहित्रान्ययातिर्दिवमास्थितः ॥ ००१ ॥

अभिवृष्टश्च वर्षेण नानापुष्पसुगन्धिना ।
परिष्वक्तश्च पुण्येन वायुना पुण्यगन्धिना ॥ ००२ ॥

अचलं स्थानमारुह्य दौहित्रफलनिर्जितम् ।
कर्मभिः स्वैरुपचितो जज्वाल परया श्रिया ॥ ००३ ॥

उपगीतोपनृत्तश्च गन्धर्वाप्सरसां गणैः ।
प्रीत्या प्रतिगृहीतश्च स्वर्गे दुन्दुभिनिस्वनैः ॥ ००४ ॥

अभिष्टुतश्च विविधैर्देवराजर्षिचारणैः ।
अर्चितश्चोत्तमार्घेण दैवतैरभिनन्दितः ॥ ००५ ॥

प्राप्तः स्वर्गफलं चैव तमुवाच पितामहः ।
निर्वृतं शान्तमनसं वचोभिस्तर्पयन्निव ॥ ००६ ॥

चतुष्पादस्त्वया धर्मश्चितो लोक्येन कर्मणा ।
अक्षयस्तव लोकोऽयं कीर्तिश्चैवाक्षया दिवि ॥ ००७ ॥

पुनस्तवाद्य राजर्षे सुकृतेनेह कर्मणा ॥ ००७ ॥

आवृतं तमसा चेतः सर्वेषां स्वर्गवासिनाम् ।
येन त्वां नाभिजानन्ति ततोऽज्ञात्वासि पातितः ॥ ००८ ॥

प्रीत्यैव चासि दौहित्रैस्तारितस्त्वमिहागतः ।
स्थानं च प्रतिपन्नोऽसि कर्मणा स्वेन निर्जितम् ॥ ००९ ॥

अचलं शाश्वतं पुण्यमुत्तमं ध्रुवमव्ययम् ॥ ००९ ॥

ययातिरुवाच ॥

भगवन्संशयो मेऽस्ति कश्चित्तं छेत्तुमर्हसि ।
न ह्यन्यमहमर्हामि प्रष्टुं लोकपितामह ॥ ०१० ॥

बहुवर्षसहस्रान्तं प्रजापालनवर्धितम् ।
अनेकक्रतुदानौघैरर्जितं मे महत्फलम् ॥ ०११ ॥

कथं तदल्पकालेन क्षीणं येनास्मि पातितः ।
भगवन्वेत्थ लोकांश्च शाश्वतान्मम निर्जितान् ॥ ०१२ ॥

पितामह उवाच ॥

बहुवर्षसहस्रान्तं प्रजापालनवर्धितम् ।
अनेकक्रतुदानौघैर्यत्त्वयोपार्जितं फलम् ॥ ०१३ ॥

तदनेनैव दोषेण क्षीणं येनासि पातितः ।
अभिमानेन राजेन्द्र धिक्कृतः स्वर्गवासिभिः ॥ ०१४ ॥

नायं मानेन राजर्षे न बलेन न हिंसया ।

न शाठ्येन न मायाभिर्लोको भवति शाश्वतः ॥ ०१५ ॥

नावमान्यास्त्वया राजन्नवरोत्कृष्टमध्यमाः ।
न हि मानप्रदग्धानां कश्चिदस्ति समः क्वचित् ॥ ०१६ ॥

पतनारोहणमिदं कथयिष्यन्ति ये नराः ।
विषमाण्यपि ते प्राप्तास्तरिष्यन्ति न संशयः ॥ ०१७ ॥

नारद उवाच ॥

एष दोषोऽभिमानेन पुरा प्राप्तो ययातिना ।
निर्बन्धतश्चातिमात्रं गालवेन महीपते ॥ ०१८ ॥

श्रोतव्यं हितकामानां सुहृदां भूतिमिच्छताम् ।
न कर्तव्यो हि निर्बन्धो निर्बन्धो हि क्षयोदयः ॥ ०१९ ॥

तस्मात्त्वमपि गान्धारे मानं क्रोधं च वर्जय ।
संधत्स्व पाण्डवैर्वीर संरम्भं त्यज पार्थिव ॥ ०२० ॥

ददाति यत्पार्थिव यत्करोति; यद्वा तपस्तप्यति यज्जुहोति ।
न तस्य नाशोऽस्ति न चापकर्षो; नान्यस्तदश्नाति स एव कर्ता ॥ ०२१ ॥

इदं महाख्यानमनुत्तमं मतं; बहुश्रुतानां गतरोषरागिणाम् ।
समीक्ष्य लोके बहुधा प्रधाविता; त्रिवर्गदृष्टिः पृथिवीमुपाश्नुते ॥ ०२२ ॥

---

# अध्याय १२२

धृतराष्ट्र उवाच ॥

भगवन्नेवमेवैतद्यथा वदसि नारद ।
इच्छामि चाहमप्येवं न त्वीशो भगवन्नहम्  ॥ ००१  ॥

वैशंपायन उवाच  ॥

एवमुक्त्वा ततः कृष्णमभ्यभाषत भारत ।
स्वर्ग्यं लोक्यं च मामात्थ धर्म्यं न्याय्यं च केशव  ॥ ००२  ॥

न त्वहं स्ववशस्तात क्रियमाणं न मे प्रियम् ।
अङ्ग दुर्योधनं कृष्ण मन्दं शास्त्रातिगं मम  ॥ ००३  ॥

अनुनेतुं महाबाहो यतस्व पुरुषोत्तम ।
सुहृत्कार्यं तु सुमहत्कृतं ते स्याज्जनार्दन  ॥ ००४  ॥

ततोऽभ्यावृत्य वार्ष्णेयो दुर्योधनममर्षणम् ।
अब्रवीन्मधुरां वाचं सर्वधर्मार्थतत्त्ववित्  ॥ ००५  ॥

दुर्योधन निबोधेदं मद्वाक्यं कुरुसत्तम ।
समर्थं ते विशेषेण सानुबन्धस्य भारत  ॥ ००६  ॥

महाप्राज्ञ कुले जातः साध्वेतत्कर्तुमर्हसि ।
श्रुतवृत्तोपसंपन्नः सर्वैः समुदितो गुणैः  ॥ ००७  ॥

दौष्कुलेया दुरात्मानो नृशंसा निरपत्रपाः ।
त एतदीदृशं कुर्युर्यथा त्वं तात मन्यसे  ॥ ००८  ॥

धर्मार्थयुक्ता लोकेऽस्मिन्प्रवृत्तिर्लक्ष्यते सताम् ।
असतां विपरीता तु लक्ष्यते भरतर्षभ  ॥ ००९  ॥

विपरीता त्वियं वृत्तिरसकृल्लक्ष्यते त्वयि ।

अधर्मश्चानुबन्धोऽत्र घोरः प्राणहरो महान्  ॥ ०१०  ॥

अनेकशस्त्वन्निमित्तमयशस्यं च भारत ।
तमनर्थं परिहरन्नात्मश्रेयः करिष्यसि  ॥ ०११  ॥

भ्रातृणामथ भृत्यानां मित्राणां च परंतप ।
अधर्म्यादयशस्याच्च कर्मणस्त्वं प्रमोक्ष्यसे  ॥ ०१२  ॥

प्राज्ञैः शूरैर्महोत्साहैरात्मवद्भिर्बहुश्रुतैः ।
संधत्स्व पुरुषव्याघ्र पाण्डवैर्भरतर्षभ  ॥ ०१३  ॥

तद्धितं च प्रियं चैव धृतराष्ट्रस्य धीमतः ।
पितामहस्य द्रोणस्य विदुरस्य महामतेः  ॥ ०१४  ॥

कृपस्य सोमदत्तस्य बाह्लीकस्य च धीमतः ।
अश्वत्थाम्नो विकर्णस्य सञ्जयस्य विशां पते  ॥ ०१५  ॥

ज्ञातीनां चैव भूयिष्ठं मित्राणां च परंतप ।
शमे शर्म भवेत्तात सर्वस्य जगतस्तथा  ॥ ०१६  ॥

ह्रीमानसि कुले जातः श्रुतवाननृशंसवान् ।
तिष्ठ तात पितुः शास्त्रे मातुश्च भरतर्षभ  ॥ ०१७  ॥

एतच्छ्रेयो हि मन्यन्ते पिता यच्छास्ति भारत ।
उत्तमापद्गतः सर्वः पितुः स्मरति शासनम्  ॥ ०१८  ॥

रोचते ते पितुस्तात पाण्डवैः सह सङ्गमः ।
सामात्यस्य कुरुश्रेष्ठ तत्तुभ्यं तात रोचताम्  ॥ ०१९  ॥

श्रुत्वा यः सुहृदां शास्त्रं मर्त्यो न प्रतिपद्यते ।
विपाकान्ते दहत्येनं किंपाकमिव भक्षितम्  ॥ ०२०  ॥

यस्तु निःश्रेयसं वाक्यं मोहान्न प्रतिपद्यते ।
स दीर्घसूत्रो हीनार्थः पश्चात्तापेन युज्यते ॥ ०२१ ॥

यस्तु निःश्रेयसं श्रुत्वा प्राप्तमेवाभिपद्यते ।
आत्मनो मतमुत्सृज्य स लोके सुखमेधते ॥ ०२२ ॥

योऽर्थकामस्य वचनं प्रातिकूल्यान्न मृष्यते ।
शृणोति प्रतिकूलानि द्विषतां वशमेति सः ॥ ०२३ ॥

सतां मतमतिक्रम्य योऽसतां वर्तते मते ।
शोचन्ते व्यसने तस्य सुहृदो नचिरादिव ॥ ०२४ ॥

मुख्यानमात्यानुत्सृज्य यो निहीनान्निषेवते ।
स घोरामापदं प्राप्य नोत्तारमधिगच्छति ॥ ०२५ ॥

योऽसत्सेवी वृथाचारो न श्रोता सुहृदां सदा ।
परान्वृणीते स्वान्द्वेष्टि तं गौः शपति भारत ॥ ०२६ ॥

स त्वं विरुध्य तैर्वीरैरन्येभ्यस्त्राणमिच्छसि ।
अशिष्टेभ्योऽसमर्थेभ्यो मूढेभ्यो भरतर्षभ ॥ ०२७ ॥

को हि शक्रसमाञ्ज्ञातीनतिक्रम्य महारथान् ।
अन्येभ्यस्त्राणमाशंसेत्त्वदन्यो भुवि मानवः ॥ ०२८ ॥

जन्मप्रभृति कौन्तेया नित्यं विनिकृतास्त्वया ।
न च ते जातु कुप्यन्ति धर्मात्मानो हि पाण्डवाः ॥ ०२९ ॥

मिथ्याप्रचरितास्तात जन्मप्रभृति पाण्डवाः ।
त्वयि सम्यङ्महाबाहो प्रतिपन्ना यशस्विनः ॥ ०३० ॥

त्वयापि प्रतिपत्तव्यं तथैव भरतर्षभ ।
स्वेषु बन्धुषु मुख्येषु मा मन्युवशमन्वगाः ॥ ०३१ ॥

त्रिवर्गयुक्ता प्राज्ञानामारम्भा भरतर्षभ ।
धर्मार्थावनुरुध्यन्ते त्रिवर्गासंभवे नराः ॥ ०३२ ॥

पृथक्तु विनिविष्टानां धर्मं धीरोऽनुरुध्यते ।
मध्यमोऽर्थं कलिं बालः काममेवानुरुध्यते ॥ ०३३ ॥

इन्द्रियैः प्रसृतो लोभाद्धर्मं विप्रजहाति यः ।
कामार्थावनुपायेन लिप्समानो विनश्यति ॥ ०३४ ॥

कामार्थौ लिप्समानस्तु धर्ममेवादितश्चरेत् ।
न हि धर्मादपैत्यर्थः कामो वापि कदाचन ॥ ०३५ ॥

उपायं धर्ममेवाहुस्त्रिवर्गस्य विशां पते ।
लिप्समानो हि तेनाशु कक्षेऽग्निरिव वर्धते ॥ ०३६ ॥

स त्वं तातानुपायेन लिप्ससे भरतर्षभ ।
आधिराज्यं महद्दीप्तं प्रथितं सर्वराजसु ॥ ०३७ ॥

आत्मानं तक्षति ह्येष वनं परशुना यथा ।
यः सम्यग्वर्तमानेषु मिथ्या राजन्प्रवर्तते ॥ ०३८ ॥

न तस्य हि मतिं छिन्द्याद्यस्य नेच्छेत्पराभवम् ।
अविच्छिन्नस्य धीरस्य कल्याणे धीयते मतिः ॥ ०३९ ॥

त्यक्तात्मानं न बाधेत त्रिषु लोकेषु भारत ।
अप्यन्यं प्राकृतं किञ्चित्किमु तान्पाण्डवर्षभान् ॥ ०४० ॥

अमर्षवशमापन्नो न किञ्चिद्बुध्यते नरः ।

छिद्यते ह्याततं सर्वं प्रमाणं पश्य भारत ॥ ०४१ ॥

श्रेयस्ते दुर्जनात्तात पाण्डवैः सह सङ्गमः ।
तैर्हि संप्रीयमाणस्त्वं सर्वान्कामानवाप्स्यसि ॥ ०४२ ॥

पाण्डवैर्निर्जितां भूमिं भुञ्जानो राजसत्तम ।
पाण्डवान्पृष्ठतः कृत्वा त्राणमाशंससेऽन्यतः ॥ ०४३ ॥

दुःशासने दुर्विषहे कर्णे चापि ससौबले ।
एतेष्वैश्वर्यमाधाय भूतिमिच्छसि भारत ॥ ०४४ ॥

न चैते तव पर्याप्ता ज्ञाने धर्मार्थयोस्तथा ।
विक्रमे चाप्यपर्याप्ताः पाण्डवान्प्रति भारत ॥ ०४५ ॥

न हीमे सर्वराजानः पर्याप्ताः सहितास्त्वया ।
क्रुद्धस्य भीमसेनस्य प्रेक्षितुं मुखमाहवे ॥ ०४६ ॥

इदं संनिहितं तात समग्रं पार्थिवं बलम् ।
अयं भीष्मस्तथा द्रोणः कर्णश्चायं तथा कृपः ॥ ०४७ ॥

भूरिश्रवाः सौमदत्तिरश्वत्थामा जयद्रथः ।
अशक्ताः सर्व एवैते प्रतियोद्धुं धनञ्जयम् ॥ ०४८ ॥

अजेयो ह्यर्जुनः क्रुद्धः सर्वैरपि सुरासुरैः ।
मानुषैरपि गन्धर्वैर्मा युद्धे चेत आधिथाः ॥ ०४९ ॥

दृश्यतां वा पुमान्कश्चित्समग्रे पार्थिवे बले ।
योऽर्जुनं समरे प्राप्य स्वस्तिमानाव्रजेद्गृहान् ॥ ०५० ॥

किं ते जनक्षयेणेह कृतेन भरतर्षभ ।
यस्मिञ्जिते जितं ते स्यात्पुमानेकः स दृश्यताम् ॥ ०५१ ॥

यः स देवान्सगन्धर्वान्सयक्षासुरपन्नगान् ।
अजयत्खाण्डवप्रस्थे कस्तं युध्येत मानवः ॥ ०५२ ॥

तथा विराटनगरे श्रूयते महदद्भुतम् ।
एकस्य च बहूनां च पर्याप्तं तन्निदर्शनम् ॥ ०५३ ॥

तमजेयमनाधृष्यं विजेतुं जिष्णुमच्युतम् ।
आशंससीह समरे वीरमर्जुनमूर्जितम् ॥ ०५४ ॥

मद्द्वितीयं पुनः पार्थं कः प्रार्थयितुमर्हति ।
युद्धे प्रतीपमायान्तमपि साक्षात्पुरंदरः ॥ ०५५ ॥

बाहुभ्यामुद्धरेद्भूमिं दहेत्क्रुद्ध इमाः प्रजाः ।
पातयेत्त्रिदिवाद्देवान्योऽर्जुनं समरे जयेत् ॥ ०५६ ॥

पश्य पुत्रांस्तथा भ्रातॄञ्ज्ञातीन्संबन्धिनस्तथा ।
त्वत्कृते न विनश्येयुरेते भरतसत्तम ॥ ०५७ ॥

अस्तु शेषं कौरवाणां मा पराभूदिदं कुलम् ।
कुलघ्न इति नोच्येथा नष्टकीर्तिर्नराधिप ॥ ०५८ ॥

त्वामेव स्थापयिष्यन्ति यौवराज्ये महारथाः ।
महाराज्ये च पितरं धृतराष्ट्रं जनेश्वरम् ॥ ०५९ ॥

मा तात श्रियमायान्तीमवमंस्थाः समुद्यताम् ।
अर्धं प्रदाय पार्थेभ्यो महतीं श्रियमाप्स्यसि ॥ ०६० ॥

पाण्डवैः संशमं कृत्वा कृत्वा च सुहृदां वचः ।
संप्रीयमाणो मित्रैश्च चिरं भद्राण्यवाप्स्यसि ॥ ०६१ ॥

# अध्याय १२३

वैशंपायन उवाच ॥

ततः शांतनवो भीष्मो दुर्योधनममर्षणम् ।
केशवस्य वचः श्रुत्वा प्रोवाच भरतर्षभ ॥ ००१ ॥

कृष्णेन वाक्यमुक्तोऽसि सुहृदां शममिच्छता ।
अनुपश्यस्व तत्तात मा मन्युवशमन्वगाः ॥ ००२ ॥

अकृत्वा वचनं तात केशवस्य महात्मनः ।
श्रेयो न जातु न सुखं न कल्याणमवाप्स्यसि ॥ ००३ ॥

धर्म्यमर्थं महाबाहुराह त्वां तात केशवः ।
तमर्थमभिपद्यस्व मा राजन्नीनशः प्रजाः ॥ ००४ ॥

इमां श्रियं प्रज्वलितां भारतीं सर्वराजसु ।
जीवतो धृतराष्ट्रस्य दौरात्म्याद्भ्रंशयिष्यसि ॥ ००५ ॥

आत्मानं च सहामात्यं सपुत्रपशुबान्धवम् ।
सहमित्रमसद्बुद्ध्या जीविताद्भ्रंशयिष्यसि ॥ ००६ ॥

अतिक्रामन्केशवस्य तथ्यं वचनमर्थवत् ।
पितुश्च भरतश्रेष्ठ विदुरस्य च धीमतः ॥ ००७ ॥

मा कुलघ्नोऽन्तपुरुषो दुर्मतिः कापथं गमः ।
पितरं मातरं चैव वृद्धौ शोकाय मा ददः ॥ ००८ ॥

अथ द्रोणोऽब्रवीत्तत्र दुर्योधनमिदं वचः ।
अमर्षवशमापन्नं निःश्वसन्तं पुनः पुनः ॥ ००९ ॥

धर्मार्थयुक्तं वचनमाह त्वां तात केशवः ।
तथा भीष्मः शांतनवस्तज्जुषस्व नराधिप ॥ ०१० ॥

प्राज्ञौ मेधाविनौ दान्तावर्थकामौ बहुश्रुतौ ।
आहतुस्त्वां हितं वाक्यं तदादत्स्व परंतप ॥ ०११ ॥

अनुतिष्ठ महाप्राज्ञ कृष्णभीष्मौ यदूचतुः ।
मा वचो लघुबुद्धीनां समास्थास्त्वं परंतप ॥ ०१२ ॥

ये त्वां प्रोत्साहयन्त्येते नैते कृत्याय कर्हिचित् ।
वैरं परेषां ग्रीवायां प्रतिमोक्ष्यन्ति संयुगे ॥ ०१३ ॥

मा कुरूञ्जीघनः सर्वान्पुत्रान्भ्रातृंस्तथैव च ।
वासुदेवार्जुनौ यत्र विद्ध्यजेयं बलं हि तत् ॥ ०१४ ॥

एतच्चैव मतं सत्यं सुहृदोः कृष्णभीष्मयोः ।
यदि नादास्यसे तात पश्चात्तप्स्यसि भारत ॥ ०१५ ॥

यथोक्तं जामदग्न्येन भूयानेव ततोऽर्जुनः ।
कृष्णो हि देवकीपुत्रो देवैरपि दुरुत्सहः ॥ ०१६ ॥

किं ते सुखप्रियेणेह प्रोक्तेन भरतर्षभ ।
एतत्ते सर्वमाख्यातं यथेच्छसि तथा कुरु ॥ ०१७ ॥

न हि त्वामुत्सहे वक्तुं भूयो भरतसत्तम ॥ ०१७ ॥

तस्मिन्वाक्यान्तरे वाक्यं क्षत्तापि विदुरोऽब्रवीत् ।
दुर्योधनमभिप्रेक्ष्य धार्तराष्ट्रममर्षणम् ॥ ०१८ ॥

दुर्योधन न शोचामि त्वामहं भरतर्षभ ।
इमौ तु वृद्धौ शोचामि गान्धारीं पितरं च ते ॥ ०१९ ॥

यावनाथौ चरिष्येते त्वया नाथेन दुर्हृदा ।
हतमित्रौ हतामात्यौ लूनपक्षाविव द्विजौ ॥ ०२० ॥

भिक्षुकौ विचरिष्येते शोचन्तौ पृथिवीमिमाम् ।
कुलघ्नमीदृशं पापं जनयित्वा कुपूरुषम् ॥ ०२१ ॥

अथ दुर्योधनं राजा धृतराष्ट्रोऽभ्यभाषत ।
आसीनं भ्रातृभिः सार्धं राजभिः परिवारितम् ॥ ०२२ ॥

दुर्योधन निबोधेदं शौरिणोक्तं महात्मना ।
आदत्स्व शिवमत्यन्तं योगक्षेमवदव्ययम् ॥ ०२३ ॥

अनेन हि सहायेन कृष्णेनाक्लिष्टकर्मणा ।
इष्टान्सर्वानभिप्रायान्प्राप्स्यामः सर्वराजसु ॥ ०२४ ॥

सुसंहितः केशवेन गच्छ तात युधिष्ठिरम् ।
चर स्वस्त्ययनं कृत्स्नं भारतानामनामयम् ॥ ०२५ ॥

वासुदेवेन तीर्थेन तात गच्छस्व सङ्गमम् ।
कालप्राप्तमिदं मन्ये मा त्वं दुर्योधनातिगाः ॥ ०२६ ॥

शमं चेद्याचमानं त्वं प्रत्याख्यास्यसि केशवम् ।
त्वदर्थमभिजल्पन्तं न तवास्त्यपराभवः ॥ ०२७ ॥

# अध्याय १२४

वैशंपायन उवाच ॥

धृतराष्ट्रवचः श्रुत्वा भीष्मद्रोणौ समर्थ्य तौ ।
दुर्योधनमिदं वाक्यमूचतुः शासनातिगम् ॥ ००१ ॥

यावत्कृष्णावसंनद्धौ यावत्तिष्ठति गाण्डिवम् ।
यावद्धौम्यो न सेनाग्नौ जुहोतीह द्विषद्बलम् ॥ ००२ ॥

यावन्न प्रेक्षते क्रुद्धः सेनां तव युधिष्ठिरः ।
ह्रीनिषेधो महेष्वासस्तावच्छाम्यतु वैशसम् ॥ ००३ ॥

यावन्न दृष्यते पार्थः स्वेष्वनीकेष्ववस्थितः ।
भीमसेनो महेष्वासस्तावच्छाम्यतु वैशसम् ॥ ००४ ॥

यावन्न चरते मार्गान्पृतनामभिहर्षयन् ।
यावन्न शातयत्याजौ शिरांसि गजयोधिनाम् ॥ ००५ ॥

गदया वीरघातिन्या फलानीव वनस्पतेः ।
कालेन परिपक्वानि तावच्छाम्यतु वैशसम् ॥ ००६ ॥

नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः ।
विराटश्च शिखण्डी च शैशुपालिश्च दंशिताः ॥ ००७ ॥

यावन्न प्रविशन्त्येते नक्रा इव महार्णवम् ।
कृतास्त्राः क्षिप्रमस्यन्तस्तावच्छाम्यतु वैशसम् ॥ ००८ ॥

यावन्न सुकुमारेषु शरीरेषु महीक्षिताम् ।
गार्ध्रपत्राः पतन्त्युग्रास्तावच्छाम्यतु वैशसम् ॥ ००९ ॥

चन्दनागरुदिग्धेषु हारनिष्कधरेषु च ।
नोरःसु यावद्योधानां महेष्वासैर्महेषवः ॥ ०१० ॥

कृतास्त्रैः क्षिप्रमस्यद्भिर्दूरपातिभिरायसाः ।
अभिलक्ष्यैर्निपात्यन्ते तावच्छाम्यतु वैशसम् ॥ ०११ ॥

अभिवादयमानं त्वां शिरसा राजकुञ्जरः ।
पाणिभ्यां प्रतिगृह्णातु धर्मराजो युधिष्ठिरः ॥ ०१२ ॥

ध्वजाङ्कुशपताकाङ्कं दक्षिणं ते सुदक्षिणः ।
स्कन्धे निक्षिपतां बाहुं शान्तये भरतर्षभ ॥ ०१३ ॥

रत्नौषधिसमेतेन रत्नाङ्गुलितलेन च ।
उपविष्टस्य पृष्ठं ते पाणिना परिमार्जतु ॥ ०१४ ॥

शालस्कन्धो महाबाहुस्त्वां स्वजानो वृकोदरः ।
साम्नाभिवदतां चापि शान्तये भरतर्षभ ॥ ०१५ ॥

अर्जुनेन यमाभ्यां च त्रिभिस्तैरभिवादितः ।
मूर्ध्नि तान्समुपाघ्राय प्रेम्णाभिवद पार्थिव ॥ ०१६ ॥

दृष्ट्वा त्वां पाण्डवैर्वीरैर्भ्रातृभिः सह सङ्गतम् ।
यावदानन्दजाश्रूणि प्रमुञ्चन्तु नराधिपाः ॥ ०१७ ॥

घुष्यतां राजधानीषु सर्वसंपन्महीक्षिताम् ।
पृथिवी भ्रातृभावेन भुज्यतां विज्वरो भव ॥ ०१८ ॥

# अध्याय १२५

वैशंपायन उवाच ॥

श्रुत्वा दुर्योधनो वाक्यमप्रियं कुरुसंसदि ।
प्रत्युवाच महाबाहुं वासुदेवं यशस्विनम् ॥ ००१ ॥

प्रसमीक्ष्य भवानेतद्वक्तुमर्हति केशव ।
मामेव हि विशेषेण विभाष्य परिगर्हसे ॥ ००२ ॥

भक्तिवादेन पार्थानामकस्मान्मधुसूदन ।
भवान्गर्हयते नित्यं किं समीक्ष्य बलाबलम् ॥ ००३ ॥

भवान्क्षत्ता च राजा च आचार्यो वा पितामहः ।
मामेव परिगर्हन्ते नान्यं कञ्चन पार्थिवम् ॥ ००४ ॥

न चाहं लक्षये कञ्चिद्व्यभिचारमिहात्मनः ।
अथ सर्वे भवन्तो मां विद्विषन्ति सराजकाः ॥ ००५ ॥

न चाहं कञ्चिदत्यर्थमपराधमरिंदम ।
विचिन्तयन्प्रपश्यामि सुसूक्ष्ममपि केशव ॥ ००६ ॥

प्रियाभ्युपगते द्यूते पाण्डवा मधुसूदन ।
जिताः शकुनिना राज्यं तत्र किं मम दुष्कृतम् ॥ ००७ ॥

यत्पुनर्द्रविणं किञ्चित्तत्राजीयन्त पाण्डवाः ।
तेभ्य एवाभ्यनुज्ञातं तत्तदा मधुसूदन ॥ ००८ ॥

अपराधो न चास्माकं यत्ते ह्यक्षपराजिताः ।
अजेया जयतां श्रेष्ठ पार्थाः प्रव्राजिता वनम् ॥ ००९ ॥

केन चाप्यपवादेन विरुध्यन्तेऽरिभिः सह ।
अशक्ताः पाण्डवाः कृष्ण प्रहृष्टाः प्रत्यमित्रवत् ॥ ०१० ॥

किमस्माभिः कृतं तेषां कस्मिन्वा पुनरागसि ।
धार्तराष्ट्राञ्जिघांसन्ति पाण्डवाः सृञ्जयैः सह ॥ ०११ ॥

न चापि वयमुग्रेण कर्मणा वचनेन वा ।
वित्रस्ताः प्रणमामेह भयादपि शतक्रतोः ॥ ०१२ ॥

न च तं कृष्ण पश्यामि क्षत्रधर्ममनुष्ठितम् ।
उत्सहेत युधा जेतुं यो नः शत्रुनिबर्हण ॥ ०१३ ॥

न हि भीष्मकृपद्रोणाः सगणा मधुसूदन ।
देवैरपि युधा जेतुं शक्याः किमुत पाण्डवैः ॥ ०१४ ॥

स्वधर्ममनुतिष्ठन्तो यदि माधव संयुगे ।
शस्त्रेण निधनं काले प्राप्स्यामः स्वर्गमेव तत् ॥ ०१५ ॥

मुख्यश्चैवैष नो धर्मः क्षत्रियाणां जनार्दन ।
यच्छयीमहि सङ्ग्रामे शरतल्पगता वयम् ॥ ०१६ ॥

ते वयं वीरशयनं प्राप्स्यामो यदि संयुगे ।
अप्रणम्यैव शत्रूणां न नस्तप्स्यति माधव ॥ ०१७ ॥

कश्च जातु कुले जातः क्षत्रधर्मेण वर्तयन् ।
भयाद्वृत्तिं समीक्ष्यैवं प्रणमेदिह कस्यचित् ॥ ०१८ ॥

उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेदिह कस्यचित् ॥ ०१९ ॥

इति मातङ्गवचनं परीप्सन्ति हितेप्सवः ।

धर्माय चैव प्रणमेद्ब्राह्मणेभ्यश्च मद्विधः ॥ ०२० ॥

अचिन्तयन्कञ्चिदन्यं यावज्जीवं तथाचरेत् ।
एष धर्मः क्षत्रियाणां मतमेतच्च मे सदा ॥ ०२१ ॥

राज्यांशश्चाभ्यनुज्ञातो यो मे पित्रा पुराभवत् ।
न स लभ्यः पुनर्जातु मयि जीवति केशव ॥ ०२२ ॥

यावच्च राजा ध्रियते धृतराष्ट्रो जनार्दन ।
न्यस्तशस्त्रा वयं ते वाप्युपजीवाम माधव ॥ ०२३ ॥

यद्यदेयं पुरा दत्तं राज्यं परवतो मम ।
अज्ञानाद्वा भयाद्वापि मयि बाले जनार्दन ॥ ०२४ ॥

न तदद्य पुनर्लभ्यं पाण्डवैर्वृष्णिनन्दन ।
ध्रियमाणे महाबाहो मयि संप्रति केशव ॥ ०२५ ॥

यावद्धि सूच्यास्तीक्ष्णाया विध्येदग्रेण माधव ।
तावदप्यपरित्याज्यं भूमेर्नः पाण्डवान्प्रति ॥ ०२६ ॥

---

# अध्याय १२६

वैशंपायन उवाच ॥

ततः प्रहस्य दाशार्हः क्रोधपर्याकुलेक्षणः ।
दुर्योधनमिदं वाक्यमब्रवीत्कुरुसंसदि ॥ ००१ ॥

लप्स्यसे वीरशयनं काममेतदवाप्स्यसि ।
स्थिरो भव सहामात्यो विमर्दो भविता महान्  ॥ ००२  ॥

यच्चैवं मन्यसे मूढ न मे कश्चिद्व्यतिक्रमः ।
पाण्डवेष्विति तत्सर्वं निबोधत नराधिपाः  ॥ ००३  ॥

श्रिया संतप्यमानेन पाण्डवानां महात्मनाम् ।
त्वया दुर्मन्त्रितं द्यूतं सौबलेन च भारत  ॥ ००४  ॥

कथं च ज्ञातयस्तात श्रेयांसः साधुसंमताः ।
तथान्याय्यमुपस्थातुं जिह्मेनाजिह्मचारिणः  ॥ ००५  ॥

अक्षद्यूतं महाप्राज्ञ सतामरतिनाशनम् ।
असतां तत्र जायन्ते भेदाश्च व्यसनानि च  ॥ ००६  ॥

तदिदं व्यसनं घोरं त्वया द्यूतमुखं कृतम् ।
असमीक्ष्य सदाचारैः सार्धं पापानुबन्धनैः  ॥ ००७  ॥

कश्चान्यो ज्ञातिभार्यां वै विप्रकर्तुं तथार्हति ।
आनीय च सभां वक्तुं यथोक्ता द्रौपदी त्वया  ॥ ००८  ॥

कुलीना शीलसंपन्ना प्राणेभ्योऽपि गरीयसी ।
महिषी पाण्डुपुत्राणां तथा विनिकृता त्वया  ॥ ००९  ॥

जानन्ति कुरवः सर्वे यथोक्ताः कुरुसंसदि ।
दुःशासनेन कौन्तेयाः प्रव्रजन्तः परंतपाः  ॥ ०१०  ॥

सम्यग्वृत्तेष्वलुब्धेषु सततं धर्मचारिषु ।
स्वेषु बन्धुषु कः साधुश्चरेदेवमसांप्रतम्  ॥ ०११  ॥

नृशंसानामनार्याणां परुषाणां च भाषणम् ।

कर्णदुःशासनाभ्यां च त्वया च बहुशः कृतम्  ॥ ०१२  ॥

सह मात्रा प्रदग्धुं तान्बालकान्वारणावते ।
आस्थितः परमं यत्नं न समृद्धं च तत्तव  ॥ ०१३  ॥

ऊषुश्च सुचिरं कालं प्रच्छन्नाः पाण्डवास्तदा ।
मात्रा सहैकचक्रायां ब्राह्मणस्य निवेशने  ॥ ०१४  ॥

विषेण सर्पबन्धैश्च यतिताः पाण्डवास्त्वया ।
सर्वोपायैर्विनाशाय न समृद्धं च तत्तव  ॥ ०१५  ॥

एवंबुद्धिः पाण्डवेषु मिथ्यावृत्तिः सदा भवान् ।
कथं ते नापराधोऽस्ति पाण्डवेषु महात्मसु  ॥ ०१६  ॥

कृत्वा बहून्यकार्याणि पाण्डवेषु नृशंसवत् ।
मिथ्यावृत्तिरनार्यः सन्नद्य विप्रतिपद्यसे  ॥ ०१७  ॥

मातापितृभ्यां भीष्मेण द्रोणेन विदुरेण च ।
शाम्येति मुहुरुक्तोऽसि न च शाम्यसि पार्थिव  ॥ ०१८  ॥

शमे हि सुमहानर्थस्तव पार्थस्य चोभयोः ।
न च रोचयसे राजन्किमन्यद्बुद्धिलाघवात्  ॥ ०१९  ॥

न शर्म प्राप्स्यसे राजन्नुत्क्रम्य सुहृदां वचः ।
अधर्म्यमयशस्यं च क्रियते पार्थिव त्वया  ॥ ०२०  ॥

एवं ब्रुवति दाशार्हे दुर्योधनममर्षणम् ।
दुःशासन इदं वाक्यमब्रवीत्कुरुसंसदि  ॥ ०२१  ॥

न चेत्संधास्यसे राजन्स्वेन कामेन पाण्डवैः ।
बद्ध्वा किल त्वां दास्यन्ति कुन्तीपुत्राय कौरवाः  ॥ ०२२  ॥

वैकर्तनं त्वां च मां च त्रीनेतान्मनुजर्षभ ।
पाण्डवेभ्यः प्रदास्यन्ति भीष्मो द्रोणः पिता च ते ॥ ०२३ ॥

भ्रातुरेतद्वचः श्रुत्वा धार्तराष्ट्रः सुयोधनः ।
क्रुद्धः प्रातिष्ठतोत्थाय महानाग इव श्वसन् ॥ ०२४ ॥

विदुरं धृतराष्ट्रं च महाराजं च बाह्लिकम् ।
कृपं च सोमदत्तं च भीष्मं द्रोणं जनार्दनम् ॥ ०२५ ॥

सर्वानेताननादृत्य दुर्मतिर्निरपत्रपः ।
अशिष्टवदमर्यादो मानी मान्यावमानिता ॥ ०२६ ॥

तं प्रस्थितमभिप्रेक्ष्य भ्रातरो मनुजर्षभम् ।
अनुजग्मुः सहामात्या राजानश्चापि सर्वशः ॥ ०२७ ॥

सभायामुत्थितं क्रुद्धं प्रस्थितं भ्रातृभिः सह ।
दुर्योधनमभिप्रेक्ष्य भीष्मः शांतनवोऽब्रवीत् ॥ ०२८ ॥

धर्मार्थावभिसंत्यज्य संरम्भं योऽनुमन्यते ।
हसन्ति व्यसने तस्य दुर्हृदो नचिरादिव ॥ ०२९ ॥

दुरात्मा राजपुत्रोऽयं धार्तराष्ट्रोऽनुपायवित् ।
मिथ्याभिमानी राज्यस्य क्रोधलोभवशानुगः ॥ ०३० ॥

कालपक्वमिदं मन्ये सर्वक्षत्रं जनार्दन ।
सर्वे ह्यनुसृता मोहात्पार्थिवाः सह मन्त्रिभिः ॥ ०३१ ॥

भीष्मस्याथ वचः श्रुत्वा दाशार्हः पुष्करेक्षणः ।
भीष्मद्रोणमुखान्सर्वानभ्यभाषत वीर्यवान् ॥ ०३२ ॥

सर्वेषां कुरुवृद्धानां महानयमतिक्रमः ।
प्रसह्य मन्दमैश्वर्ये न नियच्छत यन्नृपम्  ॥ ०३३  ॥

तत्र कार्यमहं मन्ये प्राप्तकालमरिंदमाः ।
क्रियमाणे भवेच्छ्रेयस्तत्सर्वं श्रृणुतानघाः  ॥ ०३४  ॥

प्रत्यक्षमेतद्भवतां यद्वक्ष्यामि हितं वचः ।
भवतामानुकूल्येन यदि रोचेत भारताः  ॥ ०३५  ॥

भोजराजस्य वृद्धस्य दुराचारो ह्यनात्मवान् ।
जीवतः पितुरैश्वर्यं हृत्वा मन्युवशं गतः  ॥ ०३६  ॥

उग्रसेनसुतः कंसः परित्यक्तः स बान्धवैः ।
ज्ञातीनां हितकामेन मया शस्तो महामृधे  ॥ ०३७  ॥

आहुकः पुनरस्माभिर्ज्ञातिभिश्चापि सत्कृतः ।
उग्रसेनः कृतो राजा भोजराजन्यवर्धनः  ॥ ०३८  ॥

कंसमेकं परित्यज्य कुलार्थे सर्वयादवाः ।
संभूय सुखमेधन्ते भारतान्धकवृष्णयः  ॥ ०३९  ॥

अपि चाप्यवदद्राजन्परमेष्ठी प्रजापतिः ।
व्यूढे देवासुरे युद्धेऽभ्युद्यतेष्वायुधेषु च  ॥ ०४०  ॥

द्वैधीभूतेषु लोकेषु विनश्यत्सु च भारत ।
अब्रवीत्सृष्टिमान्देवो भगवा.णल्लोकभावनः  ॥ ०४१  ॥

पराभविष्यन्त्यसुरा दैतेया दानवैः सह ।
आदित्या वसवो रुद्रा भविष्यन्ति दिवौकसः  ॥ ०४२  ॥

देवासुरमनुष्याश्च गन्धर्वोरगराक्षसाः ।

अस्मिन्युद्धे सुसंयत्ता हनिष्यन्ति परस्परम्  ॥ ०४३  ॥

इति मत्वाब्रवीद्धर्मं परमेष्ठी प्रजापतिः ।
वरुणाय प्रयच्छैतान्बद्ध्वा दैतेयदानवान्  ॥ ०४४  ॥

एवमुक्तस्ततो धर्मो नियोगात्परमेष्ठिनः ।
वरुणाय ददौ सर्वान्बद्ध्वा दैतेयदानवान्  ॥ ०४५  ॥

तान्बद्ध्वा धर्मपाशैश्च स्वैश्च पाशैर्जलेश्वरः ।
वरुणः सागरे यत्तो नित्यं रक्षति दानवान्  ॥ ०४६  ॥

तथा दुर्योधनं कर्णं शकुनिं चापि सौबलम् ।
बद्ध्वा दुःशासनं चापि पाण्डवेभ्यः प्रयच्छत  ॥ ०४७  ॥

त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्  ॥ ०४८  ॥

राजन्दुर्योधनं बद्ध्वा ततः संशाम्य पाण्डवैः ।
त्वत्कृते न विनश्येयुः क्षत्रियाः क्षत्रियर्षभ  ॥ ०४९  ॥

---

# अध्याय १२७

वैशंपायन उवाच  ॥

कृष्णस्य वचनं श्रुत्वा धृतराष्ट्रो जनेश्वरः ।
विदुरं सर्वधर्मज्ञं त्वरमाणोऽभ्यभाषत  ॥ ००१  ॥

गच्छ तात महाप्राज्ञां गान्धारीं दीर्घदर्शिनीम् ।

आनयेह तया सार्धमनुनेष्यामि दुर्मतिम्  ॥ ००२  ॥

यदि सापि दुरात्मानं शमयेद्दुष्टचेतसम् ।
अपि कृष्णाय सुहृदस्तिष्ठेम वचने वयम्  ॥ ००३  ॥

अपि लोभाभिभूतस्य पन्थानमनुदर्शयेत् ।
दुर्बुद्धेर्दुःसहायस्य समर्थं ब्रुवती वचः  ॥ ००४  ॥

अपि नो व्यसनं घोरं दुर्योधनकृतं महत् ।
शमयेच्चिररात्राय योगक्षेमवदव्ययम्  ॥ ००५  ॥

राज्ञस्तु वचनं श्रुत्वा विदुरो दीर्घदर्शिनीम् ।
आनयामास गान्धारीं धृतराष्ट्रस्य शासनात्  ॥ ००६  ॥

धृतराष्ट्र उवाच  ॥

एष गान्धारि पुत्रस्ते दुरात्मा शासनातिगः ।
ऐश्वर्यलोभादैश्वर्यं जीवितं च प्रहास्यति  ॥ ००७  ॥

अशिष्टवदमर्यादः पापैः सह दुरात्मभिः ।
सभाया निर्गतो मूढो व्यतिक्रम्य सुहृद्वचः  ॥ ००८  ॥

वैशंपायन उवाच  ॥

सा भर्तुर्वचनं श्रुत्वा राजपुत्री यशस्विनी ।
अन्विच्छन्ती महच्छ्रेयो गान्धारी वाक्यमब्रवीत्  ॥ ००९  ॥

आनयेह सुतं क्षिप्रं राज्यकामुकमातुरम् ।
न हि राज्यमशिष्टेन शक्यं धर्मार्थलोपिना  ॥ ०१०  ॥

त्वं ह्येवात्र भृशं गर्ह्यो धृतराष्ट्र सुतप्रियः ।

यो जानन्पापतामस्य तत्प्रज्ञामनुवर्तसे ॥ ०११ ॥

स एष काममन्युभ्यां प्रलब्धो मोहमास्थितः ।
अशक्योऽद्य त्वया राजन्विनिवर्तयितुं बलात् ॥ ०१२ ॥

राज्यप्रदाने मूढस्य बालिशस्य दुरात्मनः ।
दुःसहायस्य लुब्धस्य धृतराष्ट्रोऽश्नुते फलम् ॥ ०१३ ॥

कथं हि स्वजने भेदमुपेक्षेत महामतिः ।
भिन्नं हि स्वजनेन त्वां प्रसहिष्यन्ति शत्रवः ॥ ०१४ ॥

या हि शक्या महाराज साम्ना दानेन वा पुनः ।
निस्तर्तुमापदः स्वेषु दण्डं कस्तत्र पातयेत् ॥ ०१५ ॥

शासनाद्धृतराष्ट्रस्य दुर्योधनममर्षणम् ।
मातुश्च वचनात्क्षत्ता सभां प्रावेशयत्पुनः ॥ ०१६ ॥

स मातुर्वचनाकाङ्क्षी प्रविवेश सभां पुनः ।
अभिताम्रेक्षणः क्रोधान्निःश्वसन्निव पन्नगः ॥ ०१७ ॥

तं प्रविष्टमभिप्रेक्ष्य पुत्रमुत्पथमास्थितम् ।
विगर्हमाणा गान्धारी समर्थं वाक्यमब्रवीत् ॥ ०१८ ॥

दुर्योधन निबोधेदं वचनं मम पुत्रक ।
हितं ते सानुबन्धस्य तथायत्यां सुखोदयम् ॥ ०१९ ॥

भीष्मस्य तु पितुश्चैव मम चापचितिः कृता ।
भवेद्द्रोणमुखानां च सुहृदां शाम्यता त्वया ॥ ०२० ॥

न हि राज्यं महाप्राज्ञ स्वेन कामेन शक्यते ।
अवाप्तुं रक्षितुं वापि भोक्तुं वा भरतर्षभ ॥ ०२१ ॥

न ह्यवश्येन्द्रियो राज्यमश्नीयाद्दीर्घमन्तरम् ।
विजितात्मा तु मेधावी स राज्यमभिपालयेत् ॥ ०२२ ॥

कामक्रोधौ हि पुरुषमर्थेभ्यो व्यपकर्षतः ।
तौ तु शत्रू विनिर्जित्य राजा विजयते महीम् ॥ ०२३ ॥

लोकेश्वरप्रभुत्वं हि महदेतद्दुरात्मभिः ।
राज्यं नामेप्सितं स्थानं न शक्यमभिरक्षितुम् ॥ ०२४ ॥

इन्द्रियाणि महत्प्रेप्सुर्नियच्छेदर्थधर्मयोः ।
इन्द्रियैर्नियतैर्बुद्धिर्वर्धतेऽग्निरिवेन्धनैः ॥ ०२५ ॥

अविध्येयानि हीमानि व्यापादयितुमप्यलम् ।
अविधेया इवादान्ता हयाः पथि कुसारथिम् ॥ ०२६ ॥

अविजित्य य आत्मानममात्यान्विजिगीषते ।
अजितात्माजितामात्यः सोऽवशः परिहीयते ॥ ०२७ ॥

आत्मानमेव प्रथमं देशरूपेण यो जयेत् ।
ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते ॥ ०२८ ॥

वश्येन्द्रियं जितामात्यं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ॥ ०२९ ॥

क्षुद्राक्षेणेव जालेन झषावपिहितावुभौ ।
कामक्रोधौ शरीरस्थौ प्रज्ञानं तौ विलुम्पतः ॥ ०३० ॥

याभ्यां हि देवाः स्वर्यातुः स्वर्गस्यापिदधुर्मुखम् ।
बिभ्यतोऽनुपरागस्य कामक्रोधौ स्म वर्धितौ ॥ ०३१ ॥

कामं क्रोधं च लोभं च दम्भं दर्पं च भूमिपः ।
सम्यग्विजेतुं यो वेद स महीमभिजायते ॥ ०३२ ॥

सततं निग्रहे युक्त इन्द्रियाणां भवेन्नृपः ।
ईप्सन्नर्थं च धर्मं च द्विषतां च पराभवम् ॥ ०३३ ॥

कामाभिभूतः क्रोधाद्वा यो मिथ्या प्रतिपद्यते ।
स्वेषु चान्येषु वा तस्य न सहाया भवन्त्युत ॥ ०३४ ॥

एकीभूतैर्महाप्राज्ञैः शूरैररिनिबर्हणैः ।
पाण्डवैः पृथिवीं तात भोक्ष्यसे सहितः सुखी ॥ ०३५ ॥

यथा भीष्मः शांतनवो द्रोणश्चापि महारथः ।
आहतुस्तात तत्सत्यमजेयौ कृष्णपाण्डवौ ॥ ०३६ ॥

प्रपद्यस्व महाबाहुं कृष्णमक्लिष्टकारिणम् ।
प्रसन्नो हि सुखाय स्यादुभयोरेव केशवः ॥ ०३७ ॥

सुहृदामर्थकामानां यो न तिष्ठति शासने ।
प्राज्ञानां कृतविद्यानां स नरः शत्रुनन्दनः ॥ ०३८ ॥

न युद्धे तात कल्याणं न धर्मार्थौ कुतः सुखम् ।
न चापि विजयो नित्यं मा युद्धे चेत आधिथाः ॥ ०३९ ॥

भीष्मेण हि महाप्राज्ञ पित्रा ते बाह्लिकेन च ।
दत्तोंऽशः पाण्डुपुत्राणां भेदाद्भीतैररिंदम ॥ ०४० ॥

तस्य चैतत्प्रदानस्य फलमद्यानुपश्यसि ।
यद्भुङ्क्षे पृथिवीं सर्वां शूरैर्निहतकण्टकाम् ॥ ०४१ ॥

प्रयच्छ पाण्डुपुत्राणां यथोचितमरिंदम ।

यदीच्छसि सहामात्यो भोक्तुमर्धं महीक्षिताम् ॥ ०४२ ॥

अलमर्धं पृथिव्यास्ते सहामात्यस्य जीवनम् ।
सुहृदां वचने तिष्ठन्यशः प्राप्स्यसि भारत ॥ ०४३ ॥

श्रीमद्भिरात्मवद्भिर्हि बुद्धिमद्भिर्जितेन्द्रियैः ।
पाण्डवैर्विग्रहस्तात भ्रंशयेन्महतः सुखात् ॥ ०४४ ॥

निगृह्य सुहृदां मन्युं शाधि राज्यं यथोचितम् ।
स्वमंशं पाण्डुपुत्रेभ्यः प्रदाय भरतर्षभ ॥ ०४५ ॥

अलमह्ना निकारोऽयं त्रयोदश समाः कृतः ।
शमयैनं महाप्राज्ञ कामक्रोधसमेधितम् ॥ ०४६ ॥

न चैष शक्तः पार्थानां यस्त्वदर्थमभीप्सति ।
सूतपुत्रो दृढक्रोधो भ्राता दुःशासनश्च ते ॥ ०४७ ॥

भीष्मे द्रोणे कृपे कर्णे भीमसेने धनञ्जये ।
धृष्टद्युम्ने च सङ्क्रुद्धे न स्युः सर्वाः प्रजा ध्रुवम् ॥ ०४८ ॥

अमर्षवशमापन्नो मा कुरूंस्तात जीघनः ।
सर्वा हि पृथिवी स्पृष्टा त्वत्पाण्डवकृते वधम् ॥ ०४९ ॥

यच्च त्वं मन्यसे मूढ भीष्मद्रोणकृपादयः ।
योत्स्यन्ते सर्वशक्त्येति नैतदद्योपपद्यते ॥ ०५० ॥

समं हि राज्यं प्रीतिश्च स्थानं च विजितात्मनाम् ।
पाण्डवेष्वथ युष्मासु धर्मस्त्वभ्यधिकस्ततः ॥ ०५१ ॥

राजपिण्डभयादेते यदि हास्यन्ति जीवितम् ।
न हि शक्ष्यन्ति राजानं युधिष्ठिरमुदीक्षितुम् ॥ ०५२ ॥

न लोभादर्थसंपत्तिर्नराणामिह दृश्यते ।
तदलं तात लोभेन प्रशाम्य भरतर्षभ ॥ ०५३ ॥

---

# अध्याय १२८

वैशंपायन उवाच ॥

तत्तु वाक्यमनादृत्य सोऽर्थवन्मातृभाषितम् ।
पुनः प्रतस्थे संरम्भात्सकाशमकृतात्मनाम् ॥ ००१ ॥

ततः सभाया निर्गम्य मन्त्रयामास कौरवः ।
सौबलेन मताक्षेण राज्ञा शकुनिना सह ॥ ००२ ॥

दुर्योधनस्य कर्णस्य शकुनेः सौबलस्य च ।
दुःशासनचतुर्थानामिदमासीद्विचेष्टितम् ॥ ००३ ॥

पुरायमस्मान्गृह्णाति क्षिप्रकारी जनार्दनः ।
सहितो धृतराष्ट्रेण राज्ञा शांतनवेन च ॥ ००४ ॥

वयमेव हृषीकेशं निगृह्णीम बलादिव ।
प्रसह्य पुरुषव्याघ्रमिन्द्रो वैरोचनिं यथा ॥ ००५ ॥

श्रुत्वा गृहीतं वार्ष्णेयं पाण्डवा हतचेतसः ।
निरुत्साहा भविष्यन्ति भग्नदंष्ट्रा इवोरगाः ॥ ००६ ॥

अयं ह्येषां महाबाहुः सर्वेषां शर्म वर्म च ।
अस्मिन्गृहीते वरदे ऋषभे सर्वसात्वताम् ॥ ००७ ॥

निरुद्यमा भविष्यन्ति पाण्डवाः सोमकैः सह ॥ ००७ ॥

तस्माद्वयमिहैवैनं केशवं क्षिप्रकारिणम् ।
क्रोशतो धृतराष्ट्रस्य बद्ध्वा योत्स्यामहे रिपून् ॥ ००८ ॥

तेषां पापमभिप्रायं पापानां दुष्टचेतसाम् ।
इङ्गितज्ञः कविः क्षिप्रमन्वबुध्यत सात्यकिः ॥ ००९ ॥

तदर्थमभिनिष्क्रम्य हार्दिक्येन सहास्थितः ।
अब्रवीत्कृतवर्माणं क्षिप्रं योजय वाहिनीम् ॥ ०१० ॥

व्यूढानीकः सभाद्वारमुपतिष्ठस्व दंशितः ।
यावदाख्याम्यहं चैतत्कृष्णायाक्लिष्टकर्मणे ॥ ०११ ॥

स प्रविश्य सभां वीरः सिंहो गिरिगुहामिव ।
आचष्ट तमभिप्रायं केशवाय महात्मने ॥ ०१२ ॥

धृतराष्ट्रं ततश्चैव विदुरं चान्वभाषत ।
तेषामेतमभिप्रायमाचचक्षे स्मयन्निव ॥ ०१३ ॥

धर्मादपेतमर्थाच्च कर्म साधुविगर्हितम् ।
मन्दाः कर्तुमिहेच्छन्ति न चावाप्यं कथञ्चन ॥ ०१४ ॥

पुरा विकुर्वते मूढाः पापात्मानः समागताः ।
धर्षिताः काममन्युभ्यां क्रोधलोभवशानुगाः ॥ ०१५ ॥

इमं हि पुण्डरीकाक्षं जिघृक्षन्त्यल्पचेतसः ।
पटेनाग्निं प्रज्वलितं यथा बाला यथा जडाः ॥ ०१६ ॥

सात्यकेस्तद्वचः श्रुत्वा विदुरो दीर्घदर्शिवान् ।

धृतराष्ट्रं महाबाहुमब्रवीत्कुरुसंसदि ॥ ०१७ ॥

राजन्परीतकालास्ते पुत्राः सर्वे परंतप ।
अयशस्यमशक्यं च कर्म कर्तुं समुद्यताः ॥ ०१८ ॥

इमं हि पुण्डरीकाक्षमभिभूय प्रसह्य च ।
निग्रहीतुं किलेच्छन्ति सहिता वासवानुजम् ॥ ०१९ ॥

इमं पुरुषशार्दूलमप्रधृष्यं दुरासदम् ।
आसाद्य न भविष्यन्ति पतङ्गा इव पावकम् ॥ ०२० ॥

अयमिच्छन्हि तान्सर्वान्यतमानाञ्जनार्दनः ।
सिंहो मृगानिव क्रुद्धो गमयेद्यमसादनम् ॥ ०२१ ॥

न त्वयं निन्दितं कर्म कुर्यात्कृष्णः कथञ्चन ।
न च धर्मादपक्रामेदच्युतः पुरुषोत्तमः ॥ ०२२ ॥

विदुरेणैवमुक्ते तु केशवो वाक्यमब्रवीत् ।
धृतराष्ट्रमभिप्रेक्ष्य सुहृदां श‍ृण्वतां मिथः ॥ ०२३ ॥

राजन्नेते यदि क्रुद्धा मां निगृह्णीयुरोजसा ।
एते वा मामहं वैनाननुजानीहि पार्थिव ॥ ०२४ ॥

एतान्हि सर्वान्संरब्धान्नियन्तुमहमुत्सहे ।
न त्वहं निन्दितं कर्म कुर्यां पापं कथञ्चन ॥ ०२५ ॥

पाण्डवार्थे हि लुभ्यन्तः स्वार्थाद्धास्यन्ति ते सुताः ।
एते चेदेवमिच्छन्ति कृतकार्यो युधिष्ठिरः ॥ ०२६ ॥

अद्यैव ह्यहमेतांश्च ये चैताननु भारत ।
निगृह्य राजन्पार्थेभ्यो दद्यां किं दुष्कृतं भवेत् ॥ ०२७ ॥

इदं तु न प्रवर्तेयं निन्दितं कर्म भारत ।
संनिधौ ते महाराज क्रोधजं पापबुद्धिजम् ॥ ०२८ ॥

एष दुर्योधनो राजन्यथेच्छति तथास्तु तत् ।
अहं तु सर्वान्समयाननुजानामि भारत ॥ ०२९ ॥

एतच्छ्रुत्वा तु विदुरं धृतराष्ट्रोऽभ्यभाषत ।
क्षिप्रमानय तं पापं राज्यलुब्धं सुयोधनम् ॥ ०३० ॥

सहमित्रं सहामात्यं ससोदर्यं सहानुगम् ।
शक्नुयां यदि पन्थानमवतारयितुं पुनः ॥ ०३१ ॥

ततो दुर्योधनं क्षत्ता पुनः प्रावेशयत्सभाम् ।
अकामं भ्रातृभिः सार्धं राजभिः परिवारितम् ॥ ०३२ ॥

अथ दुर्योधनं राजा धृतराष्ट्रोऽभ्यभाषत ।
कर्णदुःशासनाभ्यां च राजभिश्चाभिसंवृतम् ॥ ०३३ ॥

नृशंस पापभूयिष्ठ क्षुद्रकर्मसहायवान् ।
पापैः सहायैः संहत्य पापं कर्म चिकीर्षसि ॥ ०३४ ॥

अशक्यमयशस्यं च सद्भिश्चापि विगर्हितम् ।
यथा त्वादृशको मूढो व्यवस्येत्कुलपांसनः ॥ ०३५ ॥

त्वमिमं पुण्डरीकाक्षमप्रधृष्यं दुरासदम् ।
पापैः सहायैः संहत्य निग्रहीतुं किलेच्छसि ॥ ०३६ ॥

यो न शक्यो बलात्कर्तुं देवैरपि सवासवैः ।
तं त्वं प्रार्थयसे मन्द बालश्चन्द्रमसं यथा ॥ ०३७ ॥

देवैर्मनुष्यैर्गन्धर्वैरसुरैरुरगैश्च यः ।
न सोढुं समरे शक्यस्तं न बुध्यसि केशवम् ॥ ०३८ ॥

दुर्ग्रहः पाणिना वायुर्दुःस्पर्शः पाणिना शशी ।
दुर्धरा पृथिवी मूर्ध्ना दुर्ग्रहः केशवो बलात् ॥ ०३९ ॥

इत्युक्ते धृतराष्ट्रेण क्षत्तापि विदुरोऽब्रवीत् ।
दुर्योधनमभिप्रेक्ष्य धार्तराष्ट्रममर्षणम् ॥ ०४० ॥

सौभद्वारे वानरेन्द्रो द्विविदो नाम नामतः ।
शिलावर्षेण महता छादयामास केशवम् ॥ ०४१ ॥

ग्रहीतुकामो विक्रम्य सर्वयत्नेन माधवम् ।
ग्रहीतुं नाशकत्तत्र तं त्वं प्रार्थयसे बलात् ॥ ०४२ ॥

निर्मोचने षट्सहस्राः पाशैर्बद्ध्वा महासुराः ।
ग्रहीतुं नाशकंश्चैनं तं त्वं प्रार्थयसे बलात् ॥ ०४३ ॥

प्राग्ज्योतिषगतं शौरिं नरकः सह दानवैः ।
ग्रहीतुं नाशकत्तत्र तं त्वं प्रार्थयसे बलात् ॥ ०४४ ॥

अनेन हि हता बाल्ये पूतना शिशुना तथा ।
गोवर्धनो धारितश्च गवार्थे भरतर्षभ ॥ ०४५ ॥

अरिष्टो धेनुकश्चैव चाणूरश्च महाबलः ।
अश्वराजश्च निहतः कंसश्चारिष्टमाचरन् ॥ ०४६ ॥

जरासंधश्च वक्रश्च शिशुपालश्च वीर्यवान् ।
बाणश्च निहतः संख्ये राजानश्च निषूदिताः ॥ ०४७ ॥

वरुणो निर्जितो राजा पावकश्चामितौजसा ।

पारिजातं च हरता जितः साक्षाच्छचीपतिः ॥ ०४८ ॥

एकार्णवे शयानेन हतौ तौ मधुकैटभौ ।
जन्मान्तरमुपागम्य हयग्रीवस्तथा हतः ॥ ०४९ ॥

अयं कर्ता न क्रियते कारणं चापि पौरुषे ।
यद्यदिच्छेदयं शौरिस्तत्तत्कुर्यादयत्नतः ॥ ०५० ॥

तं न बुध्यसि गोविन्दं घोरविक्रममच्युतम् ।
आशीविषमिव क्रुद्धं तेजोराशिमनिर्जितम् ॥ ०५१ ॥

प्रधर्षयन्महाबाहुं कृष्णमक्लिष्टकारिणम् ।
पतङ्गोऽग्निमिवासाद्य सामात्यो न भविष्यसि ॥ ०५२ ॥

---

# अध्याय १२९

वैशंपायन उवाच ॥

विदुरेणैवमुक्ते तु केशवः शत्रुपूगहा ।
दुर्योधनं धार्तराष्ट्रमभ्यभाषत वीर्यवान् ॥ ००१ ॥

एकोऽहमिति यन्मोहान्मन्यसे मां सुयोधन ।
परिभूय च दुर्बुद्धे ग्रहीतुं मां चिकीर्षसि ॥ ००२ ॥

इहैव पाण्डवाः सर्वे तथैवान्धकवृष्णयः ।
इहादित्याश्च रुद्राश्च वसवश्च महर्षिभिः ॥ ००३ ॥

एवमुक्त्वा जहासोच्चैः केशवः परवीरहा ।
तस्य संस्मयतः शौरेर्विद्युद्रूपा महात्मनः ॥ ००४ ॥

अङ्गुष्ठमात्रास्त्रिदशा मुमुचुः पावकार्चिषः ॥ ००४ ॥

तस्य ब्रह्मा ललाटस्थो रुद्रो वक्षसि चाभवत् ।
लोकपाला भुजेष्वासन्नग्निरास्यादजायत ॥ ००५ ॥

आदित्याश्चैव साध्याश्च वसवोऽथाश्विनावपि ।
मरुतश्च सहेन्द्रेण विश्वेदेवास्तथैव च ॥ ००६ ॥

बभूवुश्चैव रूपाणि यक्षगन्धर्वरक्षसाम् ॥ ००६ ॥

प्रादुरास्तां तथा दोर्भ्यां सङ्कर्षणधनञ्जयौ ।
दक्षिणेऽथार्जुनो धन्वी हली रामश्च सव्यतः ॥ ००७ ॥

भीमो युधिष्ठिरश्चैव माद्रीपुत्रौ च पृष्ठतः ।
अन्धका वृष्णयश्चैव प्रद्युम्नप्रमुखास्ततः ॥ ००८ ॥

अग्रे बभूवुः कृष्णस्य समुद्यतमहायुधाः ।
शङ्खचक्रगदाशक्तिशार्ङ्गलाङ्गलनन्दकाः ॥ ००९ ॥

अदृश्यन्तोद्यतान्येव सर्वप्रहरणानि च ।
नानाबाहुषु कृष्णस्य दीप्यमानानि सर्वशः ॥ ०१० ॥

नेत्राभ्यां नस्ततश्चैव श्रोत्राभ्यां च समन्ततः ।
प्रादुरासन्महारौद्राः सधूमाः पावकार्चिषः ॥ ०११ ॥

रोमकूपेषु च तथा सूर्यस्येव मरीचयः ॥ ०११ ॥

तं दृष्ट्वा घोरमात्मानं केशवस्य महात्मनः ।

न्यमीलयन्त नेत्राणि राजानस्त्रस्तचेतसः ॥ ०१२ ॥

ऋते द्रोणं च भीष्मं च विदुरं च महामतिम् ।
सञ्जयं च महाभागमृषींश्चैव तपोधनान् ॥ ०१३ ॥

प्रादात्तेषां स भगवान्दिव्यं चक्षुर्जनार्दनः ॥ ०१३ ॥

तद्दृष्ट्वा महदाश्चर्यं माधवस्य सभातले ।
देवदुन्दुभयो नेदुः पुष्पवर्षं पपात च ॥ ०१४ ॥

चचाल च मही कृत्स्ना सागरश्चापि चुक्षुभे ।
विस्मयं परमं जग्मुः पार्थिवा भरतर्षभ ॥ ०१५ ॥

ततः स पुरुषव्याघ्रः सञ्जहार वपुः स्वकम् ।
तां दिव्यामद्भुतां चित्रामृद्धिमत्तामरिंदमः ॥ ०१६ ॥

ततः सात्यकिमादाय पाणौ हार्दिक्यमेव च ।
ऋषिभिस्तैरनुज्ञातो निर्ययौ मधुसूदनः ॥ ०१७ ॥

ऋषयोऽन्तर्हिता जग्मुस्ततस्ते नारदादयः ।
तस्मिन्कोलाहले वृत्ते तदद्भुतमभूत्तदा ॥ ०१८ ॥

तं प्रस्थितमभिप्रेक्ष्य कौरवाः सह राजभिः ।
अनुजग्मुर्नरव्याघ्रं देवा इव शतक्रतुम् ॥ ०१९ ॥

अचिन्तयन्नमेयात्मा सर्वं तद्राजमण्डलम् ।
निश्चक्राम ततः शौरिः सधूम इव पावकः ॥ ०२० ॥

ततो रथेन शुभ्रेण महता किङ्किणीकिना ।
हेमजालविचित्रेण लघुना मेघनादिना ॥ ०२१ ॥

सूपस्करेण शुभ्रेण वैयाघ्रेण वरूथिना ।
सैन्यसुग्रीवयुक्तेन प्रत्यदृश्यत दारुकः ॥ ०२२ ॥

तथैव रथमास्थाय कृतवर्मा महारथः ।
वृष्णीनां संमतो वीरो हार्दिक्यः प्रत्यदृश्यत ॥ ०२३ ॥

उपस्थितरथं शौरिं प्रयास्यन्तमरिंदमम् ।
धृतराष्ट्रो महाराजः पुनरेवाभ्यभाषत ॥ ०२४ ॥

यावद्बलं मे पुत्रेषु पश्यस्येतज्जनार्दन ।
प्रत्यक्षं ते न ते किञ्चित्परोक्षं शत्रुकर्शन ॥ ०२५ ॥

कुरूणां शममिच्छन्तं यतमानं च केशव ।
विदित्वैतामवस्थां मे नातिशङ्कितुमर्हसि ॥ ०२६ ॥

न मे पापोऽस्त्यभिप्रायः पाण्डवान्प्रति केशव ।
ज्ञातमेव हि ते वाक्यं यन्मयोक्तः सुयोधनः ॥ ०२७ ॥

जानन्ति कुरवः सर्वे राजानश्चैव पार्थिवाः ।
शमे प्रयतमानं मां सर्वयत्नेन माधव ॥ ०२८ ॥

ततोऽब्रवीन्महाबाहुर्धृतराष्ट्रं जनेश्वरम् ।
द्रोणं पितामहं भीष्मं क्षत्तारं बाह्लिकं कृपम् ॥ ०२९ ॥

प्रत्यक्षमेतद्भवतां यद्वृत्तं कुरुसंसदि ।
यथा चाशिष्टवन्मन्दो रोषादसकृदुत्थितः ॥ ०३० ॥

वदत्यनीशमात्मानं धृतराष्ट्रो महीपतिः ।
आपृच्छे भवतः सर्वान्गमिष्यामि युधिष्ठिरम् ॥ ०३१ ॥

आमन्त्र्य प्रस्थितं शौरिं रथस्थं पुरुषर्षभम् ।

अनुजग्मुर्महेष्वासाः प्रवीरा भरतर्षभाः ॥ ०३२ ॥

भीष्मो द्रोणः कृपः क्षत्ता धृतराष्ट्रोऽथ बाह्लिकः ।
अश्वत्थामा विकर्णश्च युयुत्सुश्च महारथः ॥ ०३३ ॥

ततो रथेन शुभ्रेण महता किङ्किणीकिना ।
कुरूणां पश्यतां प्रायात्पृथां द्रष्टुं पितृष्वसाम् ॥ ०३४ ॥

---

# अध्याय १३०

वैशंपायन उवाच ॥

प्रविश्याथ गृहं तस्याश्चरणावभिवाद्य च ।
आचख्यौ तत्समासेन यद्वृत्तं कुरुसंसदि ॥ ००१ ॥

वासुदेव उवाच ॥

उक्तं बहुविधं वाक्यं ग्रहणीयं सहेतुकम् ।
ऋषिभिश्च मया चैव न चासौ तद्गृहीतवान् ॥ ००२ ॥

कालपक्वमिदं सर्वं दुर्योधनवशानुगम् ।
आपृच्छे भवतीं शीघ्रं प्रयास्ये पाण्डवान्प्रति ॥ ००३ ॥

किं वाच्याः पाण्डवेयास्ते भवत्या वचनान्मया ।
तद्ब्रूहि त्वं महाप्राज्ञे शुश्रूषे वचनं तव ॥ ००४ ॥

कुन्त्युवाच ॥

ब्रूयाः केशव राजानं धर्मात्मानं युधिष्ठिरम् ।
भूयांस्ते हीयते धर्मो मा पुत्रक वृथा कृथाः ॥ ००५ ॥

श्रोत्रियस्येव ते राजन्मन्दकस्याविपश्चितः ।
अनुवाकहता बुद्धिर्धर्ममेवैकमीक्षते ॥ ००६ ॥

अङ्गावेक्षस्व धर्मं त्वं यथा सृष्टः स्वयंभुवा ।
उरस्तः क्षत्रियः सृष्टो बाहुवीर्योपजीविता ॥ ००७ ॥

क्रूराय कर्मणे नित्यं प्रजानां परिपालने ॥ ००७ ॥

शृणु चात्रोपमामेकां या वृद्धेभ्यः श्रुता मया ।
मुचुकुन्दस्य राजर्षेरददात्पृथिवीमिमाम् ॥ ००८ ॥

पुरा वैश्रवणः प्रीतो न चासौ तां गृहीतवान् ॥ ००८ ॥

बाहुवीर्यार्जितं राज्यमश्नीयामिति कामये ।
ततो वैश्रवणः प्रीतो विस्मितः समपद्यत ॥ ००९ ॥

मुचुकुन्दस्ततो राजा सोऽन्वशासद्वसुंधराम् ।
बाहुवीर्यार्जितां सम्यक्क्षत्रधर्ममनुव्रतः ॥ ०१० ॥

यं हि धर्मं चरन्तीह प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य धर्मस्य राजा भारत विन्दति ॥ ०११ ॥

राजा चरति चेद्धर्मं देवत्वायैव कल्पते ।
स चेदधर्मं चरति नरकायैव गच्छति ॥ ०१२ ॥

दण्डनीतिः स्वधर्मेण चातुर्वर्ण्यं नियच्छति ।
प्रयुक्ता स्वामिना सम्यगधर्मेभ्यश्च यच्छति ॥ ०१३ ॥

दण्डनीत्यां यदा राजा सम्यक्कार्त्स्न्येन वर्तते ।
तदा कृतयुगं नाम कालः श्रेष्ठः प्रवर्तते ॥ ०१४ ॥

कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो मा भूद्राजा कालस्य कारणम् ॥ ०१५ ॥

राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च ।
युगस्य च चतुर्थस्य राजा भवति कारणम् ॥ ०१६ ॥

कृतस्य कारणाद्राजा स्वर्गमत्यन्तमश्नुते ।
त्रेतायाः कारणाद्राजा स्वर्गं नात्यन्तमश्नुते ॥ ०१७ ॥

प्रवर्तनाद्द्वापरस्य यथाभागमुपाश्नुते ॥ ०१७ ॥

ततो वसति दुष्कर्मा नरके शाश्वतीः समाः ।
राजदोषेण हि जगत्स्पृश्यते जगतः स च ॥ ०१८ ॥

राजधर्मानवेक्षस्व पितृपैतामहोचितान् ।
नैतद्राजर्षिवृत्तं हि यत्र त्वं स्थातुमिच्छसि ॥ ०१९ ॥

न हि वैक्लव्यसंसृष्ट आनृशंस्ये व्यवस्थितः ।
प्रजापालनसंभूतं किञ्चित्प्राप फलं नृपः ॥ ०२० ॥

न ह्येतामाशिषं पाण्डुर्न चाहं न पितामहः ।
प्रयुक्तवन्तः पूर्वं ते यया चरसि मेधया ॥ ०२१ ॥

यज्ञो दानं तपः शौर्यं प्रजासंतानमेव च ।
माहात्म्यं बलमोजश्च नित्यमाशंसितं मया ॥ ०२२ ॥

नित्यं स्वाहा स्वधा नित्यं ददुर्मानुषदेवताः ।
दीर्घमायुर्धनं पुत्रान्सम्यगाराधिताः शुभाः ॥ ०२३ ॥

पुत्रेष्वाशासते नित्यं पितरो दैवतानि च ।
दानमध्ययनं यज्ञं प्रजानां परिपालनम्  ॥ ०२४  ॥

एतद्धर्ममधर्मं वा जन्मनैवाभ्यजायथाः ।
ते स्थ वैद्याः कुले जाता अवृत्त्या तात पीडिताः  ॥ ०२५  ॥

यत्तु दानपतिं शूरं क्षुधिताः पृथिवीचराः ।
प्राप्य तृप्ताः प्रतिष्ठन्ते धर्मः कोऽभ्यधिकस्ततः  ॥ ०२६  ॥

दानेनान्यं बलेनान्यं तथा सूनृतयापरम् ।
सर्वतः प्रतिगृह्णीयाद्राज्यं प्राप्येह धार्मिकः  ॥ ०२७  ॥

ब्राह्मणः प्रचरेद्भैक्षं क्षत्रियः परिपालयेत् ।
वैश्यो धनार्जनं कुर्याच्छूद्रः परिचरेच्च तान्  ॥ ०२८  ॥

भैक्षं विप्रतिषिद्धं ते कृषिर्नैवोपपद्यते ।
क्षत्रियोऽसि क्षतात्त्राता बाहुवीर्योपजीविता  ॥ ०२९  ॥

पित्र्यमंशं महाबाहो निमग्नं पुनरुद्धर ।
साम्ना दानेन भेदेन दण्डेनाथ नयेन च  ॥ ०३०  ॥

इतो दुःखतरं किं नु यदहं हीनबान्धवा ।
परपिण्डमुदीक्षामि त्वां सूत्वामित्रनन्दन  ॥ ०३१  ॥

युध्यस्व राजधर्मेण मा निमज्जीः पितामहान् ।
मा गमः क्षीणपुण्यस्त्वं सानुजः पापिकां गतिम्  ॥ ०३२  ॥

# विदुरापुत्रानुशासनम्

## अध्याय १३१

कुन्त्युवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
विदुरायाश्च संवादं पुत्रस्य च परंतप ॥ ००१ ॥

अत्र श्रेयश्च भूयश्च यथा सा वक्तुमर्हति ।
यशस्विनी मन्युमती कुले जाता विभावरी ॥ ००२ ॥

क्षत्रधर्मरता धन्या विदुरा दीर्घदर्शिनी ।
विश्रुता राजसंसत्सु श्रुतवाक्या बहुश्रुता ॥ ००३ ॥

विदुरा नाम वै सत्या जगर्हे पुत्रमौरसम् ।
निर्जितं सिन्धुराजेन शयानं दीनचेतसम् ॥ ००४ ॥

अनन्दनमधर्मज्ञं द्विषतां हर्षवर्धनम् ॥ ००४ ॥

न मया त्वं न पित्रासि जातः क्वाभ्यागतो ह्यसि ।
निर्मन्युरुपशाखीयः पुरुषः क्लीबसाधनः ॥ ००५ ॥

यावज्जीवं निराशोऽसि कल्याणाय धुरं वह ।
मात्मानमवमन्यस्व मैनमल्पेन बीभरः ॥ ००६ ॥

मनः कृत्वा सुकल्याणं मा भैस्त्वं प्रतिसंस्तभ ॥ ००६ ॥

उत्तिष्ठ हे कापुरुष मा शेष्वैवं पराजितः ।
अमित्रान्नन्दयन्सर्वान्निर्मानो बन्धुशोकदः ॥ ००७ ॥

सुपूरा वै कुनदिका सुपूरो मूषिकाञ्जलिः ।
सुसंतोषः कापुरुषः स्वल्पकेनापि तुष्यति ॥ ००८ ॥

अप्यरेरारुजन्दंष्ट्रामाश्वेव निधनं व्रज ।
अपि वा संशयं प्राप्य जीवितेऽपि पराक्रम ॥ ००९ ॥

अप्यरेः श्येनवच्छिद्रं पश्येस्त्वं विपरिक्रमन् ।
विनदन्वाथ वा तूष्णीं व्योम्नि वापरिशङ्कितः ॥ ०१० ॥

त्वमेवं प्रेतवच्छेषे कस्माद्वज्रहतो यथा ।
उत्तिष्ठ हे कापुरुष मा शेष्वैवं पराजितः ॥ ०११ ॥

मास्तं गमस्त्वं कृपणो विश्रूयस्व स्वकर्मणा ।
मा मध्ये मा जघन्ये त्वं माधो भूस्तिष्ठ चोर्जितः ॥ ०१२ ॥

अलातं तिन्दुकस्येव मुहूर्तमपि विज्वल ।
मा तुषाग्निरिवानर्चिः काकरङ्खा जिजीविषुः ॥ ०१३ ॥

मुहूर्तं ज्वलितं श्रेयो न तु धूमायितं चिरम् ॥ ०१३ ॥

मा ह स्म कस्यचिद्गेहे जनी राज्ञः खरीमृदुः ।
कृत्वा मानुष्यकं कर्म सृत्वाजिं यावदुत्तमम् ॥ ०१४ ॥

धर्मस्यानृण्यमाप्नोति न चात्मानं विगर्हते ॥ ०१४ ॥

अलब्ध्वा यदि वा लब्ध्वा नानुशोचन्ति पण्डिताः ।
आनन्तर्यं चारभते न प्राणानां धनायते ॥ ०१५ ॥

उद्भावयस्व वीर्यं वा तां वा गच्छ ध्रुवां गतिम् ।
धर्मं पुत्राग्रतः कृत्वा किंनिमित्तं हि जीवसि ॥ ०१६ ॥

इष्टापूर्तं हि ते क्लीब कीर्तिश्च सकला हता ।
विच्छिन्नं भोगमूलं ते किंनिमित्तं हि जीवसि ॥ ०१७ ॥

शत्रुर्निमज्जता ग्राह्यो जङ्घायां प्रपतिष्यता ।
विपरिच्छिन्नमूलोऽपि न विषीदेत्कथञ्चन ॥ ०१८ ॥

उद्यम्य धुरमुत्कर्षेदाजानेयकृतं स्मरन् ॥ ०१८ ॥

कुरु सत्त्वं च मानं च विद्धि पौरुषमात्मनः ।
उद्भावय कुलं मग्नं त्वत्कृते स्वयमेव हि ॥ ०१९ ॥

यस्य वृत्तं न जल्पन्ति मानवा महदद्भुतम् ।
राशिवर्धनमात्रं स नैव स्त्री न पुनः पुमान् ॥ ०२० ॥

दाने तपसि शौर्ये च यस्य न प्रथितं यशः ।
विद्यायामर्थलाभे वा मातुरुच्चार एव सः ॥ ०२१ ॥

श्रुतेन तपसा वापि श्रिया वा विक्रमेण वा ।
जनान्योऽभिभवत्यन्यान्कर्मणा हि स वै पुमान् ॥ ०२२ ॥

न त्वेव जाल्मीं कापालीं वृत्तिमेषितुमर्हसि ।
नृशंस्यामयशस्यां च दुःखां कापुरुषोचिताम् ॥ ०२३ ॥

यमेनमभिनन्देयुरमित्राः पुरुषं कृशम् ।
लोकस्य समवज्ञातं निहीनाशनवाससम् ॥ ०२४ ॥

अहोलाभकरं दीनमल्पजीवनमल्पकम् ।
नेदृशं बन्धुमासाद्य बान्धवः सुखमेधते ॥ ०२५ ॥

अवृत्त्यैव विपत्स्यामो वयं राष्ट्रात्प्रवासिताः ।
सर्वकामरसैर्हीनाः स्थानभ्रष्टा अकिञ्चनाः ॥ ०२६ ॥

अवर्णकारिणं सत्सु कुलवंशस्य नाशनम् ।
कलिं पुत्रप्रवादेन सञ्जय त्वामजीजनम्  ॥ ०२७  ॥

निरमर्षं निरुत्साहं निर्वीर्यमरिनन्दनम् ।
मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम्  ॥ ०२८  ॥

मा धूमाय ज्वलात्यन्तमाक्रम्य जहि शात्रवान् ।
ज्वल मूर्धन्यमित्राणां मुहूर्तमपि वा क्षणम्  ॥ ०२९  ॥

एतावानेव पुरुषो यदमर्षी यदक्षमी ।
क्षमावान्निरमर्षश्च नैव स्त्री न पुनः पुमान्  ॥ ०३०  ॥

संतोषो वै श्रियं हन्ति तथानुक्रोश एव च ।
अनुत्थानभये चोभे निरीहो नाश्नुते महत्  ॥ ०३१  ॥

एभ्यो निकृतिपापेभ्यः प्रमुञ्चात्मानमात्मना ।
आयसं हृदयं कृत्वा मृगयस्व पुनः स्वकम्  ॥ ०३२  ॥

पुरं विषहते यस्मात्तस्मात्पुरुष उच्यते ।
तमाहुर्व्यर्थनामानं स्त्रीवद्य इह जीवति  ॥ ०३३  ॥

शूरस्योर्जितसत्त्वस्य सिंहविक्रान्तगामिनः ।
दिष्टभावं गतस्यापि विघसे मोदते प्रजा  ॥ ०३४  ॥

य आत्मनः प्रियसुखे हित्वा मृगयते श्रियम् ।
अमात्यानामथो हर्षमादधात्यचिरेण सः  ॥ ०३५  ॥

पुत्र उवाच  ॥

किं नु ते मामपश्यन्त्याः पृथिव्या अपि सर्वया ।

किमाभरणकृत्यं ते किं भोगैर्जीवितेन वा ॥ ०३६ ॥

मातोवाच ॥

किमद्यकानां ये लोका द्विषन्तस्तानवाप्नुयुः ।
ये त्वादृतात्मनां लोकाः सुहृदस्तान्व्रजन्तु नः ॥ ०३७ ॥

भृत्यैर्विहीयमानानां परपिण्डोपजीविनाम् ।
कृपणानामसत्त्वानां मा वृत्तिमनुवर्तिथाः ॥ ०३८ ॥

अनु त्वां तात जीवन्तु ब्राह्मणाः सुहृदस्तथा ।
पर्जन्यमिव भूतानि देवा इव शतक्रतुम् ॥ ०३९ ॥

यमाजीवन्ति पुरुषं सर्वभूतानि सञ्जय ।
पक्वं द्रुममिवासाद्य तस्य जीवितमर्थवत् ॥ ०४० ॥

यस्य शूरस्य विक्रान्तैरेधन्ते बान्धवाः सुखम् ।
त्रिदशा इव शक्रस्य साधु तस्येह जीवितम् ॥ ०४१ ॥

स्वबाहुबलमाश्रित्य योऽभ्युज्जीवति मानवः ।
स लोके लभते कीर्तिं परत्र च शुभां गतिम् ॥ ०४२ ॥

---

# अध्याय १३२

विदुरोवाच ॥

अथैतस्यामवस्थायां पौरुषं हातुमिच्छसि ।

निहीनसेवितं मार्गं गमिष्यस्यचिरादिव ॥ ००१ ॥

यो हि तेजो यथाशक्ति न दर्शयति विक्रमात् ।
क्षत्रियो जीविताकाङ्क्षी स्तेन इत्येव तं विदुः ॥ ००२ ॥

अर्थवन्त्युपपन्नानि वाक्यानि गुणवन्ति च ।
नैव संप्राप्नुवन्ति त्वां मुमूर्षुमिव भेषजम् ॥ ००३ ॥

सन्ति वै सिन्धुराजस्य संतुष्टा बहवो जनाः ।
दौर्बल्यादासते मूढा व्यसनौघप्रतीक्षिणः ॥ ००४ ॥

सहायोपचयं कृत्वा व्यवसाय्य ततस्ततः ।
अनुदुष्येयुरपरे पश्यन्तस्तव पौरुषम् ॥ ००५ ॥

तैः कृत्वा सह संघातं गिरिदुर्गालयांश्चर ।
काले व्यसनमाकाङ्क्षन्नैवायमजरामरः ॥ ००६ ॥

सञ्जयो नामतश्च त्वं न च पश्यामि तत्त्वयि ।
अन्वर्थनामा भव मे पुत्र मा व्यर्थनामकः ॥ ००७ ॥

सम्यग्दृष्टिर्महाप्राज्ञो बालं त्वां ब्राह्मणोऽब्रवीत् ।
अयं प्राप्य महत्कृच्छ्रं पुनर्वृद्धिं गमिष्यति ॥ ००८ ॥

तस्य स्मरन्ती वचनमाशंसे विजयं तव ।
तस्मात्तात ब्रवीमि त्वां वक्ष्यामि च पुनः पुनः ॥ ००९ ॥

यस्य ह्यर्थाभिनिर्वृत्तौ भवन्त्याप्यायिताः परे ।
तस्यार्थसिद्धिर्नियता नयेष्वर्थानुसारिणः ॥ ०१० ॥

समृद्धिरसमृद्धिर्वा पूर्वेषां मम सञ्जय ।
एवं विद्वान्युद्धमना भव मा प्रत्युपाहर ॥ ०११ ॥

नातः पापीयसीं काञ्चिदवस्थां शम्बरोऽब्रवीत् ।
यत्र नैवाद्य न प्रातर्भोजनं प्रतिदृश्यते ॥ ०१२ ॥

पतिपुत्रवधादेतत्परमं दुःखमब्रवीत् ।
दारिद्र्यमिति यत्प्रोक्तं पर्यायमरणं हि तत् ॥ ०१३ ॥

अहं महाकुले जाता ह्रदाद्ध्रदमिवागता ।
ईश्वरी सर्वकल्याणैर्भर्त्रा परमपूजिता ॥ ०१४ ॥

महार्हमाल्याभरणां सुमृष्टाम्बरवाससम् ।
पुरा दृष्ट्वा सुहृद्वर्गो मामपश्यत्सुदुर्गताम् ॥ ०१५ ॥

यदा मां चैव भार्यां च द्रष्टासि भृशदुर्बले ।
न तदा जीवितेनार्थो भविता तव सञ्जय ॥ ०१६ ॥

दासकर्मकरान्भृत्यानाचार्यर्त्विक्पुरोहितान् ।
अवृत्त्यास्मान्प्रजहतो दृष्ट्वा किं जीवितेन ते ॥ ०१७ ॥

यदि कृत्यं न पश्यामि तवाद्येह यथा पुरा ।
श्लाघनीयं यशस्यं च का शान्तिर्हृदयस्य मे ॥ ०१८ ॥

नेति चेद्ब्राह्मणान्ब्रूयां दीर्यते हृदयं मम ।
न ह्यहं न च मे भर्ता नेति ब्राह्मणमुक्तवान् ॥ ०१९ ॥

वयमाश्रयणीयाः स्म नाश्रितारः परस्य च ।
सान्यानाश्रित्य जीवन्ती परित्यक्ष्यामि जीवितम् ॥ ०२० ॥

अपारे भव नः पारमप्लवे भव नः प्लवः ।
कुरुष्व स्थानमस्थाने मृतान्सञ्जीवयस्व नः ॥ ०२१ ॥

सर्वे ते शत्रवः सह्या न चेज्जीवितुमिच्छसि ।
अथ चेदीदृशीं वृत्तिं क्लीबामभ्युपपद्यसे ॥ ०२२ ॥

निर्विण्णात्मा हतमना मुञ्चैतां पापजीविकाम् ।
एकशत्रुवधेनैव शूरो गच्छति विश्रुतिम् ॥ ०२३ ॥

इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत ।
माहेन्द्रं च ग्रहं लेभे लोकानां चेश्वरोऽभवत् ॥ ०२४ ॥

नाम विश्राव्य वा संख्ये शत्रूनाहूय दंशितान् ।
सेनाग्रं वापि विद्राव्य हत्वा वा पुरुषं वरम् ॥ ०२५ ॥

यदैव लभते वीरः सुयुद्धेन महद्यशः ।
तदैव प्रव्यथन्तेऽस्य शत्रवो विनमन्ति च ॥ ०२६ ॥

त्यक्त्वात्मानं रणे दक्षं शूरं कापुरुषा जनाः ।
अवशाः पूरयन्ति स्म सर्वकामसमृद्धिभिः ॥ ०२७ ॥

राज्यं वाप्युग्रविभ्रंशं संशयो जीवितस्य वा ।
प्रलब्धस्य हि शत्रोर्वै शेषं कुर्वन्ति साधवः ॥ ०२८ ॥

स्वर्गद्वारोपमं राज्यमथ वाप्यमृतोपमम् ।
रुद्धमेकायने मत्वा पतोल्मुक इवारिषु ॥ ०२९ ॥

जहि शत्रून्रणे राजन्स्वधर्ममनुपालय ।
मा त्वा पश्येत्सुकृपणं शत्रुः श्रीमान्कदाचन ॥ ०३० ॥

अस्मदीयैश्च शोचद्भिर्नदद्भिश्च परैर्वृतम् ।
अपि त्वां नानुपश्येयं दीना दीनमवस्थितम् ॥ ०३१ ॥

उष्य सौवीरकन्याभिः श्लाघस्वार्थैर्यथा पुरा ।

मा च सैन्धवकन्यानामवसन्नो वशं गमः ॥ ०३२ ॥

युवा रूपेण संपन्नो विद्ययाभिजनेन च ।
यस्त्वादृशो विकुर्वीत यशस्वी लोकविश्रुतः ॥ ०३३ ॥

वोढव्ये धुर्यनड्डुवन्मन्ये मरणमेव तत् ॥ ०३३ ॥

यदि त्वामनुपश्यामि परस्य प्रियवादिनम् ।
पृष्ठतोऽनुव्रजन्तं वा का शान्तिर्हृदयस्य मे ॥ ०३४ ॥

नास्मिञ्जातु कुले जातो गच्छेद्योऽन्यस्य पृष्ठतः ।
न त्वं परस्यानुधुरं तात जीवितुमर्हसि ॥ ०३५ ॥

अहं हि क्षत्रहृदयं वेद यत्परिशाश्वतम् ।
पूर्वैः पूर्वतरैः प्रोक्तं परैः परतरैरपि ॥ ०३६ ॥

यो वै कश्चिदिहाजातः क्षत्रियः क्षत्रधर्मवित् ।
भयाद्वृत्तिसमीक्षो वा न नमेदिह कस्यचित् ॥ ०३७ ॥

उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेदिह कस्यचित् ॥ ०३८ ॥

मातङ्गो मत्त इव च परीयात्सुमहामनाः ।
ब्राह्मणेभ्यो नमेन्नित्यं धर्मायैव च सञ्जय ॥ ०३९ ॥

नियच्छन्नितरान्वर्णान्विनिघ्नन्सर्वदुष्कृतः ।
ससहायोऽसहायो वा यावज्जीवं तथा भवेत् ॥ ०४० ॥

# अध्याय १३३

पुत्र उवाच ॥

कृष्णायसस्येव च ते संहत्य हृदयं कृतम् ।
मम मातस्त्वकरुणे वैरप्रज्ञे ह्यमर्षणे ॥ ००१ ॥

अहो क्षत्रसमाचारो यत्र मामपरं यथा ।
ईदृशं वचनं ब्रूयाद्भवती पुत्रमेकजम् ॥ ००२ ॥

किं नु ते मामपश्यन्त्याः पृथिव्या अपि सर्वया ।
किमाभरणकृत्यं ते किं भोगैर्जीवितेन वा ॥ ००३ ॥

मातोवाच ॥

सर्वारम्भा हि विदुषां तात धर्मार्थकारणात् ।
तानेवाभिसमीक्ष्याहं सञ्जय त्वामचूचुदम् ॥ ००४ ॥

स समीक्ष्यक्रमोपेतो मुख्यः कालोऽयमागतः ।
अस्मिंश्चेदागते काले कार्यं न प्रतिपद्यसे ॥ ००५ ॥

असंभावितरूपस्त्वं सुनृशंसं करिष्यसि ॥ ००५ ॥

तं त्वामयशसा स्पृष्टं न ब्रूयां यदि सञ्जय ।
खरीवात्सल्यमाहुस्तन्निःसामर्थ्यमहेतुकम् ॥ ००६ ॥

सद्भिर्विगर्हितं मार्गं त्यज मूर्खनिषेवितम् ।
अविद्या वै महत्यस्ति यामिमां संश्रिताः प्रजाः ॥ ००७ ॥

तव स्याद्यदि सद्वृत्तं तेन मे त्वं प्रियो भवेः ।
धर्मार्थगुणयुक्तेन नेतरेण कथञ्चन ॥ ००८ ॥

दैवमानुषयुक्तेन सद्भिराचरितेन च ॥ ००८ ॥

यो ह्येवमविनीतेन रमते पुत्रनप्तृणा ।
अनुत्थानवता चापि मोघं तस्य प्रजाफलम् ॥ ००९ ॥

अकुर्वन्तो हि कर्माणि कुर्वन्तो निन्दितानि च ।
सुखं नैवेह नामुत्र लभन्ते पुरुषाधमाः ॥ ०१० ॥

युद्धाय क्षत्रियः सृष्टः सञ्जयेह जयाय च ।
क्रूराय कर्मणे नित्यं प्रजानां परिपालने ॥ ०११ ॥

जयन्वा वध्यमानो वा प्राप्नोतीन्द्रसलोकताम् ॥ ०११ ॥

न शक्रभवने पुण्ये दिवि तद्विद्यते सुखम् ।
यदमित्रान्वशे कृत्वा क्षत्रियः सुखमश्नुते ॥ ०१२ ॥

मन्युना दह्यमानेन पुरुषेण मनस्विना ।
निकृतेनेह बहुशः शत्रून्प्रतिजिगीषया ॥ ०१३ ॥

आत्मानं वा परित्यज्य शत्रून्वा विनिपात्य वै ।
अतोऽन्येन प्रकारेण शान्तिरस्य कुतो भवेत् ॥ ०१४ ॥

इह प्राज्ञो हि पुरुषः स्वल्पमप्रियमिच्छति ।
यस्य स्वल्पं प्रियं लोके ध्रुवं तस्याल्पमप्रियम् ॥ ०१५ ॥

प्रियाभावाच्च पुरुषो नैव प्राप्नोति शोभनम् ।
ध्रुवं चाभावमभ्येति गत्वा गङ्गेव सागरम् ॥ ०१६ ॥

पुत्र उवाच ॥

नेयं मतिस्त्वया वाच्या मातः पुत्रे विशेषतः ।
कारुण्यमेवात्र पश्य भूत्वेह जडमूकवत् ॥ ०१७ ॥

मातोवाच ॥

अतो मे भूयसी नन्दिर्यद्देवमनुपश्यसि ।
चोद्यं मां चोदयस्येतद्भृशं वै चोदयामि ते ॥ ०१८ ॥

अथ त्वां पूजयिष्यामि हत्वा वै सर्वसैन्धवान् ।
अहं पश्यामि विजयं कृत्स्नं भाविनमेव ते ॥ ०१९ ॥

पुत्र उवाच ॥

अकोशस्यासहायस्य कुतः स्विद्विजयो मम ।
इत्यवस्थां विदित्वेमामात्मनात्मनि दारुणाम् ॥ ०२० ॥

राज्याद्भावो निवृत्तो मे त्रिदिवादिव दुष्कृतेः ॥ ०२० ॥

ईदृशं भवती कञ्चिदुपायमनुपश्यति ।
तन्मे परिणतप्रज्ञे सम्यक्प्रब्रूहि पृच्छते ॥ ०२१ ॥

करिष्यामि हि तत्सर्वं यथावदनुशासनम् ॥ ०२१ ॥

मातोवाच ॥

पुत्रात्मा नावमन्तव्यः पूर्वाभिरसमृद्धिभिः ।
अभूत्वा हि भवन्त्यर्था भूत्वा नश्यन्ति चापरे ॥ ०२२ ॥

अमर्षेणैव चाप्यर्था नारब्धव्याः सुबालिशैः ।
सर्वेषां कर्मणां तात फले नित्यमनित्यता ॥ ०२३ ॥

अनित्यमिति जानन्तो न भवन्ति भवन्ति च ।
अथ ये नैव कुर्वन्ति नैव जातु भवन्ति ते ॥ ०२४ ॥

ऐकगुण्यमनीहायामभावः कर्मणां फलम् ।
अथ द्वैगुण्यमीहायां फलं भवति वा न वा ॥ ०२५ ॥

यस्य प्रागेव विदिता सर्वार्थानामनित्यता ।
नुदेद्वृद्धिसमृद्धी स प्रतिकूले नृपात्मज ॥ ०२६ ॥

उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु ।
भविष्यतीत्येव मनः कृत्वा सततमव्यथैः ॥ ०२७ ॥

मङ्गलानि पुरस्कृत्य ब्राह्मणैश्चेश्वरैः सह ॥ ०२७ ॥

प्राज्ञस्य नृपतेराशु वृद्धिर्भवति पुत्रक ।
अभिवर्तति लक्ष्मीस्तं प्राचीमिव दिवाकरः ॥ ०२८ ॥

निदर्शनान्युपायांश्च बहून्युद्धर्षणानि च ।
अनुदर्शितरूपोऽसि पश्यामि कुरु पौरुषम् ॥ ०२९ ॥

पुरुषार्थमभिप्रेतं समाहर्तुमिहार्हसि ॥ ०२९ ॥

क्रुद्धा.ण्ल्लुब्धान्परिक्षीणानवक्षिप्तान्विमानितान् ।
स्पर्धिनश्चैव ये केचित्तान्युक्त उपधारय ॥ ०३० ॥

एतेन त्वं प्रकारेण महतो भेत्स्यसे गणान् ।
महावेग इवोद्धूतो मातरिश्वा बलाहकान् ॥ ०३१ ॥

तेषामग्रप्रदायी स्याः कल्योत्थायी प्रियंवदः ।
ते त्वां प्रियं करिष्यन्ति पुरो धास्यन्ति च ध्रुवम् ॥ ०३२ ॥

यदैव शत्रुर्जानीयात्सपत्नं त्यक्तजीवितम् ।
तदैवास्मादुद्विजते सर्पाद्वेश्मगतादिव ॥ ०३३ ॥

तं विदित्वा पराक्रान्तं वशे न कुरुते यदि ।
निर्वादैर्निर्वदेदेनमन्ततस्तद्भविष्यति ॥ ०३४ ॥

निर्वादादास्पदं लब्ध्वा धनवृद्धिर्भविष्यति ।
धनवन्तं हि मित्राणि भजन्ते चाश्रयन्ति च ॥ ०३५ ॥

स्खलितार्थं पुनस्तात संत्यजन्त्यपि बान्धवाः ।
अप्यस्मिन्नाश्रयन्ते च जुगुप्सन्ति च तादृशम् ॥ ०३६ ॥

शत्रुं कृत्वा यः सहायं विश्वासमुपगच्छति ।
अतः संभाव्यमेवैतद्यद्राज्यं प्राप्नुयादिति ॥ ०३७ ॥

---

# अध्याय १३४

मातोवाच ॥

नैव राज्ञा दरः कार्यो जातु कस्यांचिदापदि ।
अथ चेदपि दीर्णः स्यान्नैव वर्तेत दीर्णवत् ॥ ००१ ॥

दीर्णं हि दृष्ट्वा राजानं सर्वमेवानुदीर्यते ।
राष्ट्रं बलममात्याश्च पृथक्कुर्वन्ति ते मतिम् ॥ ००२ ॥

शत्रूनेके प्रपद्यन्ते प्रजहत्यपरे पुनः ।
अन्वेके प्रजिहीर्षन्ति ये पुरस्ताद्विमानिताः ॥ ००३ ॥

य एवात्यन्तसुहृदस्त एनं पर्युपासते ।
अशक्तयः स्वस्तिकामा बद्धवत्सा इडा इव ॥ ००४ ॥

शोचन्तमनुशोचन्ति प्रतीतानिव बान्धवान् ॥ ००४ ॥

अपि ते पूजिताः पूर्वमपि ते सुहृदो मताः ।
ये राष्ट्रमभिमन्यन्ते राज्ञो व्यसनमीयुषः ॥ ००५ ॥

मा दीदरस्त्वं सुहृदो मा त्वां दीर्णं प्रहासिषुः ॥ ००५ ॥

प्रभावं पौरुषं बुद्धिं जिज्ञासन्त्या मया तव ।
उल्लपन्त्या समाश्वासं बलवानिव दुर्बलम् ॥ ००६ ॥

यद्येतत्संविजानासि यदि सम्यग्ब्रवीम्यहम् ।
कृत्वासौम्यमिवात्मानं जयायोत्तिष्ठ सञ्जय ॥ ००७ ॥

अस्ति नः कोशनिचयो महानविदितस्तव ।
तमहं वेद नान्यस्तमुपसंपादयामि ते ॥ ००८ ॥

सन्ति नैकशता भूयः सुहृदस्तव सञ्जय ।
सुखदुःखसहा वीर शतार्हा अनिवर्तिनः ॥ ००९ ॥

तादृशा हि सहाया वै पुरुषस्य बुभूषतः ।
ईषदुज्जिहतः किञ्चित्सचिवाः शत्रुकर्शनाः ॥ ०१० ॥

पुत्र उवाच ॥

कस्य त्वीदृशकं वाक्यं श्रुत्वापि स्वल्पचेतसः ।
तमो न व्यपहन्येत सुचित्रार्थपदाक्षरम् ॥ ०११ ॥

उदके धूरियं धार्या सर्तव्यं प्रवणे मया ।
यस्य मे भवती नेत्री भविष्यद्भूतदर्शिनी ॥ ०१२ ॥

अहं हि वचनं त्वत्तः शुश्रूषुरपरापरम् ।
किञ्चित्किञ्चित्प्रतिवदंस्तूष्णीमासं मुहुर्मुहुः ॥ ०१३ ॥

अतृप्यन्नमृतस्येव कृच्छ्राल्लब्धस्य बान्धवात् ।
उद्यच्छाम्येष शत्रूणां नियमाय जयाय च ॥ ०१४ ॥

कुन्त्युवाच ॥

सदश्व इव स क्षिप्तः प्रणुन्नो वाक्यसायकैः ।
तच्चकार तथा सर्वं यथावदनुशासनम् ॥ ०१५ ॥

इदमुद्धर्षणं भीमं तेजोवर्धनमुत्तमम् ।
राजानं श्रावयेन्मन्त्री सीदन्तं शत्रुपीडितम् ॥ ०१६ ॥

जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा ।
महीं विजयते क्षिप्रं श्रुत्वा शत्रूंश्च मर्दति ॥ ०१७ ॥

इदं पुंसवनं चैव वीराजननमेव च ।
अभीक्ष्णं गर्भिणी श्रुत्वा ध्रुवं वीरं प्रजायते ॥ ०१८ ॥

विद्याशूरं तपःशूरं दमशूरं तपस्विनम् ।
ब्राह्म्या श्रिया दीप्यमानं साधुवादेन संमतम् ॥ ०१९ ॥

अर्चिष्मन्तं बलोपेतं महाभागं महारथम् ।
धृष्टवन्तमनाधृष्यं जेतारमपराजितम् ॥ ०२० ॥

नियन्तारमसाधूनां गोप्तारं धर्मचारिणाम् ।
तदर्थं क्षत्रिया सूते वीरं सत्यपराक्रमम् ॥ ०२१ ॥

# अध्याय १३५

कुन्त्युवाच ॥

अर्जुनं केशव ब्रूयास्त्वयि जाते स्म सूतके ।
उपोपविष्टा नारीभिराश्रमे परिवारिता ॥ ००१ ॥

अथान्तरिक्षे वागासीद्दिव्यरूपा मनोरमा ।
सहस्राक्षसमः कुन्ति भविष्यत्येष ते सुतः ॥ ००२ ॥

एष जेष्यति सङ्ग्रामे कुरून्सर्वान्समागतान् ।
भीमसेनद्वितीयश्च लोकमुद्वर्तयिष्यति ॥ ००३ ॥

पुत्रस्ते पृथिवीं जेता यशश्चास्य दिवस्पृशम् ।
हत्वा कुरून्ग्रामजन्ये वासुदेवसहायवान् ॥ ००४ ॥

पित्र्यमंशं प्रनष्टं च पुनरप्युद्धरिष्यति ।
भ्रातृभिः सहितः श्रीमांस्त्रीन्मेधानाहरिष्यति ॥ ००५ ॥

तं सत्यसंधं बीभत्सुं सव्यसाचिनमच्युत ।
यथाहमेवं जानामि बलवन्तं दुरासदम् ॥ ००६ ॥

तथा तदस्तु दाशार्ह यथा वागभ्यभाषत ॥ ००६ ॥

धर्मश्चेदस्ति वार्ष्णेय तथा सत्यं भविष्यति ।
त्वं चापि तत्तथा कृष्ण सर्वं संपादयिष्यसि ॥ ००७ ॥

नाहं तदभ्यसूयामि यथा वागभ्यभाषत ।
नमो धर्माय महते धर्मो धारयति प्रजाः ॥ ००८ ॥

एतद्धनञ्जयो वाच्यो नित्योद्युक्तो वृकोदरः ।
यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः ॥ ००९ ॥

न हि वैरं समासाद्य सीदन्ति पुरुषर्षभाः ॥ ००९ ॥

विदिता ते सदा बुद्धिर्भीमस्य न स शाम्यति ।
यावदन्तं न कुरुते शत्रूणां शत्रुकर्शनः ॥ ०१० ॥

सर्वधर्मविशेषज्ञां स्नुषां पाण्डोर्महात्मनः ।
ब्रूया माधव कल्याणीं कृष्णां कृष्ण यशस्विनीम् ॥ ०११ ॥

युक्तमेतन्महाभागे कुले जाते यशस्विनि ।
यन्मे पुत्रेषु सर्वेषु यथावत्त्वमवर्तिथाः ॥ ०१२ ॥

माद्रीपुत्रौ च वक्तव्यौ क्षत्रधर्मरतावुभौ ।
विक्रमेणार्जितान्भोगान्वृणीतं जीवितादपि ॥ ०१३ ॥

विक्रमाधिगता ह्यर्थाः क्षत्रधर्मेण जीवतः ।
मनो मनुष्यस्य सदा प्रीणन्ति पुरुषोत्तम ॥ ०१४ ॥

यच्च वः प्रेक्षमाणानां सर्वधर्मोपचायिनी ।
पाञ्चाली परुषाण्युक्ता को नु तत्क्षन्तुमर्हति ॥ ०१५ ॥

न राज्यहरणं दुःखं द्यूते चापि पराजयः ।
प्रव्राजनं सुतानां वा न मे तद्दुःखकारणम् ॥ ०१६ ॥

यत्तु सा बृहती श्यामा सभायां रुदती तदा ।
अश्रौषीत्परुषा वाचस्तन्मे दुःखतरं मतम् ॥ ०१७ ॥

स्त्रीधर्मिणी वरारोहा क्षत्रधर्मरता सदा ।
नाध्यगच्छत्तदा नाथं कृष्णा नाथवती सती ॥ ०१८ ॥

तं वै ब्रूहि महाबाहो सर्वशस्त्रभृतां वरम् ।
अर्जुनं पुरुषव्याघ्रं द्रौपद्याः पदवीं चर ॥ ०१९ ॥

विदितौ हि तवात्यन्तं क्रुद्धाविव यमान्तकौ ।
भीमार्जुनौ नयेतां हि देवानपि परां गतिम् ॥ ०२० ॥

तयोश्चैतदवज्ञानं यत्सा कृष्णा सभागता ।
दुःशासनश्च यद्भीमं कटुकान्यभ्यभाषत ॥ ०२१ ॥

पश्यतां कुरुवीराणां तच्च संस्मारयेः पुनः ॥ ०२१ ॥

पाण्डवान्कुशलं पृच्छेः सपुत्रान्कृष्णया सह ।
मां च कुशलिनीं ब्रूयास्तेषु भूयो जनार्दन ॥ ०२२ ॥

अरिष्टं गच्छ पन्थानं पुत्रान्मे परिपालय ॥ ०२२ ॥

वैशंपायन उवाच ॥

अभिवाद्याथ तां कृष्णः कृत्वा चाभिप्रदक्षिणम् ।
निश्चक्राम महाबाहुः सिंहखेलगतिस्ततः ॥ ०२३ ॥

ततो विसर्जयामास भीष्मादीन्कुरुपुङ्गवान् ।
आरोप्य च रथे कर्णं प्रायात्सात्यकिना सह ॥ ०२४ ॥

ततः प्रयाते दाशार्हे कुरवः सङ्गता मिथः ।
जजल्पुर्महदाश्चर्यं केशवे परमाद्भुतम् ॥ ०२५ ॥

प्रमूढा पृथिवी सर्वा मृत्युपाशसिता कृता ।
दुर्योधनस्य बालिश्यान्नैतदस्तीति चाब्रुवन् ॥ ०२६ ॥

ततो निर्याय नगरात्प्रययौ पुरुषोत्तमः ।
मन्त्रयामास च तदा कर्णेन सुचिरं सह ॥ ०२७ ॥

विसर्जयित्वा राधेयं सर्वयादवनन्दनः ।
ततो जवेन महता तूर्णमश्वानचोदयत् ॥ ०२८ ॥

ते पिबन्त इवाकाशं दारुकेण प्रचोदिताः ।
हया जग्मुर्महावेगा मनोमारुतरंहसः ॥ ०२९ ॥

ते व्यतीत्य तमध्वानं क्षिप्रं श्येना इवाशुगाः ।
उच्चैः सूर्यमुपप्लव्यं शार्ङ्गधन्वानमावहन् ॥ ०३० ॥

---

# अध्याय १३६

वैशंपायन उवाच ॥

कुन्त्यास्तु वचनं श्रुत्वा भीष्मद्रोणौ महारथौ ।
दुर्योधनमिदं वाक्यमूचतुः शासनातिगम् ॥ ००१ ॥

श्रुतं ते पुरुषव्याघ्र कुन्त्याः कृष्णस्य संनिधौ ।
वाक्यमर्थवदव्यग्रमुक्तं धर्म्यमनुत्तमम् ॥ ००२ ॥

तत्करिष्यन्ति कौन्तेया वासुदेवस्य संमतम् ।
न हि ते जातु शाम्येरन्नृते राज्येन कौरव ॥ ००३ ॥

क्लेशिता हि त्वया पार्था धर्मपाशसितास्तदा ।
सभायां द्रौपदी चैव तैश्च तन्मर्षितं तव ॥ ००४ ॥

कृतास्त्रं ह्यर्जुनं प्राप्य भीमं च कृतनिश्रमम् ।
गाण्डीवं चेषुधी चैव रथं च ध्वजमेव च ॥ ००५ ॥

सहायं वासुदेवं च न क्षंस्यति युधिष्ठिरः ॥ ००५ ॥

प्रत्यक्षं ते महाबाहो यथा पार्थेन धीमता ।
विराटनगरे पूर्वं सर्वे स्म युधि निर्जिताः ॥ ००६ ॥

दानवान्घोरकर्माणो निवातकवचान्युधि ।
रौद्रमस्त्रं समाधाय दग्धवानस्त्रवह्निना ॥ ००७ ॥

कर्णप्रभृतयश्चेमे त्वं चापि कवची रथी ।
मोक्षिता घोषयात्रायां पर्याप्तं तन्निदर्शनम् ॥ ००८ ॥

प्रशाम्य भरतश्रेष्ठ भ्रातृभिः सह पाण्डवैः ।
रक्षेमां पृथिवीं सर्वां मृत्योर्दंष्ट्रान्तरं गताम् ॥ ००९ ॥

ज्येष्ठो भ्राता धर्मशीलो वत्सलः श्लक्ष्णवाक्शुचिः ।
तं गच्छ पुरुषव्याघ्रं व्यपनीयेह किल्बिषम् ॥ ०१० ॥

दृष्टश्चेत्त्वं पाण्डवेन व्यपनीतशरासनः ।
प्रसन्नभ्रुकुटिः श्रीमान्कृता शान्तिः कुलस्य नः ॥ ०११ ॥

तमभ्येत्य सहामात्यः परिष्वज्य नृपात्मजम् ।
अभिवादय राजानं यथापूर्वमरिंदम ॥ ०१२ ॥

अभिवादयमानं त्वां पाणिभ्यां भीमपूर्वजः ।

प्रतिगृह्णातु सौहार्दात्कुन्तीपुत्रो युधिष्ठिरः ॥ ०१३ ॥

सिंहस्कन्धोरुबाहुस्त्वां वृत्तायतमहाभुजः ।
परिष्वजतु बाहुभ्यां भीमः प्रहरतां वरः ॥ ०१४ ॥

सिंहग्रीवो गुडाकेशस्ततस्त्वां पुष्करेक्षणः ।
अभिवादयतां पार्थः कुन्तीपुत्रो धनञ्जयः ॥ ०१५ ॥

आश्विनेयौ नरव्याघ्रौ रूपेणाप्रतिमौ भुवि ।
तौ च त्वां गुरुवत्प्रेम्णा पूजया प्रत्युदीयताम् ॥ ०१६ ॥

मुञ्चन्त्वानन्दजाश्रूणि दाशार्हप्रमुखा नृपाः ।
सङ्गच्छ भ्रातृभिः सार्धं मानं संत्यज्य पार्थिव ॥ ०१७ ॥

प्रशाधि पृथिवीं कृत्स्नां ततस्तं भ्रातृभिः सह ।
समालिङ्ग्य च हर्षेण नृपा यान्तु परस्परम् ॥ ०१८ ॥

अलं युद्धेन राजेन्द्र सुहृदां शृणु कारणम् ।
ध्रुवं विनाशो युद्धे हि क्षत्रियाणां प्रदृश्यते ॥ ०१९ ॥

ज्योतींषि प्रतिकूलानि दारुणा मृगपक्षिणः ।
उत्पाता विविधा वीर दृश्यन्ते क्षत्रनाशनाः ॥ ०२० ॥

विशेषत इहास्माकं निमित्तानि विनाशने ।
उल्काभिर्हि प्रदीप्ताभिर्वध्यते पृतना तव ॥ ०२१ ॥

वाहनान्यप्रहृष्टानि रुदन्तीव विशां पते ।
गृध्रास्ते पर्युपासन्ते सैन्यानि च समन्ततः ॥ ०२२ ॥

नगरं न यथापूर्वं तथा राजनिवेशनम् ।
शिवाश्चाशिवनिर्घोषा दीप्तां सेवन्ति वै दिशम् ॥ ०२३ ॥

कुरु वाक्यं पितुर्मातुरस्माकं च हितैषिणाम् ।
त्वय्यायत्तो महाबाहो शमो व्यायाम एव च ॥ ०२४ ॥

न चेत्करिष्यसि वचः सुहृदामरिकर्शन ।
तप्स्यसे वाहिनीं दृष्ट्वा पार्थबाणप्रपीडिताम् ॥ ०२५ ॥

भीमस्य च महानादं नदतः शुष्मिणो रणे ।
श्रुत्वा स्मर्तासि मे वाक्यं गाण्डीवस्य च निस्वनम् ॥ ०२६ ॥

यद्येतदपसव्यं ते भविष्यति वचो मम ॥ ०२६ ॥

---

# अध्याय १३७

वैशंपायन उवाच ॥

एवमुक्तस्तु विमनास्तिर्यग्दृष्टिरधोमुखः ।
संहत्य च भ्रुवोर्मध्यं न किञ्चिद्व्याजहार ह ॥ ००१ ॥

तं वै विमनसं दृष्ट्वा संप्रेक्ष्यान्योन्यमन्तिकात् ।
पुनरेवोत्तरं वाक्यमुक्तवन्तौ नरर्षभौ ॥ ००२ ॥

भीष्म उवाच ॥

शुश्रूषुमनसूयं च ब्रह्मण्यं सत्यसङ्गरम् ।
प्रतियोत्स्यामहे पार्थमतो दुःखतरं नु किम् ॥ ००३ ॥

द्रोण उवाच ॥

अश्वत्थाम्नि यथा पुत्रे भूयो मम धनञ्जये ।
बहुमानः परो राजन्संनतिश्च कपिध्वजे ॥ ००४ ॥

तं चेत्पुत्रात्प्रियतरं प्रतियोत्स्ये धनञ्जयम् ।
क्षत्रधर्ममनुष्ठाय धिगस्तु क्षत्रजीविकाम् ॥ ००५ ॥

यस्य लोके समो नास्ति कश्चिदन्यो धनुर्धरः ।
मत्प्रसादात्स बीभत्सुः श्रेयानन्यैर्धनुर्धरैः ॥ ००६ ॥

मित्रध्रुग्दुष्टभावश्च नास्तिकोऽथानृजुः शठः ।
न सत्सु लभते पूजां यज्ञे मूर्ख इवागतः ॥ ००७ ॥

वार्यमाणोऽपि पापेभ्यः पापात्मा पापमिच्छति ।
चोद्यमानोऽपि पापेन शुभात्मा शुभमिच्छति ॥ ००८ ॥

मिथ्योपचरिता ह्येते वर्तमाना ह्यनु प्रिये ।
अहितत्वाय कल्पन्ते दोषा भरतसत्तम ॥ ००९ ॥

त्वमुक्तः कुरुवृद्धेन मया च विदुरेण च ।
वासुदेवेन च तथा श्रेयो नैवाभिपद्यसे ॥ ०१० ॥

अस्ति मे बलमित्येव सहसा त्वं तितीर्षसि ।
सग्राहनक्रमकरं गङ्गावेगमिवोष्णगे ॥ ०११ ॥

वास एव यथा हि त्वं प्रावृण्वानोऽद्य मन्यसे ।
स्रजं त्यक्तामिव प्राप्य लोभाद्यौधिष्ठिरीं श्रियम् ॥ ०१२ ॥

द्रौपदीसहितं पार्थं सायुधैर्भ्रातृभिर्वृतम् ।
वनस्थमपि राज्यस्थः पाण्डवं कोऽतिजीवति ॥ ०१३ ॥

निदेशे यस्य राजानः सर्वे तिष्ठन्ति किङ्कराः ।
तमैलविलमासाद्य धर्मराजो व्यराजत ॥ ०१४ ॥

कुबेरसदनं प्राप्य ततो रत्नान्यवाप्य च ।
स्फीतमाक्रम्य ते राष्ट्रं राज्यमिच्छन्ति पाण्डवाः ॥ ०१५ ॥

दत्तं हुतमधीतं च ब्राह्मणास्तर्पिता धनैः ।
आवयोर्गतमायुश्च कृतकृत्यौ च विद्धि नौ ॥ ०१६ ॥

त्वं तु हित्वा सुखं राज्यं मित्राणि च धनानि च ।
विग्रहं पाण्डवैः कृत्वा महद्व्यसनमाप्स्यसि ॥ ०१७ ॥

द्रौपदी यस्य चाशास्ते विजयं सत्यवादिनी ।
तपोघोरव्रता देवी न त्वं जेष्यसि पाण्डवम् ॥ ०१८ ॥

मन्त्री जनार्दनो यस्य भ्राता यस्य धनञ्जयः ।
सर्वशस्त्रभृतां श्रेष्ठं कथं जेष्यसि पाण्डवम् ॥ ०१९ ॥

सहाया ब्राह्मणा यस्य धृतिमन्तो जितेन्द्रियाः ।
तमुग्रतपसं वीरं कथं जेष्यसि पाण्डवम् ॥ ०२० ॥

पुनरुक्तं च वक्ष्यामि यत्कार्यं भूतिमिच्छता ।
सुहृदा मज्जमानेषु सुहृत्सु व्यसनार्णवे ॥ ०२१ ॥

अलं युद्धेन तैर्वीरैः शाम्य त्वं कुरुवृद्धये ।
मा गमः ससुतामात्यः सबलश्च पराभवम् ॥ ०२२ ॥

# कर्णोपनिवादपर्व

## अध्याय १३८

धृतराष्ट्र उवाच ॥

राजपुत्रैः परिवृतस्तथामात्यैश्च सञ्जय ।
उपारोप्य रथे कर्णं निर्यातो मधुसूदनः ॥ ००१ ॥

किमब्रवीद्रथोपस्थे राधेयं परवीरहा ।
कानि सान्त्वानि गोविन्दः सूतपुत्रे प्रयुक्तवान् ॥ ००२ ॥

ओघमेघस्वनः काले यत्कृष्णः कर्णमब्रवीत् ।
मृदु वा यदि वा तीक्ष्णं तन्ममाचक्ष्व सञ्जय ॥ ००३ ॥

सञ्जय उवाच ॥

आनुपूर्व्येण वाक्यानि श्लक्ष्णानि च मृदूनि च ।
प्रियाणि धर्मयुक्तानि सत्यानि च हितानि च ॥ ००४ ॥

हृदयग्रहणीयानि राधेयं मधुसूदनः ।
यान्यब्रवीदमेयात्मा तानि मे शृणु भारत ॥ ००५ ॥

वासुदेव उवाच ॥

उपासितास्ते राधेय ब्राह्मणा वेदपारगाः ।
तत्त्वार्थं परिपृष्टाश्च नियतेनानसूयया ॥ ००६ ॥

त्वमेव कर्ण जानासि वेदवादान्सनातनान् ।
त्वं ह्येव धर्मशास्त्रेषु सूक्ष्मेषु परिनिष्ठितः ॥ ००७ ॥

कानीनश्च सहोढश्च कन्यायां यश्च जायते ।
वोढारं पितरं तस्य प्राहुः शास्त्रविदो जनाः ॥ ००८ ॥

सोऽसि कर्ण तथा जातः पाण्डोः पुत्रोऽसि धर्मतः ।
निग्रहाद्धर्मशास्त्राणामेहि राजा भविष्यसि ॥ ००९ ॥

पितृपक्षे हि ते पार्था मातृपक्षे च वृष्णयः ।
द्वौ पक्षावभिजानीहि त्वमेतौ पुरुषर्षभ ॥ ०१० ॥

मया सार्धमितो यातमद्य त्वां तात पाण्डवाः ।
अभिजानन्तु कौन्तेयं पूर्वजातं युधिष्ठिरात् ॥ ०११ ॥

पादौ तव ग्रहीष्यन्ति भ्रातरः पञ्च पाण्डवाः ।
द्रौपदेयास्तथा पञ्च सौभद्रश्चापराजितः ॥ ०१२ ॥

राजानो राजपुत्राश्च पाण्डवार्थे समागताः ।
पादौ तव ग्रहीष्यन्ति सर्वे चान्धकवृष्णयः ॥ ०१३ ॥

हिरण्मयांश्च ते कुम्भान्राजतान्पार्थिवांस्तथा ।
ओषध्यः सर्वबीजानि सर्वरत्नानि वीरुधः ॥ ०१४ ॥

राजन्या राजकन्याश्चाप्यानयन्त्वभिषेचनम् ।
षष्ठे च त्वां तथा काले द्रौपद्युपगमिष्यति ॥ ०१५ ॥

अद्य त्वामभिषिञ्चन्तु चातुर्वैद्या द्विजातयः ।
पुरोहितः पाण्डवानां व्याघ्रचर्मण्यवस्थितम् ॥ ०१६ ॥

तथैव भ्रातरः पञ्च पाण्डवाः पुरुषर्षभाः ।
द्रौपदेयास्तथा पञ्च पाञ्चालाश्चेदयस्तथा ॥ ०१७ ॥

अहं च त्वाभिषेक्ष्यामि राजानं पृथिवीपतिम् ।

युवराजोऽस्तु ते राजा कुन्तीपुत्रो युधिष्ठिरः ॥ ०१८ ॥

गृहीत्वा व्यजनं श्वेतं धर्मात्मा संशितव्रतः ।
उपान्वारोहतु रथं कुन्तीपुत्रो युधिष्ठिरः ॥ ०१९ ॥

छत्रं च ते महच्छ्वेतं भीमसेनो महाबलः ।
अभिषिक्तस्य कौन्तेय कौन्तेयो धारयिष्यति ॥ ०२० ॥

किङ्किणीशतनिर्घोषं वैयाघ्रपरिवारणम् ।
रथं श्वेतहयैर्युक्तमर्जुनो वाहयिष्यति ॥ ०२१ ॥

अभिमन्युश्च ते नित्यं प्रत्यासन्नो भविष्यति ।
नकुलः सहदेवश्च द्रौपदेयाश्च पञ्च ये ॥ ०२२ ॥

पाञ्चालास्त्वानुयास्यन्ति शिखण्डी च महारथः ।
अहं च त्वानुयास्यामि सर्वे चान्धकवृष्णयः ॥ ०२३ ॥

दाशार्हाः परिवारास्ते दाशार्णाश्च विशां पते ॥ ०२३ ॥

भुङ्क्ष्व राज्यं महाबाहो भ्रातृभिः सह पाण्डवैः ।
जपैर्होमैश्च संयुक्तो मङ्गलैश्च पृथग्विधैः ॥ ०२४ ॥

पुरोगमाश्च ते सन्तु द्रविडाः सह कुन्तलैः ।
आन्ध्रास्तालचराश्चैव चूचुपा वेणुपास्तथा ॥ ०२५ ॥

स्तुवन्तु त्वाद्य बहुशः स्तुतिभिः सूतमागधाः ।
विजयं वसुषेणस्य घोषयन्तु च पाण्डवाः ॥ ०२६ ॥

स त्वं परिवृतः पार्थैर्नक्षत्रैरिव चन्द्रमाः ।
प्रशाधि राज्यं कौन्तेय कुन्तीं च प्रतिनन्दय ॥ ०२७ ॥

मित्राणि ते प्रहृष्यन्तु व्यथन्तु रिपवस्तथा ।
सौभ्रात्रं चैव तेऽद्यास्तु भ्रातृभिः सह पाण्डवैः ॥ ०२८ ॥

---

# अध्याय १३९

कर्ण उवाच ॥

असंशयं सौहृदान्मे प्रणयाच्चात्थ केशव ।
सख्येन चैव वार्ष्णेय श्रेयस्कामतयैव च ॥ ००१ ॥

सर्वं चैवाभिजानामि पाण्डोः पुत्रोऽस्मि धर्मतः ।
निग्रहाद्धर्मशास्त्राणां यथा त्वं कृष्ण मन्यसे ॥ ००२ ॥

कन्या गर्भं समाधत्त भास्करान्मां जनार्दन ।
आदित्यवचनाच्चैव जातं मां सा व्यसर्जयत् ॥ ००३ ॥

सोऽस्मि कृष्ण तथा जातः पाण्डोः पुत्रोऽस्मि धर्मतः ।
कुन्त्या त्वहमपाकीर्णो यथा न कुशलं तथा ॥ ००४ ॥

सूतो हि मामधिरथो दृष्ट्वैव अनयद्गृहान् ।
राधायाश्चैव मां प्रादात्सौहार्दान्मधुसूदन ॥ ००५ ॥

मत्स्नेहाच्चैव राधायाः सद्यः क्षीरमवातरत् ।
सा मे मूत्रं पुरीषं च प्रतिजग्राह माधव ॥ ००६ ॥

तस्याः पिण्डव्यपनयं कुर्यादस्मद्विधः कथम् ।
धर्मविद्धर्मशास्त्राणां श्रवणे सततं रतः ॥ ००७ ॥

तथा मामभिजानाति सूतश्चाधिरथः सुतम् ।
पितरं चाभिजानामि तमहं सौहृदात्सदा ॥ ००८ ॥

स हि मे जातकर्मादि कारयामास माधव ।
शास्त्रदृष्टेन विधिना पुत्रप्रीत्या जनार्दन ॥ ००९ ॥

नाम मे वसुषेणेति कारयामास वै द्विजैः ।
भार्याश्चोढा मम प्राप्ते यौवने तेन केशव ॥ ०१० ॥

तासु पुत्राश्च पौत्राश्च मम जाता जनार्दन ।
तासु मे हृदयं कृष्ण सञ्जातं कामबन्धनम् ॥ ०११ ॥

न पृथिव्या सकलया न सुवर्णस्य राशिभिः ।
हर्षाद्भयाद्वा गोविन्द अनृतं वक्तुमुत्सहे ॥ ०१२ ॥

धृतराष्ट्रकुले कृष्ण दुर्योधनसमाश्रयात् ।
मया त्रयोदश समा भुक्तं राज्यमकण्टकम् ॥ ०१३ ॥

इष्टं च बहुभिर्यज्ञैः सह सूतैर्मयासकृत् ।
आवाहाश्च विवाहाश्च सह सूतैः कृता मया ॥ ०१४ ॥

मां च कृष्ण समाश्रित्य कृतः शस्त्रसमुद्यमः ।
दुर्योधनेन वार्ष्णेय विग्रहश्चापि पाण्डवैः ॥ ०१५ ॥

तस्माद्रणे द्वैरथे मां प्रत्युद्यातारमच्युत ।
वृतवान्परमं हृष्टः प्रतीपं सव्यसाचिनः ॥ ०१६ ॥

वधाद्बन्धाद्भयाद्वापि लोभाद्वापि जनार्दन ।
अनृतं नोत्सहे कर्तुं धार्तराष्ट्रस्य धीमतः ॥ ०१७ ॥

यदि ह्यद्य न गच्छेयं द्वैरथं सव्यसाचिना ।
अकीर्तिः स्याद्धृषीकेश मम पार्थस्य चोभयोः ॥ ०१८ ॥

असंशयं हितार्थाय ब्रूयास्त्वं मधुसूदन ।
सर्वं च पाण्डवाः कुर्युस्त्वद्वशित्वान्न संशयः ॥ ०१९ ॥

मन्त्रस्य नियमं कुर्यास्त्वमत्र पुरुषोत्तम ।
एतदत्र हितं मन्ये सर्वयादवनन्दन ॥ ०२० ॥

यदि जानाति मां राजा धर्मात्मा संशितव्रतः ।
कुन्त्याः प्रथमजं पुत्रं न स राज्यं ग्रहीष्यति ॥ ०२१ ॥

प्राप्य चापि महद्राज्यं तदहं मधुसूदन ।
स्फीतं दुर्योधनायैव संप्रदद्यामरिंदम ॥ ०२२ ॥

स एव राजा धर्मात्मा शाश्वतोऽस्तु युधिष्ठिरः ।
नेता यस्य हृषीकेशो योद्धा यस्य धनञ्जयः ॥ ०२३ ॥

पृथिवी तस्य राष्ट्रं च यस्य भीमो महारथः ।
नकुलः सहदेवश्च द्रौपदेयाश्च माधव ॥ ०२४ ॥

उत्तमौजा युधामन्युः सत्यधर्मा च सोमकिः ।
चैद्यश्च चेकितानश्च शिखण्डी चापराजितः ॥ ०२५ ॥

इन्द्रगोपकवर्णाश्च केकया भ्रातरस्तथा ।
इन्द्रायुधसवर्णश्च कुन्तिभोजो महारथः ॥ ०२६ ॥

मातुलो भीमसेनस्य सेनजिच्च महारथः ।
शङ्खः पुत्रो विराटस्य निधिस्त्वं च जनार्दन ॥ ०२७ ॥

महानयं कृष्ण कृतः क्षत्रस्य समुदानयः ।

राज्यं प्राप्तमिदं दीप्तं प्रथितं सर्वराजसु ॥ ०२८ ॥

धार्तराष्ट्रस्य वार्ष्णेय शस्त्रयज्ञो भविष्यति ।
अस्य यज्ञस्य वेत्ता त्वं भविष्यसि जनार्दन ॥ ०२९ ॥

आध्वर्यवं च ते कृष्ण क्रतावस्मिन्भविष्यति ॥ ०२९ ॥

होता चैवात्र बीभत्सुः संनद्धः स कपिध्वजः ।
गाण्डीवं स्रुक्तथाज्यं च वीर्यं पुंसां भविष्यति ॥ ०३० ॥

ऐन्द्रं पाशुपतं ब्राह्मं स्थूणाकर्णं च माधव ।
मन्त्रास्तत्र भविष्यन्ति प्रयुक्ताः सव्यसाचिना ॥ ०३१ ॥

अनुयातश्च पितरमधिको वा पराक्रमे ।
ग्रावस्तोत्रं स सौभद्रः सम्यक्तत्र करिष्यति ॥ ०३२ ॥

उद्गातात्र पुनर्भीमः प्रस्तोता सुमहाबलः ।
विनदन्स नरव्याघ्रो नागानीकान्तकृद्रणे ॥ ०३३ ॥

स चैव तत्र धर्मात्मा शश्वद्राजा युधिष्ठिरः ।
जपैर्होमैश्च संयुक्तो ब्रह्मत्वं कारयिष्यति ॥ ०३४ ॥

शङ्खशब्दाः समुरजा भेर्यश्च मधुसूदन ।
उत्कृष्टसिंहनादाश्च सुब्रह्मण्यो भविष्यति ॥ ०३५ ॥

नकुलः सहदेवश्च माद्रीपुत्रौ यशस्विनौ ।
शामित्रं तौ महावीर्यौ सम्यक्तत्र करिष्यतः ॥ ०३६ ॥

कल्माषदण्डा गोविन्द विमला रथशक्तयः ।
यूपाः समुपकल्पन्तामस्मिन्यज्ञे जनार्दन ॥ ०३७ ॥

कर्णिनालीकनाराचा वत्सदन्तोपबृंहणाः ।
तोमराः सोमकलशाः पवित्राणि धनूंषि च ॥ ०३८ ॥

असयोऽत्र कपालानि पुरोडाशाः शिरांसि च ।
हविस्तु रुधिरं कृष्ण अस्मिन्यज्ञे भविष्यति ॥ ०३९ ॥

इध्माः परिधयश्चैव शक्त्योऽथ विमला गदाः ।
सदस्या द्रोणशिष्याश्च कृपस्य च शरद्वतः ॥ ०४० ॥

इषवोऽत्र परिस्तोमा मुक्ता गाण्डीवधन्वना ।
महारथप्रयुक्ताश्च द्रोणद्रौणिप्रचोदिताः ॥ ०४१ ॥

प्रातिप्रस्थानिकं कर्म सात्यकिः स करिष्यति ।
दीक्षितो धार्तराष्ट्रोऽत्र पत्नी चास्य महाचमूः ॥ ०४२ ॥

घटोत्कचोऽत्र शामित्रं करिष्यति महाबलः ।
अतिरात्रे महाबाहो वितते यज्ञकर्मणि ॥ ०४३ ॥

दक्षिणा त्वस्य यज्ञस्य धृष्टद्युम्नः प्रतापवान् ।
वैताने कर्मणि तते जातो यः कृष्ण पावकात् ॥ ०४४ ॥

यदब्रुवमहं कृष्ण कटुकानि स्म पाण्डवान् ।
प्रियार्थं धार्तराष्ट्रस्य तेन तप्येऽद्य कर्मणा ॥ ०४५ ॥

यदा द्रक्ष्यसि मां कृष्ण निहतं सव्यसाचिना ।
पुनश्चितिस्तदा चास्य यज्ञस्याथ भविष्यति ॥ ०४६ ॥

दुःशासनस्य रुधिरं यदा पास्यति पाण्डवः ।
आनर्दं नर्दतः सम्यक्तदा सुत्यं भविष्यति ॥ ०४७ ॥

यदा द्रोणं च भीष्मं च पाञ्चाल्यौ पातयिष्यतः ।

तदा यज्ञावसानं तद्भविष्यति जनार्दन ॥ ०४८ ॥

दुर्योधनं यदा हन्ता भीमसेनो महाबलः ।
तदा समाप्स्यते यज्ञो धार्तराष्ट्रस्य माधव ॥ ०४९ ॥

स्नुषाश्च प्रस्नुषाश्चैव धृतराष्ट्रस्य सङ्गताः ।
हतेश्वरा हतसुता हतनाथाश्च केशव ॥ ०५० ॥

गान्धार्या सह रोदन्त्यः श्वगृध्रकुरराकुले ।
स यज्ञेऽस्मिन्नवभृथो भविष्यति जनार्दन ॥ ०५१ ॥

विद्यावृद्धा वयोवृद्धाः क्षत्रियाः क्षत्रियर्षभ ।
वृथामृत्युं न कुर्वीरंस्त्वत्कृते मधुसूदन ॥ ०५२ ॥

शस्त्रेण निधनं गच्छेत्समृद्धं क्षत्रमण्डलम् ।
कुरुक्षेत्रे पुण्यतमे त्रैलोक्यस्यापि केशव ॥ ०५३ ॥

तदत्र पुण्डरीकाक्ष विधत्स्व यदभीप्सितम् ।
यथा कार्त्स्न्येन वार्ष्णेय क्षत्रं स्वर्गमवाप्नुयात् ॥ ०५४ ॥

यावत्स्थास्यन्ति गिरयः सरितश्च जनार्दन ।
तावत्कीर्तिभवः शब्दः शाश्वतोऽयं भविष्यति ॥ ०५५ ॥

ब्राह्मणाः कथयिष्यन्ति महाभारतमाहवम् ।
समागमेषु वार्ष्णेय क्षत्रियाणां यशोधरम् ॥ ०५६ ॥

समुपानय कौन्तेयं युद्धाय मम केशव ।
मन्त्रसंवरणं कुर्वन्नित्यमेव परंतप ॥ ०५७ ॥

# अध्याय १४०

सञ्जय उवाच ॥

कर्णस्य वचनं श्रुत्वा केशवः परवीरहा ।
उवाच प्रहसन्वाक्यं स्मितपूर्वमिदं तदा ॥ ००१ ॥

अपि त्वां न तपेत्कर्ण राज्यलाभोपपादना ।
मया दत्तां हि पृथिवीं न प्रशासितुमिच्छसि ॥ ००२ ॥

ध्रुवो जयः पाण्डवानामितीदं ; न संशयः कश्चन विद्यतेऽत्र ।
जयध्वजो दृश्यते पाण्डवस्य ; समुच्छ्रितो वानरराज उग्रः ॥ ००३ ॥

दिव्या माया विहिता भौवनेन ; समुच्छ्रिता इन्द्रकेतुप्रकाशा ।
दिव्यानि भूतानि भयावहानि ; दृश्यन्ति चैवात्र भयानकानि ॥ ००४ ॥

न सज्जते शैलवनस्पतिभ्य ; ऊर्ध्वं तिर्यग्योजनमात्ररूपः ।
श्रीमान्ध्वजः कर्ण धनञ्जयस्य ; समुच्छ्रितः पावकतुल्यरूपः ॥ ००५ ॥

यदा द्रक्ष्यसि सङ्ग्रामे श्वेताश्वं कृष्णसारथिम् ।
ऐन्द्रमस्त्रं विकुर्वाणमुभे चैवाग्निमारुते ॥ ००६ ॥

गाण्डीवस्य च निर्घोषं विस्फूर्जितमिवाशनेः ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥ ००७ ॥

यदा द्रक्ष्यसि सङ्ग्रामे कुन्तीपुत्रं युधिष्ठिरम् ।
जपहोमसमायुक्तं स्वां रक्षन्तं महाचमूम् ॥ ००८ ॥

आदित्यमिव दुर्धर्षं तपन्तं शत्रुवाहिनीम् ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥ ००९ ॥

यदा द्रक्ष्यसि सङ्ग्रामे भीमसेनं महाबलम् ।
दुःशासनस्य रुधिरं पीत्वा नृत्यन्तमाहवे ॥ ०१० ॥

प्रभिन्नमिव मातङ्गं प्रतिद्विरदघातिनम् ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥ ०११ ॥

यदा द्रक्ष्यसि सङ्ग्रामे माद्रीपुत्रौ महारथौ ।
वाहिनीं धार्तराष्ट्राणां क्षोभयन्तौ गजाविव ॥ ०१२ ॥

विगाढे शस्त्रसंपाते परवीररथारुजौ ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥ ०१३ ॥

यदा द्रक्ष्यसि सङ्ग्रामे द्रोणं शांतनवं कृपम् ।
सुयोधनं च राजानं सैन्धवं च जयद्रथम् ॥ ०१४ ॥

युद्धायापततस्तूर्णं वारितान्सव्यसाचिना ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥ ०१५ ॥

ब्रूयाः कर्ण इतो गत्वा द्रोणं शांतनवं कृपम् ।
सौम्योऽयं वर्तते मासः सुप्रापयवसेन्धनः ॥ ०१६ ॥

पक्कौषधिवनस्फीतः फलवानल्पमक्षिकः ।
निष्पङ्को रसवत्तोयो नात्युष्णशिशिरः सुखः ॥ ०१७ ॥

सप्तमाच्चापि दिवसादमावास्या भविष्यति ।
सङ्ग्रामं योजयेत्तत्र तां ह्याहुः शक्रदेवताम् ॥ ०१८ ॥

तथा राज्ञो वदेः सर्वान्ये युद्धायाभ्युपागताः ।
यद्वो मनीषितं तद्वै सर्वं संपादयामि वः ॥ ०१९ ॥

राजानो राजपुत्राश्च दुर्योधनवशानुगाः ।

प्राप्य शस्त्रेण निधनं प्राप्स्यन्ति गतिमुत्तमाम्  ॥ ०२०  ॥

---

# अध्याय १४१

सञ्जय उवाच  ॥

केशवस्य तु तद्वाक्यं कर्णः श्रुत्वा हितं शुभम् ।
अब्रवीदभिसंपूज्य कृष्णं मधुनिषूदनम्  ॥ ००१  ॥

जानन्मां किं महाबाहो संमोहयितुमिच्छसि  ॥ ००१  ॥

योऽयं पृथिव्याः कार्त्स्न्येन विनाशः समुपस्थितः ।
निमित्तं तत्र शकुनिरहं दुःशासनस्तथा  ॥ ००२  ॥

दुर्योधनश्च नृपतिर्धृतराष्ट्रसुतोऽभवत्  ॥ ००२  ॥

असंशयमिदं कृष्ण महद्युद्धमुपस्थितम् ।
पाण्डवानां कुरूणां च घोरं रुधिरकर्दमम्  ॥ ००३  ॥

राजानो राजपुत्राश्च दुर्योधनवशानुगाः ।
रणे शस्त्राग्निना दग्धाः प्राप्स्यन्ति यमसादनम्  ॥ ००४  ॥

स्वप्ना हि बहवो घोरा दृश्यन्ते मधुसूदन ।
निमित्तानि च घोराणि तथोत्पाताः सुदारुणाः  ॥ ००५  ॥

पराजयं धार्तराष्ट्रे विजयं च युधिष्ठिरे ।
शंसन्त इव वार्ष्णेय विविधा लोमहर्षणाः  ॥ ००६  ॥

प्राजापत्यं हि नक्षत्रं ग्रहस्तीक्ष्णो महाद्युतिः ।
शनैश्चरः पीडयति पीडयन्प्राणिनोऽधिकम्  ॥ ००७  ॥

कृत्वा चाङ्गारको वक्रं ज्येष्ठायां मधुसूदन ।
अनुराधां प्रार्थयते मैत्रं संशमयन्निव  ॥ ००८  ॥

नूनं महद्भयं कृष्ण कुरूणां समुपस्थितम् ।
विशेषेण हि वार्ष्णेय चित्रां पीडयते ग्रहः  ॥ ००९  ॥

सोमस्य लक्ष्म व्यावृत्तं राहुरर्कमुपेष्यति ।
दिवश्चोल्काः पतन्त्येताः सनिर्घाताः सकम्पनाः  ॥ ०१०  ॥

निष्टनन्ति च मातङ्गा मुञ्चन्त्यश्रूणि वाजिनः ।
पानीयं यवसं चापि नाभिनन्दन्ति माधव  ॥ ०११  ॥

प्रादुर्भूतेषु चैतेषु भयमाहुरुपस्थितम् ।
निमित्तेषु महाबाहो दारुणं प्राणिनाशनम्  ॥ ०१२  ॥

अल्पे भुक्ते पुरीषं च प्रभूतमिह दृश्यते ।
वाजिनां वारणानां च मनुष्याणां च केशव  ॥ ०१३  ॥

धार्तराष्ट्रस्य सैन्येषु सर्वेषु मधुसूदन ।
पराभवस्य तल्लिङ्गमिति प्राहुर्मनीषिणः  ॥ ०१४  ॥

प्रहृष्टं वाहनं कृष्ण पाण्डवानां प्रचक्षते ।
प्रदक्षिणा मृगाश्चैव तत्तेषां जयलक्षणम्  ॥ ०१५  ॥

अपसव्या मृगाः सर्वे धार्तराष्ट्रस्य केशव ।
वाचश्चाप्यशरीरिण्यस्तत्पराभवलक्षणम्  ॥ ०१६  ॥

मयूराः पुष्पशकुना हंसाः सारसचातकाः ।

जीवं जीवकसंघाश्चाप्यनुगच्छन्ति पाण्डवान् ॥ ०१७ ॥

गृध्राः काका बडाः श्येना यातुधानाः शलावृकाः ।
मक्षिकाणां च संघाता अनुगच्छन्ति कौरवान् ॥ ०१८ ॥

धार्तराष्ट्रस्य सैन्येषु भेरीणां नास्ति निस्वनः ।
अनाहताः पाण्डवानां नदन्ति पटहाः किल ॥ ०१९ ॥

उदपानाश्च नर्दन्ति यथा गोवृषभास्तथा ।
धार्तराष्ट्रस्य सैन्येषु तत्पराभवलक्षणम् ॥ ०२० ॥

मांसशोणितवर्षं च वृष्टं देवेन माधव ।
तथा गन्धर्वनगरं भानुमन्तमुपस्थितम् ॥ ०२१ ॥

सप्राकारं सपरिखं सवप्रं चारुतोरणम् ॥ ०२१ ॥

कृष्णश्च परिघस्तत्र भानुमावृत्य तिष्ठति ।
उदयास्तमये संध्ये वेदयानो महद्भयम् ॥ ०२२ ॥

एका सृग्वाशते घोरं तत्पराभवलक्षणम् ॥ ०२२ ॥

कृष्णग्रीवाश्च शकुना लम्बमाना भयानकाः ।
संध्यामभिमुखा यान्ति तत्पराभवलक्षणम् ॥ ०२३ ॥

ब्राह्मणान्प्रथमं द्वेष्टि गुरूंश्च मधुसूदन ।
भृत्यान्भक्तिमतश्चापि तत्पराभवलक्षणम् ॥ ०२४ ॥

पूर्वा दिग्लोहिताकारा शस्त्रवर्णा च दक्षिणा ।
आमपात्रप्रतीकाशा पश्चिमा मधुसूदन ॥ ०२५ ॥

प्रदीप्ताश्च दिशः सर्वा धार्तराष्ट्रस्य माधव ।

महद्भयं वेदयन्ति तस्मिन्नुत्पातलक्षणे ॥ ०२६ ॥

सहस्रपादं प्रासादं स्वप्नान्ते स्म युधिष्ठिरः ।
अधिरोहन्मया दृष्टः सह भ्रातृभिरच्युत ॥ ०२७ ॥

श्वेतोष्णीषाश्च दृश्यन्ते सर्वे ते शुक्लवाससः ।
आसनानि च शुभ्राणि सर्वेषामुपलक्षये ॥ ०२८ ॥

तव चापि मया कृष्ण स्वप्नान्ते रुधिराविला ।
आन्त्रेण पृथिवी दृष्टा परिक्षिप्ता जनार्दन ॥ ०२९ ॥

अस्थिसञ्चयमारूढश्चामितौजा युधिष्ठिरः ।
सुवर्णपात्र्यां संहृष्टो भुक्तवान्घृतपायसम् ॥ ०३० ॥

युधिष्ठिरो मया दृष्टो ग्रसमानो वसुंधराम् ।
त्वया दत्तामिमां व्यक्तं भोक्ष्यते स वसुंधराम् ॥ ०३१ ॥

उच्चं पर्वतमारूढो भीमकर्मा वृकोदरः ।
गदापाणिर्नरव्याघ्रो वीक्षन्निव महीमिमाम् ॥ ०३२ ॥

क्षपयिष्यति नः सर्वान्स सुव्यक्तं महारणे ।
विदितं मे हृषीकेश यतो धर्मस्ततो जयः ॥ ०३३ ॥

पाण्डुरं गजमारूढो गाण्डीवी स धनञ्जयः ।
त्वया सार्धं हृषीकेश श्रिया परमया ज्वलन् ॥ ०३४ ॥

यूयं सर्वान्वधिष्यध्वं तत्र मे नास्ति संशयः ।
पार्थिवान्समरे कृष्ण दुर्योधनपुरोगमान् ॥ ०३५ ॥

नकुलः सहदेवश्च सात्यकिश्च महारथः ।
शुद्धकेयूरकण्ठत्राः शुक्लमाल्याम्बरावृताः ॥ ०३६ ॥

अधिरूढा नरव्याघ्रा नरवाहनमुत्तमम् ।
त्रय एते महामात्राः पाण्डुरच्छत्रवाससः ॥ ०३७ ॥

श्वेतोष्णीषाश्च दृश्यन्ते त्रय एव जनार्दन ।
धार्तराष्ट्रस्य सैन्येषु तान्विजानीहि केशव ॥ ०३८ ॥

अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ।
रक्तोष्णीषाश्च दृश्यन्ते सर्वे माधव पार्थिवाः ॥ ०३९ ॥

उष्ट्रयुक्तं समारूढौ भीष्मद्रोणौ जनार्दन ।
मया सार्धं महाबाहो धार्तराष्ट्रेण चाभिभो ॥ ०४० ॥

अगस्त्यशास्तां च दिशं प्रयाताः स्म जनार्दन ।
अचिरेणैव कालेन प्राप्स्यामो यमसादनम् ॥ ०४१ ॥

अहं चान्ये च राजानो यच्च तत्क्षत्रमण्डलम् ।
गाण्डीवाग्निं प्रवेक्ष्याम इति मे नास्ति संशयः ॥ ०४२ ॥

कृष्ण उवाच ॥

उपस्थितविनाशेयं नूनमद्य वसुंधरा ।
तथा हि मे वचः कर्ण नोपैति हृदयं तव ॥ ०४३ ॥

सर्वेषां तात भूतानां विनाशे समुपस्थिते ।
अनयो नयसङ्काशो हृदयान्नापसर्पति ॥ ०४४ ॥

कर्ण उवाच ॥

अपि त्वा कृष्ण पश्याम जीवन्तोऽस्मान्महारणात् ।
समुत्तीर्णा महाबाहो वीरक्षयविनाशनात् ॥ ०४५ ॥

अथ वा सङ्गमः कृष्ण स्वर्गे नो भविता ध्रुवम् ।
तत्रेदानीं समेष्यामः पुनः सार्धं त्वयानघ ॥ ०४६ ॥

सञ्जय उवाच ॥

इत्युक्त्वा माधवं कर्णः परिष्वज्य च पीडितम् ।
विसर्जितः केशवेन रथोपस्थादवातरत् ॥ ०४७ ॥

ततः स्वरथमास्थाय जाम्बूनदविभूषितम् ।
सहास्माभिर्निववृते राधेयो दीनमानसः ॥ ०४८ ॥

ततः शीघ्रतरं प्रायात्केशवः सहसात्यकिः ।
पुनरुच्चारयन्वाणीं याहि याहीति सारथिम् ॥ ०४९ ॥

---

# अध्याय १४२

वैशंपायन उवाच ॥

असिद्धानुनये कृष्णे कुरुभ्यः पाण्डवान्गते ।
अभिगम्य पृथां क्षत्ता शनैः शोचन्निवाब्रवीत् ॥ ००१ ॥

जानासि मे जीवपुत्रे भावं नित्यमनुग्रहे ।
क्रोशतो न च गृह्णीते वचनं मे सुयोधनः ॥ ००२ ॥

उपपन्नो ह्यसौ राजा चेदिपाञ्चालकेकयैः ।
भीमार्जुनाभ्यां कृष्णेन युयुधानयमैरपि ॥ ००३ ॥

उपप्लव्ये निविष्टोऽपि धर्ममेव युधिष्ठिरः ।
काङ्क्षते ज्ञातिसौहार्दाद्बलवान्दुर्बलो यथा ॥ ००४ ॥

राजा तु धृतराष्ट्रोऽयं वयोवृद्धो न शाम्यति ।
मत्तः पुत्रमदेनैव विधर्मे पथि वर्तते ॥ ००५ ॥

जयद्रथस्य कर्णस्य तथा दुःशासनस्य च ।
सौबलस्य च दुर्बुद्ध्या मिथोभेदः प्रवर्तते ॥ ००६ ॥

अधर्मेण हि धर्मिष्ठं हृतं वै राज्यमीदृशम् ।
येषां तेषामयं धर्मः सानुबन्धो भविष्यति ॥ ००७ ॥

ह्रियमाणे बलाद्धर्मे कुरुभिः को न सञ्ज्वरेत् ।
असाम्ना केशवे याते समुद्योक्ष्यन्ति पाण्डवाः ॥ ००८ ॥

ततः कुरूणामनयो भविता वीरनाशनः ।
चिन्तयन्न लभे निद्रामहःसु च निशासु च ॥ ००९ ॥

श्रुत्वा तु कुन्ती तद्वाक्यमर्थकामेन भाषितम् ।
अनिष्टनन्ती दुःखार्ता मनसा विममर्श ह ॥ ०१० ॥

धिगस्त्वर्थं यत्कृतेऽयं महाञ्ज्ञातिवधे क्षयः ।
वर्त्स्यते सुहृदां ह्येषां युद्धेऽस्मिन्वै पराभवः ॥ ०११ ॥

पाण्डवाश्चेदिपाञ्चाला यादवाश्च समागताः ।
भारतैर्यदि योत्स्यन्ति किं नु दुःखमतः परम् ॥ ०१२ ॥

पश्ये दोषं ध्रुवं युद्धे तथा युद्धे पराभवम् ।
अधनस्य मृतं श्रेयो न हि ज्ञातिक्षये जयः ॥ ०१३ ॥

पितामहः शांतनव आचार्यश्च युधां पतिः ।

कर्णश्च धार्तराष्ट्रार्थं वर्धयन्ति भयं मम ॥ ०१४ ॥

नाचार्यः कामवाञ्शिष्यैर्द्रोणो युध्येत जातु चित् ।
पाण्डवेषु कथं हार्दं कुर्यान्न च पितामहः ॥ ०१५ ॥

अयं त्वेको वृथादृष्टिर्धार्तराष्ट्रस्य दुर्मतेः ।
मोहानुवर्ती सततं पापो द्वेष्टि च पाण्डवान् ॥ ०१६ ॥

महत्यनर्थे निर्बन्धी बलवांश्च विशेषतः ।
कर्णः सदा पाण्डवानां तन्मे दहति सांप्रतम् ॥ ०१७ ॥

आशंसे त्वद्य कर्णस्य मनोऽहं पाण्डवान्प्रति ।
प्रसादयितुमासाद्य दर्शयन्ती यथातथम् ॥ ०१८ ॥

तोषितो भगवान्यत्र दुर्वासा मे वरं ददौ ।
आह्वानं देवसंयुक्तं वसन्त्याः पितृवेश्मनि ॥ ०१९ ॥

साहमन्तःपुरे राज्ञः कुन्तिभोजपुरस्कृता ।
चिन्तयन्ती बहुविधं हृदयेन विदूयता ॥ ०२० ॥

बलाबलं च मन्त्राणां ब्राह्मणस्य च वाग्बलम् ।
स्त्रीभावाद्बालभावाच्च चिन्तयन्ती पुनः पुनः ॥ ०२१ ॥

धात्र्या विश्रब्धया गुप्ता सखीजनवृता तदा ।
दोषं परिहरन्ती च पितुश्चारित्ररक्षिणी ॥ ०२२ ॥

कथं नु सुकृतं मे स्यान्नापराधवती कथम् ।
भवेयमिति सञ्चिन्त्य ब्राह्मणं तं नमस्य च ॥ ०२३ ॥

कौतूहलात्तु तं लब्ध्वा बालिश्यादाचरं तदा ।
कन्या सती देवमर्कमासादयमहं ततः ॥ ०२४ ॥

योऽसौ कानीनगर्भो मे पुत्रवत्परिवर्तितः ।
कस्मान्न कुर्याद्वचनं पथ्यं भ्रातृहितं तथा ॥ ०२५ ॥

इति कुन्ती विनिश्चित्य कार्यं निश्चितमुत्तमम् ।
कार्यार्थमभिनिर्याय ययौ भागीरथीं प्रति ॥ ०२६ ॥

आत्मजस्य ततस्तस्य घृणिनः सत्यसङ्गिनः ।
गङ्गातीरे पृथाश्रृण्वदुपाध्ययननिस्वनम् ॥ ०२७ ॥

प्राङ्मुखस्योर्ध्वबाहोः सा पर्यतिष्ठत पृष्ठतः ।
जप्यावसानं कार्यार्थं प्रतीक्षन्ती तपस्विनी ॥ ०२८ ॥

अतिष्ठत्सूर्यतापार्ता कर्णस्योत्तरवाससि ।
कौरव्यपत्नी वार्ष्णेयी पद्ममालेव शुष्यती ॥ ०२९ ॥

आ पृष्ठतापाज्जप्त्वा स परिवृत्य यतव्रतः ।
दृष्ट्वा कुन्तीमुपातिष्ठदभिवाद्य कृताञ्जलिः ॥ ०३० ॥

यथान्यायं महातेजा मानी धर्मभृतां वरः ॥ ०३० ॥

---

# अध्याय १४३

कर्ण उवाच ॥

राधेयोऽहमाधिरथिः कर्णस्त्वामभिवादये ।
प्राप्ता किमर्थं भवती ब्रूहि किं करवाणि ते ॥ ००१ ॥

कुन्त्युवाच ॥

कौन्तेयस्त्वं न राधेयो न तवाधिरथः पिता ।
नासि सूतकुले जातः कर्ण तद्विद्धि मे वचः ॥ ००२ ॥

कानीनस्त्वं मया जातः पूर्वजः कुक्षिणा धृतः ।
कुन्तिभोजस्य भवने पार्थस्त्वमसि पुत्रक ॥ ००३ ॥

प्रकाशकर्मा तपनो योऽयं देवो विरोचनः ।
अजीजनत्त्वां मय्येष कर्ण शस्त्रभृतां वरम् ॥ ००४ ॥

कुण्डली बद्धकवचो देवगर्भः श्रिया वृतः ।
जातस्त्वमसि दुर्धर्ष मया पुत्र पितुर्गृहे ॥ ००५ ॥

स त्वं भ्रातॄनसंबुद्ध्वा मोहाद्यदुपसेवसे ।
धार्तराष्ट्रान्न तद्युक्तं त्वयि पुत्र विशेषतः ॥ ००६ ॥

एतद्धर्मफलं पुत्र नराणां धर्मनिश्चये ।
यत्तुष्यन्त्यस्य पितरो माता चाप्येकदर्शिनी ॥ ००७ ॥

अर्जुनेनार्जितां पूर्वं हृतां लोभादसाधुभिः ।
आच्छिद्य धार्तराष्ट्रेभ्यो भुङ्क्ष्व यौधिष्ठिरीं श्रियम् ॥ ००८ ॥

अद्य पश्यन्तु कुरवः कर्णार्जुनसमागमम् ।
सौभ्रात्रेण तदालक्ष्य संनमन्तामसाधवः ॥ ००९ ॥

कर्णार्जुनौ वै भवतां यथा रामजनार्दनौ ।
असाध्यं किं नु लोके स्याद्युवयोः सहितात्मनोः ॥ ०१० ॥

कर्ण शोभिष्यसे नूनं पञ्चभिर्भ्रातृभिर्वृतः ।

वेदैः परिवृतो ब्रह्मा यथा वेदाङ्गपञ्चमैः ॥ ०११ ॥

उपपन्नो गुणैः श्रेष्ठो ज्येष्ठः श्रेष्ठेषु बन्धुषु ।
सूतपुत्रेति मा शब्दः पार्थस्त्वमसि वीर्यवान् ॥ ०१२ ॥

---

# अध्याय १४४

वैशंपायन उवाच ॥

ततः सूर्यान्निश्चरितां कर्णः शुश्राव भारतीम् ।
दुरत्ययां प्रणयिनीं पितृवद्भास्करेरिताम् ॥ ००१ ॥

सत्यमाह पृथा वाक्यं कर्ण मातृवचः कुरु ।
श्रेयस्ते स्यान्नरव्याघ्र सर्वमाचरतस्तथा ॥ ००२ ॥

एवमुक्तस्य मात्रा च स्वयं पित्रा च भानुना ।
चचाल नैव कर्णस्य मतिः सत्यधृतेस्तदा ॥ ००३ ॥

कर्ण उवाच ॥

न ते न श्रद्दधे वाक्यं क्षत्रिये भाषितं त्वया ।
धर्मद्वारं ममैतत्स्यान्नियोगकरणं तव ॥ ००४ ॥

अकरोन्मयि यत्पापं भवती सुमहात्ययम् ।
अवकीर्णोऽस्मि ते तेन तद्यशःकीर्तिनाशनम् ॥ ००५ ॥

अहं च क्षत्रियो जातो न प्राप्तः क्षत्रसत्क्रियाम् ।

त्वत्कृते किं नु पापीयः शत्रुः कुर्यान्ममाहितम्  ॥ ००६  ॥

क्रियाकाले त्वनुक्रोशमकृत्वा त्वमिमं मम ।
हीनसंस्कारसमयमद्य मां समचूचुदः  ॥ ००७  ॥

न वै मम हितं पूर्वं मातृवच्चेष्टितं त्वया ।
सा मां संबोधयस्यद्य केवलात्महितैषिणी  ॥ ००८  ॥

कृष्णेन सहितात्को वै न व्यथेत धनञ्जयात् ।
कोऽद्य भीतं न मां विद्यात्पार्थानां समितिं गतम्  ॥ ००९  ॥

अभ्राता विदितः पूर्वं युद्धकाले प्रकाशितः ।
पाण्डवान्यदि गच्छामि किं मां क्षत्रं वदिष्यति  ॥ ०१०  ॥

सर्वकामैः संविभक्तः पूजितश्च सदा भृशम् ।
अहं वै धार्तराष्ट्राणां कुर्यां तदफलं कथम्  ॥ ०११  ॥

उपनह्य परैर्वैरं ये मां नित्यमुपासते ।
नमस्कुर्वन्ति च सदा वसवो वासवं यथा  ॥ ०१२  ॥

मम प्राणेन ये शत्रूञ्शक्ताः प्रतिसमासितुम् ।
मन्यन्तेऽद्य कथं तेषामहं भिन्द्यां मनोरथम्  ॥ ०१३  ॥

मया प्लवेन सङ्ग्रामं तितीर्षन्ति दुरत्ययम् ।
अपारे पारकामा ये त्यजेयं तानहं कथम्  ॥ ०१४  ॥

अयं हि कालः संप्राप्तो धार्तराष्ट्रोपजीविनाम् ।
निर्वेष्टव्यं मया तत्र प्राणानपरिरक्षता  ॥ ०१५  ॥

कृतार्थाः सुभृता ये हि कृत्यकाल उपस्थिते ।
अनवेक्ष्य कृतं पापा विकुर्वन्त्यनवस्थिताः  ॥ ०१६  ॥

राजकिल्बिषिणां तेषां भर्तृपिण्डापहारिणाम् ।
नैवायं न परो लोको विद्यते पापकर्मणाम् ॥ ०१७ ॥

धृतराष्ट्रस्य पुत्राणामर्थे योत्स्यामि ते सुतैः ।
बलं च शक्तिं चास्थाय न वै त्वय्यनृतं वदे ॥ ०१८ ॥

आनृशंस्यमथो वृत्तं रक्षन्सत्पुरुषोचितम् ।
अतोऽर्थकरमप्येतन्न करोम्यद्य ते वचः ॥ ०१९ ॥

न तु तेऽयं समारम्भो मयि मोघो भविष्यति ।
वध्यान्विषह्यान्सङ्ग्रामे न हनिष्यामि ते सुतान् ॥ ०२० ॥

युधिष्ठिरं च भीमं च यमौ चैवार्जुनादृते ॥ ०२० ॥

अर्जुनेन समं युद्धं मम यौधिष्ठिरे बले ।
अर्जुनं हि निहत्याजौ संप्राप्तं स्यात्फलं मया ॥ ०२१ ॥

यशसा चापि युज्येयं निहतः सव्यसाचिना ॥ ०२१ ॥

न ते जातु नशिष्यन्ति पुत्राः पञ्च यशस्विनि ।
निरर्जुनाः सकर्णा वा सार्जुना वा हते मयि ॥ ०२२ ॥

वैशंपायन उवाच ॥

इति कर्णवचः श्रुत्वा कुन्ती दुःखात्प्रवेपती ।
उवाच पुत्रमाश्लिष्य कर्णं धैर्यादकम्पितम् ॥ ०२३ ॥

एवं वै भाव्यमेतेन क्षयं यास्यन्ति कौरवाः ।
यथा त्वं भाषसे कर्ण दैवं तु बलवत्तरम् ॥ ०२४ ॥

त्वया चतुर्णां भ्रातॄणामभयं शत्रुकर्शन ।
दत्तं तत्प्रतिजानीहि सङ्गरप्रतिमोचनम् ॥ ०२५ ॥

अनामयं स्वस्ति चेति पृथाथो कर्णमब्रवीत् ।
तां कर्णोऽभ्यवदत्प्रीतस्ततस्तौ जग्मतुः पृथक् ॥ ०२६ ॥

---

# अभिनिर्याणपर्व

## अध्याय १४५

वैशंपायन उवाच ॥

आगम्य हास्तिनपुरादुपप्लव्यमरिंदमः ।
पाण्डवानां यथावृत्तं केशवः सर्वमुक्तवान् ॥ ००१ ॥

संभाष्य सुचिरं कालं मन्त्रयित्वा पुनः पुनः ।
स्वमेवावसथं शौरिर्विश्रामार्थं जगाम ह ॥ ००२ ॥

विसृज्य सर्वान्नृपतीन्विराटप्रमुखांस्तदा ।
पाण्डवा भ्रातरः पञ्च भानावस्तङ्गते सति ॥ ००३ ॥

संध्यामुपास्य ध्यायन्तस्तमेव गतमानसाः ।
आनाय्य कृष्णं दाशार्हं पुनर्मन्त्रममन्त्रयन् ॥ ००४ ॥

युधिष्ठिर उवाच ॥

त्वया नागपुरं गत्वा सभायां धृतराष्ट्रजः ।

किमुक्तः पुण्डरीकाक्ष तन्नः शंसितुमर्हसि ॥ ००५ ॥

वासुदेव उवाच ॥

मया नागपुरं गत्वा सभायां धृतराष्ट्रजः ।
तथ्यं पथ्यं हितं चोक्तो न च गृह्णाति दुर्मतिः ॥ ००६ ॥

युधिष्ठिर उवाच ॥

तस्मिन्नुत्पथमापन्ने कुरुवृद्धः पितामहः ।
किमुक्तवान्हृषीकेश दुर्योधनममर्षणम् ॥ ००७ ॥

आचार्यो वा महाबाहो भारद्वाजः किमब्रवीत् ॥ ००७ ॥

पिता यवीयानस्माकं क्षत्ता धर्मभृतां वरः ।
पुत्रशोकाभिसंतप्तः किमाह धृतराष्ट्रजम् ॥ ००८ ॥

किं च सर्वे नृपतयः सभायां ये समासते ।
उक्तवन्तो यथातत्त्वं तद्ब्रूहि त्वं जनार्दन ॥ ००९ ॥

उक्तवान्हि भवान्सर्वं वचनं कुरुमुख्ययोः ।
कामलोभाभिभूतस्य मन्दस्य प्राज्ञमानिनः ॥ ०१० ॥

अप्रियं हृदये मह्यं तन्न तिष्ठति केशव ।
तेषां वाक्यानि गोविन्द श्रोतुमिच्छाम्यहं विभो ॥ ०११ ॥

यथा च नाभिपद्येत कालस्तात तथा कुरु ।
भवान्हि नो गतिः कृष्ण भवान्नाथो भवान्गुरुः ॥ ०१२ ॥

वासुदेव उवाच ॥

श्रृणु राजन्यथा वाक्यमुक्तो राजा सुयोधनः ।
मध्ये कुरूणां राजेन्द्र सभायां तन्निबोध मे ॥ ०१३ ॥

मया वै श्राविते वाक्ये जहास धृतराष्ट्रजः ।
अथ भीष्मः सुसङ्क्रुद्ध इदं वचनमब्रवीत् ॥ ०१४ ॥

दुर्योधन निबोधेदं कुलार्थे यद्ब्रवीमि ते ।
तच्छ्रुत्वा राजशार्दूल स्वकुलस्य हितं कुरु ॥ ०१५ ॥

मम तात पिता राजञ्शंतनुर्लोकविश्रुतः ।
तस्याहमेक एवासं पुत्रः पुत्रवतां वरः ॥ ०१६ ॥

तस्य बुद्धिः समुत्पन्ना द्वितीयः स्यात्कथं सुतः ।
एकपुत्रमपुत्रं वै प्रवदन्ति मनीषिणः ॥ ०१७ ॥

न चोच्छेदं कुलं यायाद्विस्तीर्येत कथं यशः ।
तस्याहमीप्सितं बुद्ध्वा कालीं मातरमावहम् ॥ ०१८ ॥

प्रतिज्ञां दुष्करां कृत्वा पितुरर्थे कुलस्य च ।
अराजा चोर्ध्वरेताश्च यथा सुविदितं तव ॥ ०१९ ॥

प्रतीतो निवसाम्येष प्रतिज्ञामनुपालयन् ॥ ०१९ ॥

तस्यां जज्ञे महाबाहुः श्रीमान्कुरुकुलोद्वहः ।
विचित्रवीर्यो धर्मात्मा कनीयान्मम पार्थिवः ॥ ०२० ॥

स्वर्याते ऽहं पितरि तं स्वराज्ये संन्यवेशयम् ।
विचित्रवीर्यं राजानं भृत्यो भूत्वा ह्यधश्चरः ॥ ०२१ ॥

तस्याहं सदृशान्दारान्राजेन्द्र समुदावहम् ।
जित्वा पार्थिवसंघातमपि ते बहुशः श्रुतम् ॥ ०२२ ॥

ततो रामेण समरे द्वन्द्वयुद्धमुपागमम् ।
स हि रामभयादेभिर्नागरैर्विप्रवासितः ॥ ०२३ ॥

दारेष्वतिप्रसक्तश्च यक्ष्माणं समपद्यत ॥ ०२३ ॥

यदा त्वराजके राष्ट्रे न ववर्ष सुरेश्वरः ।
तदाभ्यधावन्मामेव प्रजाः क्षुद्भयपीडिताः ॥ ०२४ ॥

प्रजा ऊचुः ॥

उपक्षीणाः प्रजाः सर्वा राजा भव भवाय नः ।
ईतयो नुद भद्रं ते शंतनोः कुलवर्धन ॥ ०२५ ॥

पीड्यन्ते ते प्रजाः सर्वा व्याधिभिर्भृशदारुणैः ।
अल्पावशिष्टा गाङ्गेय ताः परित्रातुमर्हसि ॥ ०२६ ॥

व्याधीन्प्रणुद्य वीर त्वं प्रजा धर्मेण पालय ।
त्वयि जीवति मा राष्ट्रं विनाशमुपगच्छतु ॥ ०२७ ॥

भीष्म उवाच ॥

प्रजानां क्रोशतीनां वै नैवाक्षुभ्यत मे मनः ।
प्रतिज्ञां रक्षमाणस्य सद्वृत्तं स्मरतस्तथा ॥ ०२८ ॥

ततः पौरा महाराज माता काली च मे शुभा ।
भृत्याः पुरोहिताचार्या ब्राह्मणाश्च बहुश्रुताः ॥ ०२९ ॥

मामूचुर्भृशसंतप्ता भव राजेति संततम् ॥ ०२९ ॥

प्रतीपरक्षितं राष्ट्रं त्वां प्राप्य विनशिष्यति ।

स त्वमस्मद्धितार्थं वै राजा भव महामते ॥ ०३० ॥

इत्युक्तः प्राञ्जलिर्भूत्वा दुःखितो भृशमातुरः ।
तेभ्यो न्यवेदयं पुत्र प्रतिज्ञां पितृगौरवात् ॥ ०३१ ॥

ऊर्ध्वरेता ह्यराजा च कुलस्यार्थे पुनः पुनः ॥ ०३१ ॥

ततोऽहं प्राञ्जलिर्भूत्वा मातरं संप्रसादयम् ।
नाम्ब शंतनुना जातः कौरवं वंशमुद्वहन् ॥ ०३२ ॥

प्रतिज्ञां वितथां कुर्यामिति राजन्पुनः पुनः ॥ ०३२ ॥

विशेषतस्त्वदर्थं च धुरि मा मां नियोजय ।
अहं प्रेष्यश्च दासश्च तवाम्ब सुतवत्सले ॥ ०३३ ॥

एवं तामनुनीयाहं मातरं जनमेव च ।
अयाचं भ्रातृदारेषु तदा व्यासं महामुनिम् ॥ ०३४ ॥

सह मात्रा महाराज प्रसाद्य तमृषिं तदा ।
अपत्यार्थमयाचं वै प्रसादं कृतवांश्च सः ॥ ०३५ ॥

त्रीन्स पुत्रानजनयत्तदा भरतसत्तम ॥ ०३५ ॥

अन्धः करणहीनेति न वै राजा पिता तव ।
राजा तु पाण्डुरभवन्महात्मा लोकविश्रुतः ॥ ०३६ ॥

स राजा तस्य ते पुत्राः पितुर्दायाद्यहारिणः ।
मा तात कलहं कार्षी राज्यस्यार्धं प्रदीयताम् ॥ ०३७ ॥

मयि जीवति राज्यं कः संप्रशासेत्पुमानिह ।
मावमंस्था वचो मह्यं शममिच्छामि वः सदा ॥ ०३८ ॥

न विशेषोऽस्ति मे पुत्र त्वयि तेषु च पार्थिव ।
मतमेतत्पितुस्तुभ्यं गान्धार्या विदुरस्य च ॥ ०३९ ॥

श्रोतव्यं यदि वृद्धानां मातिशङ्कीर्वचो मम ।
नाशयिष्यसि मा सर्वमात्मानं पृथिवीं तथा ॥ ०४० ॥

---

## अध्याय १४६

वासुदेव उवाच ॥

भीष्मेणोक्ते ततो द्रोणो दुर्योधनमभाषत ।
मध्ये नृपाणां भद्रं ते वचनं वचनक्षमः ॥ ००१ ॥

प्रातीपः शंतनुस्तात कुलस्यार्थे यथोत्थितः ।
तथा देवव्रतो भीष्मः कुलस्यार्थे स्थितोऽभवत् ॥ ००२ ॥

ततः पाण्डुर्नरपतिः सत्यसंधो जितेन्द्रियः ।
राजा कुरूणां धर्मात्मा सुव्रतः सुसमाहितः ॥ ००३ ॥

ज्येष्ठाय राज्यमददाद्धृतराष्ट्राय धीमते ।
यवीयसस्तथा क्षत्तुः कुरुवंशविवर्धनः ॥ ००४ ॥

ततः सिंहासने राजन्स्थापयित्वैनमच्युतम् ।
वनं जगाम कौरव्यो भार्याभ्यां सहितोऽनघ ॥ ००५ ॥

नीचैः स्थित्वा तु विदुर उपास्ते स्म विनीतवत् ।

प्रेष्यवत्पुरुषव्याघ्रो वालव्यजनमुत्क्षिपन् ॥ ००६ ॥

ततः सर्वाः प्रजास्तात धृतराष्ट्रं जनेश्वरम् ।
अन्वपद्यन्त विधिवद्यथा पाण्डुं नराधिपम् ॥ ००७ ॥

विसृज्य धृतराष्ट्राय राज्यं स विदुराय च ।
चचार पृथिवीं पाण्डुः सर्वां परपुरञ्जयः ॥ ००८ ॥

कोशसञ्जनने दाने भृत्यानां चान्ववेक्षणे ।
भरणे चैव सर्वस्य विदुरः सत्यसङ्गरः ॥ ००९ ॥

संधिविग्रहसंयुक्तो राज्ञः संवाहनक्रियाः ।
अवैक्षत महातेजा भीष्मः परपुरञ्जयः ॥ ०१० ॥

सिंहासनस्थो नृपतिर्धृतराष्ट्रो महाबलः ।
अन्वास्यमानः सततं विदुरेण महात्मना ॥ ०११ ॥

कथं तस्य कुले जातः कुलभेदं व्यवस्यसि ।
संभूय भ्रातृभिः सार्धं भुङ्क्ष्व भोगाञ्जनाधिप ॥ ०१२ ॥

ब्रवीम्यहं न कार्पण्यान्नार्थहेतोः कथञ्चन ।
भीष्मेण दत्तमश्नामि न त्वया राजसत्तम ॥ ०१३ ॥

नाहं त्वत्तोऽभिकाङ्क्षिष्ये वृत्त्युपायं जनाधिप ।
यतो भीष्मस्ततो द्रोणो यद्भीष्मस्त्वाह तत्कुरु ॥ ०१४ ॥

दीयतां पाण्डुपुत्रेभ्यो राज्यार्धमरिकर्शन ।
सममाचार्यकं तात तव तेषां च मे सदा ॥ ०१५ ॥

अश्वत्थामा यथा मह्यं तथा श्वेतहयो मम ।
बहुना किं प्रलापेन यतो धर्मस्ततो जयः ॥ ०१६ ॥

एवमुक्ते महाराज द्रोणेनामिततेजसा ।
व्याजहार ततो वाक्यं विदुरः सत्यसङ्गरः ॥ ०१७ ॥

पितुर्वदनमन्वीक्ष्य परिवृत्य च धर्मवित् ॥ ०१७ ॥

देवव्रत निबोधेदं वचनं मम भाषतः ।
प्रनष्टः कौरवो वंशस्त्वयायं पुनरुद्धृतः ॥ ०१८ ॥

तन्मे विलपमानस्य वचनं समुपेक्षसे ।
कोऽयं दुर्योधनो नाम कुलेऽस्मिन्कुलपांसनः ॥ ०१९ ॥

यस्य लोभाभिभूतस्य मतिं समनुवर्तसे ।
अनार्यस्याकृतज्ञस्य लोभोपहतचेतसः ॥ ०२० ॥

अतिक्रामति यः शास्त्रं पितुर्धर्मार्थदर्शिनः ॥ ०२० ॥

एते नश्यन्ति कुरवो दुर्योधनकृतेन वै ।
यथा ते न प्रणश्येयुर्महाराज तथा कुरु ॥ ०२१ ॥

मां चैव धृतराष्ट्रं च पूर्वमेव महाद्युते ।
चित्रकार इवालेख्यं कृत्वा मा स्म विनाशय ॥ ०२२ ॥

प्रजापतिः प्रजाः सृष्ट्वा यथा संहरते तथा ॥ ०२२ ॥

नोपेक्षस्व महाबाहो पश्यमानः कुलक्षयम् ।
अथ तेऽद्य मतिर्नष्टा विनाशे प्रत्युपस्थिते ॥ ०२३ ॥

वनं गच्छ मया सार्धं धृतराष्ट्रेण चैव ह ॥ ०२३ ॥

बद्ध्वा वा निकृतिप्रज्ञं धार्तराष्ट्रं सुदुर्मतिम् ।

साध्विदं राज्यमद्यास्तु पाण्डवैरभिरक्षितम् ॥ ०२४ ॥

प्रसीद राजशार्दूल विनाशो दृश्यते महान् ।
पाण्डवानां कुरूणां च राज्ञां चामिततेजसाम् ॥ ०२५ ॥

विररामैवमुक्त्वा तु विदुरो दीनमानसः ।
प्रध्यायमानः स तदा निःश्वसंश्च पुनः पुनः ॥ ०२६ ॥

ततोऽथ राज्ञः सुबलस्य पुत्री ; धर्मार्थयुक्तं कुलनाशभीता ।
दुर्योधनं पापमतिं नृशंसं ; राज्ञां समक्षं सुतमाह कोपात् ॥ ०२७ ॥

ये पार्थिवा राजसभां प्रविष्टा ; ब्रह्मर्षयो ये च सभासदोऽन्ये ।
श्रृण्वन्तु वक्ष्यामि तवापराधं ; पापस्य सामात्यपरिच्छदस्य ॥ ०२८ ॥

राज्यं कुरूणामनुपूर्वभोग्यं ; क्रमागतो नः कुलधर्म एषः ।
त्वं पापबुद्धेऽतिनृशंसकर्म ;न्राज्यं कुरूणामनयाद्विहंसि ॥ ०२९ ॥

राज्ये स्थितो धृतराष्ट्रो मनीषी ; तस्यानुजो विदुरो दीर्घदर्शी ।
एतावतिक्रम्य कथं नृपत्वं ; दुर्योधन प्रार्थयसेऽद्य मोहात् ॥ ०३० ॥

राजा च क्षत्ता च महानुभावौ ; भीष्मे स्थिते परवन्तौ भवेताम् ।
अयं तु धर्मज्ञतया महात्मा ; न राज्यकामो नृवरो नदीजः ॥ ०३१ ॥

राज्यं तु पाण्डोरिदमप्रधृष्यं ; तस्याद्य पुत्राः प्रभवन्ति नान्ये ।
राज्यं तदेतन्निखिलं पाण्डवानां ; पैतामहं पुत्रपौत्रानुगामि ॥ ०३२ ॥

यद्वै ब्रूते कुरुमुख्यो महात्मा ; देवव्रतः सत्यसंधो मनीषी ।
सर्वं तदस्माभिरहत्य धर्मं ; ग्राह्यं स्वधर्मं परिपालयद्भिः ॥ ०३३ ॥

अनुज्ञया चाथ महाव्रतस्य ; ब्रूयान्नृपो यद्विदुरस्तथैव ।
कार्यं भवेत्तत्सुहृद्भिर्नियुज्य ; धर्मं पुरस्कृत्य सुदीर्घकालम् ॥ ०३४ ॥

न्यायागतं राज्यमिदं कुरूणां ; युधिष्ठिरः शास्तु वै धर्मपुत्रः ।
प्रचोदितो धृतराष्ट्रेण राज्ञा ; पुरस्कृतः शांतनवेन चैव ॥ ०३५ ॥

---

# अध्याय १४७

वासुदेव उवाच ॥

एवमुक्ते तु गान्धार्या धृतराष्ट्रो जनेश्वरः ।
दुर्योधनमुवाचेदं नृपमध्ये जनाधिप ॥ ००१ ॥

दुर्योधन निबोधेदं यत्त्वां वक्ष्यामि पुत्रक ।
तथा तत्कुरु भद्रं ते यद्यस्ति पितृगौरवम् ॥ ००२ ॥

सोमः प्रजापतिः पूर्वं कुरूणां वंशवर्धनः ।
सोमाद्बभूव षष्ठो वै ययातिर्नहुषात्मजः ॥ ००३ ॥

तस्य पुत्रा बभूवुश्च पञ्च राजर्षिसत्तमाः ।
तेषां यदुर्महातेजा ज्येष्ठः समभवत्प्रभुः ॥ ००४ ॥

पूरुर्यवीयांश्च ततो योऽस्माकं वंशवर्धनः ।
शर्मिष्ठायाः संप्रसूतो दुहितुर्वृषपर्वणः ॥ ००५ ॥

यदुश्च भरतश्रेष्ठ देवयान्याः सुतोऽभवत् ।
दौहित्रस्तात शुक्रस्य काव्यस्यामिततेजसः ॥ ००६ ॥

यादवानां कुलकरो बलवान्वीर्यसंमतः ।

अवमेने स तु क्षत्रं दर्पपूर्णः सुमन्दधीः ॥ ००७ ॥

न चातिष्ठत्पितुः शास्त्रे बलदर्पविमोहितः ।
अवमेने च पितरं भ्रातॄंश्चाप्यपराजितः ॥ ००८ ॥

पृथिव्यां चतुरन्तायां यदुरेवाभवद्बली ।
वशे कृत्वा स नृपतीनवसन्नागसाह्वये ॥ ००९ ॥

तं पिता परमक्रुद्धो ययातिर्नहुषात्मजः ।
शशाप पुत्रं गान्धारे राज्याच्च व्यपरोपयत् ॥ ०१० ॥

य चैनमन्ववर्तन्त भ्रातरो बलदर्पितम् ।
शशाप तानपि क्रुद्धो ययातिस्तनयानथ ॥ ०११ ॥

यवीयांसं ततः पूरुं पुत्रं स्ववशवर्तिनम् ।
राज्ये निवेशयामास विधेयं नृपसत्तमः ॥ ०१२ ॥

एवं ज्येष्ठोऽप्यथोत्सिक्तो न राज्यमभिजायते ।
यवीयांसोऽभिजायन्ते राज्यं वृद्धोपसेवया ॥ ०१३ ॥

तथैव सर्वधर्मज्ञः पितुर्मम पितामहः ।
प्रतीपः पृथिवीपालस्त्रिषु लोकेषु विश्रुतः ॥ ०१४ ॥

तस्य पार्थिवसिंहस्य राज्यं धर्मेण शासतः ।
त्रयः प्रजज्ञिरे पुत्रा देवकल्पा यशस्विनः ॥ ०१५ ॥

देवापिरभवज्ज्येष्ठो बाह्लीकस्तदनन्तरम् ।
तृतीयः शंतनुस्तात धृतिमान्मे पितामहः ॥ ०१६ ॥

देवापिस्तु महातेजास्त्वग्दोषी राजसत्तमः ।
धार्मिकः सत्यवादी च पितुः शुश्रूषणे रतः ॥ ०१७ ॥

पौरजानपदानां च संमतः साधुसत्कृतः ।
सर्वेषां बालवृद्धानां देवापिर्हृदयङ्गमः ॥ ०१८ ॥

प्राज्ञश्च सत्यसंधश्च सर्वभूतहिते रतः ।
वर्तमानः पितुः शास्त्रे ब्राह्मणानां तथैव च ॥ ०१९ ॥

बाह्लीकस्य प्रियो भ्राता शंतनोश्च महात्मनः ।
सौभ्रात्रं च परं तेषां सहितानां महात्मनाम् ॥ ०२० ॥

अथ कालस्य पर्याये वृद्धो नृपतिसत्तमः ।
संभारानभिषेकार्थं कारयामास शास्त्रतः ॥ ०२१ ॥

मङ्गलानि च सर्वाणि कारयामास चाभिभूः ॥ ०२१ ॥

तं ब्राह्मणाश्च वृद्धाश्च पौरजानपदैः सह ।
सर्वे निवारयामासुर्देवापेरभिषेचनम् ॥ ०२२ ॥

स तच्छ्रुत्वा तु नृपतिरभिषेकनिवारणम् ।
अश्रुकण्ठोऽभवद्राजा पर्यशोचत चात्मजम् ॥ ०२३ ॥

एवं वदान्यो धर्मज्ञः सत्यसंधश्च सोऽभवत् ।
प्रियः प्रजानामपि संस्त्वग्दोषेण प्रदूषितः ॥ ०२४ ॥

हीनाङ्गं पृथिवीपालं नाभिनन्दन्ति देवताः ।
इति कृत्वा नृपश्रेष्ठं प्रत्यषेधन्द्विजर्षभाः ॥ ०२५ ॥

ततः प्रव्यथितात्मासौ पुत्रशोकसमन्वितः ।
ममार तं मृतं दृष्ट्वा देवापिः संश्रितो वनम् ॥ ०२६ ॥

बाह्लीको मातुलकुले त्यक्त्वा राज्यं व्यवस्थितः ।

पितृभ्रातृन्परित्यज्य प्राप्तवान्पुरमृद्धिमत् ॥ ०२७ ॥

बाह्लीकेन त्वनुज्ञातः शंतनुर्लोकविश्रुतः ।
पितर्युपरते राजन्राजा राज्यमकारयत् ॥ ०२८ ॥

तथैवाहं मतिमता परिचिन्त्येह पाण्डुना ।
ज्येष्ठः प्रभ्रंशितो राज्याद्धीनाङ्ग इति भारत ॥ ०२९ ॥

पाण्डुस्तु राज्यं संप्राप्तः कनीयानपि सन्नृपः ।
विनाशे तस्य पुत्राणामिदं राज्यमरिंदम ॥ ०३० ॥

मय्यभागिनि राज्याय कथं त्वं राज्यमिच्छसि ॥ ०३० ॥

युधिष्ठिरो राजपुत्रो महात्मा ; न्यायागतं राज्यमिदं च तस्य ।
स कौरवस्यास्य जनस्य भर्ता ; प्रशासिता चैव महानुभावः ॥ ०३१ ॥

स सत्यसंधः सततप्रमत्तः ; शास्त्रे स्थितो बन्धुजनस्य साधुः ।
प्रियः प्रजानां सुहृदानुकम्पी ; जितेन्द्रियः साधुजनस्य भर्ता ॥ ०३२ ॥

क्षमा तितिक्षा दम आर्जवं च ; सत्यव्रतत्वं श्रुतमप्रमादः ।
भूतानुकम्पा ह्यनुशासनं च ; युधिष्ठिरे राजगुणाः समस्ताः ॥ ०३३ ॥

अराजपुत्रस्त्वमनार्यवृत्तो ; लुब्धस्तथा बन्धुषु पापबुद्धिः ।
क्रमागतं राज्यमिदं परेषां ; हर्तुं कथं शक्ष्यसि दुर्विनीतः ॥ ०३४ ॥

प्रयच्छ राज्यार्धमपेतमोहः ; सवाहनं त्वं सपरिच्छदं च ।
ततोऽवशेषं तव जीवितस्य ; सहानुजस्यैव भवेन्नरेन्द्र ॥ ०३५ ॥

# अध्याय १४८

वासुदेव उवाच ॥

एवमुक्ते तु भीष्मेण द्रोणेन विदुरेण च ।
गान्धार्या धृतराष्ट्रेण न च मन्दोऽन्वबुध्यत ॥ ००१ ॥

अवधूयोत्थितः क्रुद्धो रोषात्संरक्तलोचनः ।
अन्वद्रवन्त तं पश्चाद्राजानस्त्यक्तजीविताः ॥ ००२ ॥

अज्ञापयच्च राज्ञस्तान्पार्थिवान्दुष्टचेतसः ।
प्रयाध्वं वै कुरुक्षेत्रं पुष्योऽद्येति पुनः पुनः ॥ ००३ ॥

ततस्ते पृथिवीपालाः प्रययुः सहसैनिकाः ।
भीष्मं सेनापतिं कृत्वा संहृष्टाः कालचोदिताः ॥ ००४ ॥

अक्षौहिण्यो दशैका च पार्थिवानां समागताः ।
तासां प्रमुखतो भीष्मस्तालकेतुर्व्यरोचत ॥ ००५ ॥

यदत्र युक्तं प्राप्तं च तद्विधत्स्व विशां पते ॥ ००५ ॥

उक्तं भीष्मेण यद्वाक्यं द्रोणेन विदुरेण च ।
गान्धार्या धृतराष्ट्रेण समक्षं मम भारत ॥ ००६ ॥

एतत्ते कथितं राजन्यद्वृत्तं कुरुसंसदि ॥ ००६ ॥

साम आदौ प्रयुक्तं मे राजन्सौभ्रात्रमिच्छता ।
अभेदात्कुरुवंशस्य प्रजानां च विवृद्धये ॥ ००७ ॥

पुनर्भेदश्च मे युक्तो यदा साम न गृह्यते ।
कर्मानुकीर्तनं चैव देवमानुषसंहितम् ॥ ००८ ॥

यदा नाद्रियते वाक्यं सामपूर्वं सुयोधनः ।
तदा मया समानीय भेदिताः सर्वपार्थिवाः ॥ ००९ ॥

अद्भुतानि च घोराणि दारुणानि च भारत ।
अमानुषाणि कर्माणि दर्शितानि च मे विभो ॥ ०१० ॥

भर्त्सयित्वा तु राज्ञस्तांस्तृणीकृत्य सुयोधनम् ।
राधेयं भीषयित्वा च सौबलं च पुनः पुनः ॥ ०११ ॥

न्यूनतां धार्तराष्ट्राणां निन्दां चैव पुनः पुनः ।
भेदयित्वा नृपान्सर्वान्वाग्भिर्मन्त्रेण चासकृत् ॥ ०१२ ॥

पुनः सामाभिसंयुक्तं संप्रदानमथाब्रुवम् ।
अभेदात्कुरुवंशस्य कार्ययोगात्तथैव च ॥ ०१३ ॥

ते बाला धृतराष्ट्रस्य भीष्मस्य विदुरस्य च ।
तिष्ठेयुः पाण्डवाः सर्वे हित्वा मानमधश्चराः ॥ ०१४ ॥

प्रयच्छन्तु च ते राज्यमनीशास्ते भवन्तु च ।
यथाह राजा गाङ्गेयो विदुरश्च तथास्तु तत् ॥ ०१५ ॥

सर्वं भवतु ते राज्यं पञ्च ग्रामान्विसर्जय ।
अवश्यं भरणीया हि पितुस्ते राजसत्तम ॥ ०१६ ॥

एवमुक्तस्तु दुष्टात्मा नैव भावं व्यमुञ्चत ।
दण्डं चतुर्थं पश्यामि तेषु पापेषु नान्यथा ॥ ०१७ ॥

निर्याताश्च विनाशाय कुरुक्षेत्रं नराधिपाः ।
एतत्ते कथितं सर्वं यद्वृत्तं कुरुसंसदि ॥ ०१८ ॥

न ते राज्यं प्रयच्छन्ति विना युद्धेन पाण्डव ।
विनाशहेतवः सर्वे प्रत्युपस्थितमृत्यवः ॥ ०१९ ॥

---

# अध्याय १४९

वैशंपायन उवाच ॥

जनार्दनवचः श्रुत्वा धर्मराजो युधिष्ठिरः ।
भ्रातॄनुवाच धर्मात्मा समक्षं केशवस्य ह ॥ ००१ ॥

श्रुतं भवद्भिर्यद्वृत्तं सभायां कुरुसंसदि ।
केशवस्यापि यद्वाक्यं तत्सर्वमवधारितम् ॥ ००२ ॥

तस्मात्सेनाविभागं मे कुरुध्वं नरसत्तमाः ।
अक्षौहिण्यस्तु सप्तैताः समेता विजयाय वै ॥ ००३ ॥

तासां मे पतयः सप्त विख्यातास्तान्निबोधत ।
द्रुपदश्च विराटश्च धृष्टद्युम्नशिखण्डिनौ ॥ ००४ ॥

सात्यकिश्चेकितानश्च भीमसेनश्च वीर्यवान् ।
एते सेनाप्रणेतारो वीराः सर्वे तनुत्यजः ॥ ००५ ॥

सर्वे वेदविदः शूराः सर्वे सुचरितव्रताः ।
ह्रीमन्तो नीतिमन्तश्च सर्वे युद्धविशारदाः ॥ ००६ ॥

इष्वस्त्रकुशलाश्चैव तथा सर्वास्त्रयोधिनः ॥ ००६ ॥

सप्तानामपि यो नेता सेनानां प्रविभागवित् ।
यः सहेत रणे भीष्मं शरार्चिःपावकोपमम्  ॥ ००७  ॥

त्वं तावत्सहदेवात्र प्रब्रूहि कुरुनन्दन ।
स्वमतं पुरुषव्याघ्र को नः सेनापतिः क्षमः  ॥ ००८  ॥

सहदेव उवाच  ॥

संयुक्त एकदुःखश्च वीर्यवांश्च महीपतिः ।
यं समाश्रित्य धर्मज्ञं स्वमंशमनुयुञ्ज्महे  ॥ ००९  ॥

मत्स्यो विराटो बलवान्कृतास्त्रो युद्धदुर्मदः ।
प्रसहिष्यति सङ्ग्रामे भीष्मं तांश्च महारथान्  ॥ ०१०  ॥

वैशंपायन उवाच  ॥

तथोक्ते सहदेवेन वाक्ये वाक्यविशारदः ।
नकुलोऽनन्तरं तस्मादिदं वचनमाददे  ॥ ०११  ॥

वयसा शास्त्रतो धैर्यात्कुलेनाभिजनेन च ।
ह्रीमान्कुलान्वितः श्रीमान्सर्वशास्त्रविशारदः  ॥ ०१२  ॥

वेद चास्त्रं भरद्वाजाद्दुर्धर्षः सत्यसङ्गरः ।
यो नित्यं स्पर्धते द्रोणं भीष्मं चैव महाबलम्  ॥ ०१३  ॥

श्लाघ्यः पार्थिवसंघस्य प्रमुखे वाहिनीपतिः ।
पुत्रपौत्रैः परिवृतः शतशाख इव द्रुमः  ॥ ०१४  ॥

यस्तताप तपो घोरं सदारः पृथिवीपतिः ।
रोषाद्द्रोणविनाशाय वीरः समितिशोभनः  ॥ ०१५  ॥

पितेवास्मान्समाधत्ते यः सदा पार्थिवर्षभः ।
श्वशुरो द्रुपदोऽस्माकं सेनामग्रे प्रकर्षतु ॥ ०१६ ॥

स द्रोणभीष्मावायान्तौ सहेदिति मतिर्मम ।
स हि दिव्यास्त्रविद्राजा सखा चाङ्गिरसो नृपः ॥ ०१७ ॥

माद्रीसुताभ्यामुक्ते तु स्वमते कुरुनन्दनः ।
वासविर्वासवसमः सव्यसाच्यब्रवीद्वचः ॥ ०१८ ॥

योऽयं तपःप्रभावेन ऋषिसंतोषणेन च ।
दिव्यः पुरुष उत्पन्नो ज्वालावर्णो महाबलः ॥ ०१९ ॥

धनुष्मान्कवची खड्गी रथमारुह्य दंशितः ।
दिव्यैर्हयवरैर्युक्तमग्निकुण्डात्समुत्थितः ॥ ०२० ॥

गर्जन्निव महामेघो रथघोषेण वीर्यवान् ।
सिंहसंहननो वीरः सिंहविक्रान्तविक्रमः ॥ ०२१ ॥

सिंहोरस्को महाबाहुः सिंहवक्षा महाबलः ।
सिंहप्रगर्जनो वीरः सिंहस्कन्धो महाद्युतिः ॥ ०२२ ॥

सुभ्रूः सुदंष्ट्रः सुहनुः सुबाहुः सुमुखोऽकृशः ।
सुजत्रुः सुविशालाक्षः सुपादः सुप्रतिष्ठितः ॥ ०२३ ॥

अभेद्यः सर्वशस्त्राणां प्रभिन्न इव वारणः ।
जज्ञे द्रोणविनाशाय सत्यवादी जितेन्द्रियः ॥ ०२४ ॥

धृष्टद्युम्नमहं मन्ये सहेद्भीष्मस्य सायकान् ।
वज्राशनिसमस्पर्शान्दीप्तास्यानुरगानिव ॥ ०२५ ॥

यमदूतसमान्वेगे निपाते पावकोपमान् ।

रामेणाजौ विषहितान्वज्रनिष्पेषदारुणान्  ॥ ०२६  ॥

पुरुषं तं न पश्यामि यः सहेत महाव्रतम् ।
धृष्टद्युम्नमृते राजन्निति मे धीयते मतिः  ॥ ०२७  ॥

क्षिप्रहस्तश्चित्रयोधी मतः सेनापतिर्मम ।
अभेद्यकवचः श्रीमान्मातङ्ग इव यूथपः  ॥ ०२८  ॥

भीम उवाच  ॥

वधार्थं यः समुत्पन्नः शिखण्डी द्रुपदात्मजः ।
वदन्ति सिद्धा राजेन्द्र ऋषयश्च समागताः  ॥ ०२९  ॥

यस्य सङ्ग्राममध्येषु दिव्यमस्त्रं विकुर्वतः ।
रूपं द्रक्ष्यन्ति पुरुषा रामस्येव महात्मनः  ॥ ०३०  ॥

न तं युद्धेषु पश्यामि यो विभिन्द्याच्छिखण्डिनम् ।
शस्त्रेण समरे राजन्संनद्धं स्यन्दने स्थितम्  ॥ ०३१  ॥

द्वैरथे विषहेन्नान्यो भीष्मं राजन्महाव्रतम् ।
शिखण्डिनमृते वीरं स मे सेनापतिर्मतः  ॥ ०३२  ॥

युधिष्ठिर उवाच  ॥

सर्वस्य जगतस्तात सारासारं बलाबलम् ।
सर्वं जानाति धर्मात्मा गतमेष्यच्च केशवः  ॥ ०३३  ॥

यमाह कृष्णो दाशार्हः सोऽस्तु नो वाहिनीपतिः ।
कृतास्त्रो ह्यकृतास्त्रो वा वृद्धो वा यदि वा युवा  ॥ ०३४  ॥

एष नो विजये मूलमेष तात विपर्यये ।

अत्र प्राणाश्च राज्यं च भावाभावौ सुखासुखे ॥ ०३५ ॥

एष धाता विधाता च सिद्धिरत्र प्रतिष्ठिता ।
यमाह कृष्णो दाशार्हः स नः सेनापतिः क्षमः ॥ ०३६ ॥

ब्रवीतु वदतां श्रेष्ठो निशा समतिवर्तते ॥ ०३६ ॥

ततः सेनापतिं कृत्वा कृष्णस्य वशवर्तिनम् ।
रात्रिशेषे व्यतिक्रान्ते प्रयास्यामो रणाजिरम् ॥ ०३७ ॥

अधिवासितशस्त्राश्च कृतकौतुकमङ्गलाः ॥ ०३७ ॥

वैशंपायन उवाच ॥

तस्य तद्वचनं श्रुत्वा धर्मराजस्य धीमतः ।
अब्रवीत्पुण्डरीकाक्षो धनञ्जयमवेक्ष्य ह ॥ ०३८ ॥

ममाप्येते महाराज भवद्भिर्य उदाहृताः ।
नेतारस्तव सेनायाः शूरा विक्रान्तयोधिनः ॥ ०३९ ॥

सर्व एते समर्था हि तव शत्रून्प्रमर्दितुम् ॥ ०३९ ॥

इन्द्रस्यापि भयं ह्येते जनयेयुर्महाहवे ।
किं पुनर्धार्तराष्ट्राणां लुब्धानां पापचेतसाम् ॥ ०४० ॥

मयापि हि महाबाहो त्वत्प्रियार्थमरिंदम ।
कृतो यत्नो महांस्तत्र शमः स्यादिति भारत ॥ ०४१ ॥

धर्मस्य गतमानृण्यं न स्म वाच्या विवक्षताम् ॥ ०४१ ॥

कृतार्थं मन्यते बालः सोऽऽत्मानमविचक्षणः ।

धार्तराष्ट्रो बलस्थं च मन्यतेऽऽत्मानमातुरः ॥ ०४२ ॥

युज्यतां वाहिनी साधु वधसाध्या हि ते मताः ।
न धार्तराष्ट्राः शक्ष्यन्ति स्थातुं दृष्ट्वा धनञ्जयम् ॥ ०४३ ॥

भीमसेनं च सङ्क्रुद्धं यमौ चापि यमोपमौ ।
युयुधानद्वितीयं च धृष्टद्युम्नममर्षणम् ॥ ०४४ ॥

अभिमन्युं द्रौपदेयान्विराटद्रुपदावपि ।
अक्षौहिणीपतींश्चान्यान्नरेन्द्रान्दृढविक्रमान् ॥ ०४५ ॥

सारवद्बलमस्माकं दुष्प्रधर्षं दुरासदम् ।
धार्तराष्ट्रबलं संख्ये वधिष्यति न संशयः ॥ ०४६ ॥

एवमुक्ते तु कृष्णेन संप्रहृष्यन्नरोत्तमाः ।
तेषां प्रहृष्टमनसां नादः समभवन्महान् ॥ ०४७ ॥

योग इत्यथ सैन्यानां त्वरतां संप्रधावताम् ।
हयवारणशब्दश्च नेमिघोषश्च सर्वशः ॥ ०४८ ॥

शङ्खदुन्दुभिनिर्घोषस्तुमुलः सर्वतोऽभवत् ॥ ०४८ ॥

प्रयास्यतां पाण्डवानां ससैन्यानां समन्ततः ।
गङ्गेव पूर्णा दुर्धर्षा समदृश्यत वाहिनी ॥ ०४९ ॥

अग्रानीके भीमसेनो माद्रीपुत्रौ च दंशितौ ।
सौभद्रो द्रौपदेयाश्च धृष्टद्युम्नश्च पार्षतः ॥ ०५० ॥

प्रभद्रकाश्च पाञ्चाला भीमसेनमुखा ययुः ॥ ०५० ॥

ततः शब्दः समभवत्समुद्रस्येव पर्वणि ।

हृष्टानां संप्रयातानां घोषो दिवमिवास्पृशत्  ॥ ०५१  ॥

प्रहृष्टा दंशिता योधाः परानीकविदारणाः ।
तेषां मध्ये ययौ राजा कुन्तीपुत्रो युधिष्ठिरः  ॥ ०५२  ॥

शकटापणवेशाश्च यानयुग्यं च सर्वशः ।
कोशयन्त्रायुधं चैव ये च वैद्याश्चिकित्सकाः  ॥ ०५३  ॥

फल्गु यच्च बलं किञ्चित्तथैव कृशदुर्बलम् ।
तत्सङ्गृह्य ययौ राजा ये चापि परिचारकाः  ॥ ०५४  ॥

उपप्लव्ये तु पाञ्चाली द्रौपदी सत्यवादिनी ।
सह स्त्रीभिर्निववृते दासीदाससमावृता  ॥ ०५५  ॥

कृत्वा मूलप्रतीकारान्गुल्मैः स्थावरजङ्गमैः ।
स्कन्धावारेण महता प्रययुः पाण्डुनन्दनाः  ॥ ०५६  ॥

ददतो गां हिरण्यं च ब्राह्मणैरभिसंवृताः ।
स्तूयमाना ययू राजन्रथैर्मणिविभूषितैः  ॥ ०५७  ॥

केकया धृष्टकेतुश्च पुत्रः काश्यस्य चाभिभूः ।
श्रेणिमान्वसुदानश्च शिखण्डी चापराजितः  ॥ ०५८  ॥

हृष्टास्तुष्टाः कवचिनः सशस्त्राः समलङ्कृताः ।
राजानमन्वयुः सर्वे परिवार्य युधिष्ठिरम्  ॥ ०५९  ॥

जघनार्धे विराटश्च यज्ञसेनश्च सोमकिः ।
सुधर्मा कुन्तिभोजश्च धृष्टद्युम्नस्य चात्मजाः  ॥ ०६०  ॥

रथायुतानि चत्वारि हयाः पञ्चगुणास्ततः ।
पत्तिसैन्यं दशगुणं सादिनामयुतानि षट्  ॥ ०६१  ॥

अनाधृष्टिश्चेकितानश्चेदिराजोऽथ सात्यकिः ।
परिवार्य ययुः सर्वे वासुदेवधनञ्जयौ ॥ ०६२ ॥

आसाद्य तु कुरुक्षेत्रं व्यूढानीकाः प्रहारिणः ।
पाण्डवाः समदृश्यन्त नर्दन्तो वृषभा इव ॥ ०६३ ॥

तेऽवगाह्य कुरुक्षेत्रं शङ्खान्दध्मुररिंदमाः ।
तथैव दध्मतुः शङ्खौ वासुदेवधनञ्जयौ ॥ ०६४ ॥

पाञ्चजन्यस्य निर्घोषं विस्फूर्जितमिवाशनेः ।
निशम्य सर्वसैन्यानि समहृष्यन्त सर्वशः ॥ ०६५ ॥

शङ्खदुन्दुभिसंसृष्टः सिंहनादस्तरस्विनाम् ।
पृथिवीं चान्तरिक्षं च सागरांश्चान्वनादयत् ॥ ०६६ ॥

ततो देशे समे स्निग्धे प्रभूतयवसेन्धने ।
निवेशयामास तदा सेनां राजा युधिष्ठिरः ॥ ०६७ ॥

परिहृत्य श्मशानानि देवतायतनानि च ।
आश्रमांश्च महर्षीणां तीर्थान्यायतनानि च ॥ ०६८ ॥

मधुरानूषरे देशे शिवे पुण्ये महीपतिः ।
निवेशं कारयामास कुन्तीपुत्रो युधिष्ठिरः ॥ ०६९ ॥

ततश्च पुनरुत्थाय सुखी विश्रान्तवाहनः ।
प्रययौ पृथिवीपालैर्वृतः शतसहस्रशः ॥ ०७० ॥

विद्राव्य शतशो गुल्मान्धार्तराष्ट्रस्य सैनिकान् ।
पर्यक्रामत्समन्ताच्च पार्थेन सह केशवः ॥ ०७१ ॥

शिबिरं मापयामास धृष्टद्युम्नश्च पार्षतः ।
सात्यकिश्च रथोदारो युयुधानः प्रतापवान् ॥ ०७२ ॥

आसाद्य सरितं पुण्यां कुरुक्षेत्रे हिरण्वतीम् ।
सूपतीर्थां शुचिजलां शर्करापङ्कवर्जिताम् ॥ ०७३ ॥

खानयामास परिखां केशवस्तत्र भारत ।
गुप्त्यर्थमपि चादिश्य बलं तत्र न्यवेशयत् ॥ ०७४ ॥

विधिर्यः शिबिरस्यासीत्पाण्डवानां महात्मनाम् ।
तद्विधानि नरेन्द्राणां कारयामास केशवः ॥ ०७५ ॥

प्रभूतजलकाष्ठानि दुराधर्षतराणि च ।
भक्ष्यभोज्योपपन्नानि शतशोऽथ सहस्रशः ॥ ०७६ ॥

शिबिराणि महार्हाणि राज्ञां तत्र पृथक्पृथक् ।
विमानानीव राजेन्द्र निविष्टानि महीतले ॥ ०७७ ॥

तत्रासञ्शिल्पिनः प्राज्ञाः शतशो दत्तवेतनाः ।
सर्वोपकरणैर्युक्ता वैद्याश्च सुविशारदाः ॥ ०७८ ॥

ज्याधनुर्वर्मशस्त्राणां तथैव मधुसर्पिषोः ।
ससर्ज रसपांसूनां राशयः पर्वतोपमाः ॥ ०७९ ॥

बहूदकं सुयवसं तुषाङ्गारसमन्वितम् ।
शिबिरे शिबिरे राजा सञ्चकार युधिष्ठिरः ॥ ०८० ॥

महायन्त्राणि नाराचास्तोमरर्ष्टिपरश्वधाः ।
धनूंषि कवचादीनि हृद्यभूवन्नृणां तदा ॥ ०८१ ॥

गजाः कङ्कटसंनाहा लोहवर्मोत्तरच्छदाः ।

अदृश्यंस्तत्र गिर्याभाः सहस्रशतयोधिनः  ॥ ०८२  ॥

निविष्टान्पाण्डवांस्तत्र ज्ञात्वा मित्राणि भारत ।
अभिसस्रुर्यथोद्देशं सबलाः सहवाहनाः  ॥ ०८३  ॥

चरितब्रह्मचर्यास्ते सोमपा भूरिदक्षिणाः ।
जयाय पाण्डुपुत्राणां समाजग्मुर्महीक्षितः  ॥ ०८४  ॥

---

# अध्याय १५०

जनमेजय उवाच  ॥

युधिष्ठिरं सहानीकमुपयान्तं युयुत्सया ।
संनिविष्टं कुरुक्षेत्रे वासुदेवेन पालितम्  ॥ ००१  ॥

विराटद्रुपदाभ्यां च सपुत्राभ्यां समन्वितम् ।
केकयैर्वृष्णिभिश्चैव पार्थिवैः शतशो वृतम्  ॥ ००२  ॥

महेन्द्रमिव चादित्यैरभिगुप्तं महारथैः ।
श्रुत्वा दुर्योधनो राजा किं कार्यं प्रत्यपद्यत  ॥ ००३  ॥

एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
संभ्रमे तुमुले तस्मिन्यदासीत्कुरुजाङ्गले  ॥ ००४  ॥

व्यथयेयुर्हि देवानां सेनामपि समागमे ।
पाण्डवा वासुदेवश्च विराटद्रुपदौ तथा  ॥ ००५  ॥

धृष्टद्युम्नश्च पाञ्चाल्यः शिखण्डी च महारथः ।
युयुधानश्च विक्रान्तो देवैरपि दुरासदः ॥ ००६ ॥

एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
कुरूणां पाण्डवानां च यद्यदासीद्विचेष्टितम् ॥ ००७ ॥

वैशंपायन उवाच ॥

प्रतियाते तु दाशार्हे राजा दुर्योधनस्तदा ।
कर्णं दुःशासनं चैव शकुनिं चाब्रवीदिदम् ॥ ००८ ॥

अकृतेनैव कार्येण गतः पार्थानधोक्षजः ।
स एनान्मन्युनाविष्टो ध्रुवं वक्ष्यत्यसंशयम् ॥ ००९ ॥

इष्टो हि वासुदेवस्य पाण्डवैर्मम विग्रहः ।
भीमसेनार्जुनौ चैव दाशार्हस्य मते स्थितौ ॥ ०१० ॥

अजातशत्रुरप्यद्य भीमार्जुनवशानुगः ।
निकृतश्च मया पूर्वं सह सर्वैः सहोदरैः ॥ ०११ ॥

विराटद्रुपदौ चैव कृतवैरौ मया सह ।
तौ च सेनाप्रणेतारौ वासुदेववशानुगौ ॥ ०१२ ॥

भविता विग्रहः सोऽयं तुमुलो लोमहर्षणः ।
तस्मात्साङ्ग्रामिकं सर्वं कारयध्वमतन्द्रिताः ॥ ०१३ ॥

शिबिराणि कुरुक्षेत्रे क्रियन्तां वसुधाधिपाः ।
सुपर्याप्तावकाशानि दुरादेयानि शत्रुभिः ॥ ०१४ ॥

आसन्नजलकाष्ठानि शतशोऽथ सहस्रशः ।
अच्छेद्याहारमार्गाणि रत्नोच्चयचितानि च ॥ ०१५ ॥

विविधायुधपूर्णानि पताकाध्वजवन्ति च ॥ ०१५ ॥

समाश्च तेषां पन्थानः क्रियन्तां नगराद्बहिः ।
प्रयाणं घुष्यतामद्य श्वोभूत इति माचिरम् ॥ ०१६ ॥

ते तथेति प्रतिज्ञाय श्वोभूते चक्रिरे तथा ।
हृष्टरूपा महात्मानो विनाशाय महीक्षिताम् ॥ ०१७ ॥

ततस्ते पार्थिवाः सर्वे तच्छ्रुत्वा राजशासनम् ।
आसनेभ्यो महार्हेभ्य उदतिष्ठन्नमर्षिताः ॥ ०१८ ॥

बाहून्परिघसङ्काशान्संस्पृशन्तः शनैः शनैः ।
काञ्चनाङ्गददीप्तांश्च चन्दनागरुभूषितान् ॥ ०१९ ॥

उष्णीषाणि नियच्छन्तः पुण्डरीकनिभैः करैः ।
अन्तरीयोत्तरीयाणि भूषणानि च सर्वशः ॥ ०२० ॥

ते रथान्रथिनः श्रेष्ठा हयांश्च हयकोविदाः ।
सज्जयन्ति स्म नागांश्च नागशिक्षासु निष्ठिताः ॥ ०२१ ॥

अथ वर्माणि चित्राणि काञ्चनानि बहूनि च ।
विविधानि च शस्त्राणि चक्रुः सज्जानि सर्वशः ॥ ०२२ ॥

पदातयश्च पुरुषाः शस्त्राणि विविधानि च ।
उपजह्रुः शरीरेषु हेमचित्राण्यनेकशः ॥ ०२३ ॥

तदुत्सव इवोदग्रं संप्रहृष्टनरावृतम् ।
नगरं धार्तराष्ट्रस्य भारतासीत्समाकुलम् ॥ ०२४ ॥

जनौघसलिलावर्तो रथनागाश्वमीनवान् ।

शङ्खदुन्दुभिनिर्घोषः कोशसञ्चयरत्नवान् ॥ ०२५ ॥

चित्राभरणवर्मोर्मिः शस्त्रनिर्मलफेनवान् ।
प्रासादमालाद्रिवृतो रथ्यापणमहाह्रदः ॥ ०२६ ॥

योधचन्द्रोदयोद्भूतः कुरुराजमहार्णवः ।
अदृश्यत तदा राजंश्चन्द्रोदय इवार्णवः ॥ ०२७ ॥

---

# अध्याय १५१

वैशंपायन उवाच ॥

वासुदेवस्य तद्वाक्यमनुस्मृत्य युधिष्ठिरः ।
पुनः पप्रच्छ वार्ष्णेयं कथं मन्दोऽब्रवीदिदम् ॥ ००१ ॥

अस्मिन्नभ्यागते काले किं च नः क्षममच्युत ।
कथं च वर्तमाना वै स्वधर्मान्न च्यवेमहि ॥ ००२ ॥

दुर्योधनस्य कर्णस्य शकुनेः सौबलस्य च ।
वासुदेव मतज्ञोऽसि मम सभ्रातृकस्य च ॥ ००३ ॥

विदुरस्यापि ते वाक्यं श्रुतं भीष्मस्य चोभयोः ।
कुन्त्याश्च विपुलप्रज्ञ प्रज्ञा कार्त्स्न्येन ते श्रुता ॥ ००४ ॥

सर्वमेतदतिक्रम्य विचार्य च पुनः पुनः ।
यन्नः क्षमं महाबाहो तद्ब्रवीह्यविचारयन् ॥ ००५ ॥

श्रुत्वैतद्धर्मराजस्य धर्मार्थसहितं वचः ।
मेघदुन्दुभिनिर्घोषः कृष्णो वचनमब्रवीत्  ॥ ००६  ॥

उक्तवानस्मि यद्वाक्यं धर्मार्थसहितं हितम् ।
न तु तन्निकृतिप्रज्ञे कौरव्ये प्रतितिष्ठति  ॥ ००७  ॥

न च भीष्मस्य दुर्मेधाः शृणोति विदुरस्य वा ।
मम वा भाषितं किञ्चित्सर्वमेवातिवर्तते  ॥ ००८  ॥

न स कामयते धर्मं न स कामयते यशः ।
जितं स मन्यते सर्वं दुरात्मा कर्णमाश्रितः  ॥ ००९  ॥

बन्धमाज्ञापयामास मम चापि सुयोधनः ।
न च तं लब्धवान्कामं दुरात्मा शासनातिगः  ॥ ०१०  ॥

न च भीष्मो न च द्रोणो युक्तं तत्राहतुर्वचः ।
सर्वे तमनुवर्तन्ते ऋते विदुरमच्युत  ॥ ०११  ॥

शकुनिः सौबलश्चैव कर्णदुःशासनावपि ।
त्वय्ययुक्तान्यभाषन्त मूढा मूढममर्षणम्  ॥ ०१२  ॥

किं च तेन मयोक्तेन यान्यभाषन्त कौरवाः ।
सङ्क्षेपेण दुरात्मासौ न युक्तं त्वयि वर्तते  ॥ ०१३  ॥

न पार्थिवेषु सर्वेषु य इमे तव सैनिकाः ।
यत्पापं यन्न कल्याणं सर्वं तस्मिन्प्रतिष्ठितम्  ॥ ०१४  ॥

न चापि वयमत्यर्थं परित्यागेन कर्हिचित् ।
कौरवैः शममिच्छामस्तत्र युद्धमनन्तरम्  ॥ ०१५  ॥

तच्छ्रुत्वा पार्थिवाः सर्वे वासुदेवस्य भाषितम् ।

अब्रुवन्तो मुखं राज्ञः समुदैक्षन्त भारत ॥ ०१६ ॥

युधिष्ठिरस्त्वभिप्रायमुपलभ्य महीक्षिताम् ।
योगमाज्ञापयामास भीमार्जुनयमैः सह ॥ ०१७ ॥

ततः किलकिलाभूतमनीकं पाण्डवस्य ह ।
आज्ञापिते तदा योगे समहृष्यन्त सैनिकाः ॥ ०१८ ॥

अवध्यानां वधं पश्यन्धर्मराजो युधिष्ठिरः ।
निष्टनन्भीमसेनं च विजयं चेदमब्रवीत् ॥ ०१९ ॥

यदर्थं वनवासश्च प्राप्तं दुःखं च यन्मया ।
सोऽयमस्मानुपैत्येव परोऽनर्थः प्रयत्नतः ॥ ०२० ॥

यस्मिन्यत्नः कृतोऽस्माभिः स नो हीनः प्रयत्नतः ।
अकृते तु प्रयत्नेऽस्मानुपावृत्तः कलिर्महान् ॥ ०२१ ॥

कथं ह्यवध्यैः सङ्ग्रामः कार्यः सह भविष्यति ।
कथं हत्वा गुरून्वृद्धान्विजयो नो भविष्यति ॥ ०२२ ॥

तच्छ्रुत्वा धर्मराजस्य सव्यसाची परंतपः ।
यदुक्तं वासुदेवेन श्रावयामास तद्वचः ॥ ०२३ ॥

उक्तवान्देवकीपुत्रः कुन्त्याश्च विदुरस्य च ।
वचनं तत्त्वया राजन्निखिलेनावधारितम् ॥ ०२४ ॥

न च तौ वक्ष्यतोऽधर्ममिति मे नैष्ठिकी मतिः ।
न चापि युक्तं कौन्तेय निवर्तितुमयुध्यतः ॥ ०२५ ॥

तच्छ्रुत्वा वासुदेवोऽपि सव्यसाचिवचस्तदा ।
स्मयमानोऽब्रवीत्पार्थमेवमेतदिति ब्रुवन् ॥ ०२६ ॥

ततस्ते धृतसङ्कल्पा युद्धाय सहसैनिकाः ।
पाण्डवेया महाराज तां रात्रिं सुखमावसन् ॥ ०२७ ॥

---

# अध्याय १५२

वैशंपायन उवाच ॥

व्युषितायां रजन्यां तु राजा दुर्योधनस्ततः ।
व्यभजत्तान्यनीकानि दश चैकं च भारत ॥ ००१ ॥

नरहस्तिरथाश्वानां सारं मध्यं च फल्गु च ।
सर्वेष्वेतेष्वनीकेषु संदिदेश महीपतिः ॥ ००२ ॥

सानुकर्षाः सतूणीराः सवरूथाः सतोमराः ।
सोपासङ्गाः सशक्तीकाः सनिषङ्गाः सपोथिकाः ॥ ००३ ॥

सध्वजाः सपताकाश्च सशरासनतोमराः ।
रज्जुभिश्च विचित्राभिः सपाशाः सपरिस्तराः ॥ ००४ ॥

सकचग्रहविक्षेपाः सतैलगुडवालुकाः ।
साशीविषघटाः सर्वे ससर्जरसपांसवः ॥ ००५ ॥

सघण्टाफलकाः सर्वे वासीवृक्षादनान्विताः ।
व्याघ्रचर्मपरीवारा वृताश्च द्वीपिचर्मभिः ॥ ००६ ॥

सवस्तयः सशृङ्गाश्च सप्रासविविधायुधाः ।

सकुठाराः सकुद्दालाः सतैलक्षौमसर्पिषः ॥ ००७ ॥

चित्रानीकाः सुवपुषो ज्वलिता इव पावकाः ।
तथा कवचिनः शूराः शस्त्रेषु कृतनिश्रमाः ॥ ००८ ॥

कुलीना हययोनिज्ञाः सारथ्ये विनिवेशिताः ।
बद्धारिष्टा बद्धकक्ष्या बद्धध्वजपताकिनः ॥ ००९ ॥

चतुर्युजो रथाः सर्वे सर्वे शस्त्रसमायुताः ।
संहृष्टवाहनाः सर्वे सर्वे शतशरासनाः ॥ ०१० ॥

धुर्ययोर्हययोरेकस्तथान्यौ पार्ष्णिसारथी ।
तौ चापि रथिनां श्रेष्ठौ रथी च हयवित्तथा ॥ ०११ ॥

नगराणीव गुप्तानि दुरादेयानि शत्रुभिः ।
आसन्रथसहस्राणि हेममालीनि सर्वशः ॥ ०१२ ॥

यथा रथास्तथा नागा बद्धकक्ष्याः स्वलङ्कृताः ।
बभूवुः सप्त पुरुषा रत्नवन्त इवाद्रयः ॥ ०१३ ॥

द्वावङ्कुशधरौ तेषु द्वावुत्तमधनुर्धरौ ।
द्वौ वरासिधरौ राजन्नेकः शक्तिपताकधृक् ॥ ०१४ ॥

गजैर्मत्तैः समाकीर्णं सवर्मायुधकोशकैः ।
तद्बभूव बलं राजन्कौरव्यस्य सहस्रशः ॥ ०१५ ॥

विचित्रकवचामुक्तैः सपताकैः स्वलङ्कृतैः ।
सादिभिश्चोपसंपन्ना आसन्नयुतशो हयाः ॥ ०१६ ॥

सुसङ्ग्राहाः सुसंतोषा हेमभाण्डपरिच्छदाः ।
अनेकशतसाहस्रास्ते च सादिवशे स्थिताः ॥ ०१७ ॥

नानारूपविकाराश्च नानाकवचशस्त्रिणः ।
पदातिनो नरास्तत्र बभूवुर्हेममालिनः ॥ ०१८ ॥

रथस्यासन्दश गजा गजस्य दश वाजिनः ।
नरा दश हयस्यासन्पादरक्षाः समन्ततः ॥ ०१९ ॥

रथस्य नागाः पञ्चाशन्नागस्यासञ्शतं हयाः ।
हयस्य पुरुषाः सप्त भिन्नसंधानकारिणः ॥ ०२० ॥

सेना पञ्चशतं नागा रथास्तावन्त एव च ।
दशसेना च पृतना पृतना दशवाहिनी ॥ ०२१ ॥

वाहिनी पृतना सेना ध्वजिनी सादिनी चमूः ।
अक्षौहिणीति पर्यायैर्निरुक्ताथ वरूथिनी ॥ ०२२ ॥

एवं व्यूढान्यनीकानि कौरवेयेण धीमता ॥ ०२२ ॥

अक्षौहिण्यो दशैका च संख्याताः सप्त चैव ह ।
अक्षौहिण्यस्तु सप्तैव पाण्डवानामभूद्बलम् ॥ ०२३ ॥

अक्षौहिण्यो दशैका च कौरवाणामभूद्बलम् ॥ ०२३ ॥

नराणां पञ्चपञ्चाशदेषा पत्तिर्विधीयते ।
सेनामुखं च तिस्रस्ता गुल्म इत्यभिसञ्ज्ञितः ॥ ०२४ ॥

दश गुल्मा गणस्त्वासीद्गणास्त्वयुतशोऽभवन् ।
दुर्योधनस्य सेनासु योत्स्यमानाः प्रहारिणः ॥ ०२५ ॥

तत्र दुर्योधनो राजा शूरान्बुद्धिमतो नरान् ।
प्रसमीक्ष्य महाबाहुश्चक्रे सेनापतींस्तदा ॥ ०२६ ॥

पृथगक्षौहिणीनां च प्रणेतॄन्नरसत्तमान् ।
विधिपूर्वं समानीय पार्थिवानभ्यषेचयत्  ॥ ०२७  ॥

कृपं द्रोणं च शल्यं च सैन्धवं च महारथम् ।
सुदक्षिणं च काम्बोजं कृतवर्माणमेव च  ॥ ०२८  ॥

द्रोणपुत्रं च कर्णं च भूरिश्रवसमेव च ।
शकुनिं सौबलं चैव बाह्लीकं च महारथम्  ॥ ०२९  ॥

दिवसे दिवसे तेषां प्रतिवेलं च भारत ।
चक्रे स विविधाः सञ्ज्ञाः प्रत्यक्षं च पुनः पुनः  ॥ ०३०  ॥

तथा विनियताः सर्वे ये च तेषां पदानुगाः ।
बभूवुः सैनिका राजन्राज्ञः प्रियचिकीर्षवः  ॥ ०३१  ॥

---

# भीष्माभिषेचनपर्व

## अध्याय १५३

वैशंपायन उवाच  ॥

ततः शांतनवं भीष्मं प्राञ्जलिर्धृतराष्ट्रजः ।
सह सर्वैर्महीपालैरिदं वचनमब्रवीत्  ॥ ००१  ॥

ऋते सेनाप्रणेतारं पृतना सुमहत्यपि ।
दीर्यते युद्धमासाद्य पिपीलिकपुटं यथा  ॥ ००२  ॥

न हि जातु द्वयोर्बुद्धिः समा भवति कर्हिचित् ।
शौर्यं च नाम नेतॄणां स्पर्धते च परस्परम् ॥ ००३ ॥

श्रूयते च महाप्राज्ञ हैहयानमितौजसः ।
अभ्ययुर्ब्राह्मणाः सर्वे समुच्छ्रितकुशध्वजाः ॥ ००४ ॥

तानन्वयुस्तदा वैश्याः शूद्राश्चैव पितामह ।
एकतस्तु त्रयो वर्णा एकतः क्षत्रियर्षभाः ॥ ००५ ॥

ते स्म युद्धेष्वभज्यन्त त्रयो वर्णाः पुनः पुनः ।
क्षत्रियास्तु जयन्त्येव बहुलं चैकतो बलम् ॥ ००६ ॥

ततस्ते क्षत्रियानेव पप्रच्छुर्द्विजसत्तमाः ।
तेभ्यः शशंसुर्धर्मज्ञा याथातथ्यं पितामह ॥ ००७ ॥

वयमेकस्य शृणुमो महाबुद्धिमतो रणे ।
भवन्तस्तु पृथक्सर्वे स्वबुद्धिवशवर्तिनः ॥ ००८ ॥

ततस्ते ब्राह्मणाश्चक्रुरेकं सेनापतिं द्विजम् ।
नयेषु कुशलं शूरमजयन्क्षत्रियांस्ततः ॥ ००९ ॥

एवं ये कुशलं शूरं हिते स्थितमकल्मषम् ।
सेनापतिं प्रकुर्वन्ति ते जयन्ति रणे रिपून् ॥ ०१० ॥

भवानुशनसा तुल्यो हितैषी च सदा मम ।
असंहार्यः स्थितो धर्मे स नः सेनापतिर्भव ॥ ०११ ॥

रश्मीवतामिवादित्यो वीरुधामिव चन्द्रमाः ।
कुबेर इव यक्षाणां मरुतामिव वासवः ॥ ०१२ ॥

पर्वतानां यथा मेरुः सुपर्णः पततामिव ।
कुमार इव भूतानां वसूनामिव हव्यवाट्  ॥ ०१३  ॥

भवता हि वयं गुप्ताः शक्रेणेव दिवौकसः ।
अनाधृष्या भविष्यामस्त्रिदशानामपि ध्रुवम्  ॥ ०१४  ॥

प्रयातु नो भवानग्रे देवानामिव पावकिः ।
वयं त्वामनुयास्यामः सौरभेया इवर्षभम्  ॥ ०१५  ॥

भीष्म उवाच  ॥

एवमेतन्महाबाहो यथा वदसि भारत ।
यथैव हि भवन्तो मे तथैव मम पाण्डवाः  ॥ ०१६  ॥

अपि चैव मय श्रेयो वाच्यं तेषां नराधिप ।
योद्धव्यं तु तवार्थाय यथा स समयः कृतः  ॥ ०१७  ॥

न तु पश्यामि योद्धारमात्मनः सदृशं भुवि ।
ऋते तस्मान्नरव्याघ्रात्कुन्तीपुत्राद्धनञ्जयात्  ॥ ०१८  ॥

स हि वेद महाबाहुर्दिव्यान्यस्त्राणि सर्वशः ।
न तु मां विवृतो युद्धे जातु युध्येत पाण्डवः  ॥ ०१९  ॥

अहं स च क्षणेनैव निर्मनुष्यमिदं जगत् ।
कुर्यां शस्त्रबलेनैव ससुरासुरराक्षसम्  ॥ ०२०  ॥

न त्वेवोत्सादनीया मे पाण्डोः पुत्रा नराधिप ।
तस्माद्योधान्हनिष्यामि प्रयोगेणायुतं सदा  ॥ ०२१  ॥

एवमेषां करिष्यामि निधनं कुरुनन्दन ।
न चेत्ते मां हनिष्यन्ति पूर्वमेव समागमे  ॥ ०२२  ॥

सेनापतिस्त्वहं राजन्समयेनापरेण ते ।
भविष्यामि यथाकामं तन्मे श्रोतुमिहार्हसि ॥ ०२३ ॥

कर्णो वा युध्यतां पूर्वमहं वा पृथिवीपते ।
स्पर्धते हि सदात्यर्थं सूतपुत्रो मया रणे ॥ ०२४ ॥

कर्ण उवाच ॥

नाहं जीवति गाङ्गेये योत्स्ये राजन्कथञ्चन ।
हते भीष्मे तु योत्स्यामि सह गाण्डीवधन्वना ॥ ०२५ ॥

वैशंपायन उवाच ॥

ततः सेनापतिं चक्रे विधिवद्भूरिदक्षिणम् ।
धृतराष्ट्रात्मजो भीष्मं सोऽभिषिक्तो व्यरोचत ॥ ०२६ ॥

ततो भेरीश्च शङ्खांश्च शतशश्चैव पुष्करान् ।
वादयामासुरव्यग्राः पुरुषा राजशासनात् ॥ ०२७ ॥

सिंहनादाश्च विविधा वाहनानां च निस्वनाः ।
प्रादुरासन्ननभ्रे च वर्षं रुधिरकर्दमम् ॥ ०२८ ॥

निर्घाताः पृथिवीकम्पा गजबृंहितनिस्वनाः ।
आसंश्च सर्वयोधानां पातयन्तो मनांस्युत ॥ ०२९ ॥

वाचश्चाप्यशरीरिण्यो दिवश्चोल्काः प्रपेदिरे ।
शिवाश्च भयवेदिन्यो नेदुर्दीप्तस्वरा भृशम् ॥ ०३० ॥

सेनापत्ये यदा राजा गाङ्गेयमभिषिक्तवान् ।
तदैतान्युग्ररूपाणि अभवञ्शतशो नृप ॥ ०३१ ॥

ततः सेनापतिं कृत्वा भीष्मं परबलार्दनम् ।
वाचयित्वा द्विजश्रेष्ठान्निष्कैर्गोभिश्च भूरिशः  ॥ ०३२  ॥

वर्धमानो जयाशीर्भिर्निर्ययौ सैनिकैर्वृतः ।
आपगेयं पुरस्कृत्य भ्रातृभिः सहितस्तदा  ॥ ०३३  ॥

स्कन्धावारेण महता कुरुक्षेत्रं जगाम ह  ॥ ०३३  ॥

परिक्रम्य कुरुक्षेत्रं कर्णेन सह कौरवः ।
शिबिरं मापयामास समे देशे नराधिपः  ॥ ०३४  ॥

मधुरानूषरे देशे प्रभूतयवसेन्धने ।
यथैव हास्तिनपुरं तद्वच्छिबिरमाबभौ  ॥ ०३५  ॥

---

# अध्याय १५४

जनमेजय उवाच  ॥

आपगेयं महात्मानं भीष्मं शस्त्रभृतां वरम् ।
पितामहं भारतानां ध्वजं सर्वमहीक्षिताम्  ॥ ००१  ॥

बृहस्पतिसमं बुद्ध्या क्षमया पृथिवीसमम् ।
समुद्रमिव गाम्भीर्ये हिमवन्तमिव स्थिरम्  ॥ ००२  ॥

प्रजापतिमिवौदार्ये तेजसा भास्करोपमम् ।
महेन्द्रमिव शत्रूणां ध्वंसनं शरवृष्टिभिः  ॥ ००३  ॥

रणयज्ञे प्रतिभये स्वाभीले लोमहर्षणे ।
दीक्षितं चिररात्राय श्रुत्वा राजा युधिष्ठिरः ॥ ००४ ॥

किमब्रवीन्महाबाहुः सर्वधर्मविशारदः ।
भीमसेनार्जुनौ वापि कृष्णो वा प्रत्यपद्यत ॥ ००५ ॥

वैशंपायन उवाच ॥

आपद्धर्मार्थकुशलो महाबुद्धिर्युधिष्ठिरः ।
सर्वान्भ्रातॄन्समानीय वासुदेवं च सात्वतम् ॥ ००६ ॥

उवाच वदतां श्रेष्ठः सान्त्वपूर्वमिदं वचः ॥ ००६ ॥

पर्याक्रामत सैन्यानि यत्तास्तिष्ठत दंशिताः ।
पितामहेन वो युद्धं पूर्वमेव भविष्यति ॥ ००७ ॥

तस्मात्सप्तसु सेनासु प्रणेतॄन्मम पश्यत ॥ ००७ ॥

वासुदेव उवाच ॥

यथार्हति भवान्वक्तुमस्मिन्काल उपस्थिते ।
तथेदमर्थवद्वाक्यमुक्तं ते भरतर्षभ ॥ ००८ ॥

रोचते मे महाबाहो क्रियतां यदनन्तरम् ।
नायकास्तव सेनायामभिषिच्यन्तु सप्त वै ॥ ००९ ॥

वैशंपायन उवाच ॥

ततो द्रुपदमानाय्य विराटं शिनिपुङ्गवम् ।
धृष्टद्युम्नं च पाञ्चाल्यं धृष्टकेतुं च पार्थिवम् ॥ ०१० ॥

शिखण्डिनं च पाञ्चाल्यं सहदेवं च मागधम् ॥ ०१० ॥

एतान्सप्त महेष्वासान्वीरान्युद्धाभिनन्दिनः ।
सेनाप्रणेतृन्विधिवदभ्यषिञ्चद्युधिष्ठिरः ॥ ०११ ॥

सर्वसेनापतिं चात्र धृष्टद्युम्नमुपादिशत् ।
द्रोणान्तहेतोरुत्पन्नो य इद्धाज्जातवेदसः ॥ ०१२ ॥

सर्वेषामेव तेषां तु समस्तानां महात्मनाम् ।
सेनापतिपतिं चक्रे गुडाकेशं धनञ्जयम् ॥ ०१३ ॥

अर्जुनस्यापि नेता च संयन्ता चैव वाजिनाम् ।
सङ्कर्षणानुजः श्रीमान्महाबुद्धिर्जनार्दनः ॥ ०१४ ॥

तद्दृष्ट्वोपस्थितं युद्धं समासन्नं महात्ययम् ।
प्राविशद्भवनं राज्ञः पाण्डवस्य हलायुधः ॥ ०१५ ॥

सहाक्रूरप्रभृतिभिर्गदसाम्बोल्मुकादिभिः ।
रौक्मिणेयाहुकसुतैश्चारुदेष्णपुरोगमैः ॥ ०१६ ॥

वृष्णिमुख्यैरभिगतैर्व्याघ्रैरिव बलोत्कटैः ।
अभिगुप्तो महाबाहुर्मरुद्भिरिव वासवः ॥ ०१७ ॥

नीलकौशेयवसनः कैलासशिखरोपमः ।
सिंहखेलगतिः श्रीमान्मदरक्तान्तलोचनः ॥ ०१८ ॥

तं दृष्ट्वा धर्मराजश्च केशवश्च महाद्युतिः ।
उदतिष्ठत्तदा पार्थो भीमकर्मा वृकोदरः ॥ ०१९ ॥

गाण्डीवधन्वा ये चान्ये राजानस्तत्र केचन ।
पूजयां चक्रुरभ्येत्य ते स्म सर्वे हलायुधम् ॥ ०२० ॥

ततस्तं पाण्डवो राजा करे पस्पर्श पाणिना ।
वासुदेवपुरोगास्तु सर्व एवाभ्यवादयन् ॥ ०२१ ॥

विराटद्रुपदौ वृद्धावभिवाद्य हलायुधः ।
युधिष्ठिरेण सहित उपाविशदरिंदमः ॥ ०२२ ॥

ततस्तेषूपविष्टेषु पार्थिवेषु समन्ततः ।
वासुदेवमभिप्रेक्ष्य रौहिणेयोऽभ्यभाषत ॥ ०२३ ॥

भवितायं महारौद्रो दारुणः पुरुषक्षयः ।
दिष्टमेतद्ध्रुवं मन्ये न शक्यमतिवर्तितुम् ॥ ०२४ ॥

अस्माद्युद्धात्समुत्तीर्णानपि वः ससुहृज्जनान् ।
अरोगानक्षतैर्देहैः पश्येयमिति मे मतिः ॥ ०२५ ॥

समेतं पार्थिवं क्षत्रं कालपक्वमसंशयम् ।
विमर्दः सुमहान्भावी मांसशोणितकर्दमः ॥ ०२६ ॥

उक्तो मया वासुदेवः पुनः पुनरुपह्वरे ।
संबन्धिषु समां वृत्तिं वर्तस्व मधुसूदन ॥ ०२७ ॥

पाण्डवा हि यथास्माकं तथा दुर्योधनो नृपः ।
तस्यापि क्रियतां युक्त्या सपर्येति पुनः पुनः ॥ ०२८ ॥

तच्च मे नाकरोद्वाक्यं त्वदर्थे मधुसूदनः ।
निविष्टः सर्वभावेन धनञ्जयमवेक्ष्य च ॥ ०२९ ॥

ध्रुवो जयः पाण्डवानामिति मे निश्चिता मतिः ।
तथा ह्यभिनिवेशोऽयं वासुदेवस्य भारत ॥ ०३० ॥

न चाहमुत्सहे कृष्णमृते लोकमुदीक्षितुम् ।
ततोऽहमनुवर्तामि केशवस्य चिकीर्षितम्  ॥ ०३१  ॥

उभौ शिष्यौ हि मे वीरौ गदायुद्धविशारदौ ।
तुल्यस्नेहोऽस्म्यतो भीमे तथा दुर्योधने नृपे  ॥ ०३२  ॥

तस्माद्यास्यामि तीर्थानि सरस्वत्या निषेवितुम् ।
न हि शक्ष्यामि कौरव्यान्नश्यमानानुपेक्षितुम्  ॥ ०३३  ॥

एवमुक्त्वा महाबाहुरनुज्ञातश्च पाण्डवैः ।
तीर्थयात्रां ययौ रामो निवर्त्य मधुसूदनम्  ॥ ०३४  ॥

---

# अध्याय १५५

वैशंपायन उवाच  ॥

एतस्मिन्नेव काले तु भीष्मकस्य महात्मनः ।
हिरण्यलोम्नो नृपतेः साक्षादिन्द्रसखस्य वै  ॥ ००१  ॥

आहृतीनामधिपतेर्भोजस्यातियशस्विनः ।
दाक्षिणात्यपतेः पुत्रो दिक्षु रुक्मीति विश्रुतः  ॥ ००२  ॥

यः किंपुरुषसिंहस्य गन्धमादनवासिनः ।
शिष्यः कृत्स्नं धनुर्वेदं चतुष्पादमवाप्तवान्  ॥ ००३  ॥

यो माहेन्द्रं धनुर्लेभे तुल्यं गाण्डीवतेजसा ।
शार्ङ्गेण च महाबाहुः संमितं दिव्यमक्षयम्  ॥ ००४  ॥

त्रीण्येवैतानि दिव्यानि धनूंषि दिविचारिणाम् ।
वारुणं गाण्डिवं तत्र माहेन्द्रं विजयं धनुः ॥ ००५ ॥

शार्ङ्गं तु वैष्णवं प्राहुर्दिव्यं तेजोमयं धनुः ।
धारयामास यत्कृष्णः परसेनाभयावहम् ॥ ००६ ॥

गाण्डीवं पावकाल्लेभे खाण्डवे पाकशासनिः ।
द्रुमाद्रुक्मी महातेजा विजयं प्रत्यपद्यत ॥ ००७ ॥

संछिद्य मौरवान्पाशान्निहत्य मुरमोजसा ।
निर्जित्य नरकं भौममाहृत्य मणिकुण्डले ॥ ००८ ॥

षोडश स्त्रीसहस्राणि रत्नानि विविधानि च ।
प्रतिपेदे हृषीकेशः शार्ङ्गं च धनुरुत्तमम् ॥ ००९ ॥

रुक्मी तु विजयं लब्ध्वा धनुर्मेघसमस्वनम् ।
विभीषयन्निव जगत्पाण्डवानभ्यवर्तत ॥ ०१० ॥

नामृष्यत पुरा योऽसौ स्वबाहुबलदर्पितः ।
रुक्मिण्या हरणं वीरो वासुदेवेन धीमता ॥ ०११ ॥

कृत्वा प्रतिज्ञां नाहत्वा निवर्तिष्यामि केशवम् ।
ततोऽन्वधावद्वार्ष्णेयं सर्वशस्त्रभृतां वरम् ॥ ०१२ ॥

सेनया चतुरङ्गिण्या महत्या दूरपातया ।
विचित्रायुधवर्मिण्या गङ्गयेव प्रवृद्धया ॥ ०१३ ॥

स समासाद्य वार्ष्णेयं योगानामीश्वरं प्रभुम् ।
व्यंसितो व्रीडितो राजन्नाजगाम स कुण्डिनम् ॥ ०१४ ॥

यत्रैव कृष्णेन रणे निर्जितः परवीरहा ।
तत्र भोजकटं नाम चक्रे नगरमुत्तमम् ॥ ०१५ ॥

सैन्येन महता तेन प्रभूतगजवाजिना ।
पुरं तद्भुवि विख्यातं नाम्ना भोजकटं नृप ॥ ०१६ ॥

स भोजराजः सैन्येन महता परिवारितः ।
अक्षौहिण्या महावीर्यः पाण्डवान्समुपागमत् ॥ ०१७ ॥

ततः स कवची खड्गी शरी धन्वी तली रथी ।
ध्वजेनादित्यवर्णेन प्रविवेश महाचमूम् ॥ ०१८ ॥

विदितः पाण्डवेयानां वासुदेवप्रियेप्सया ।
युधिष्ठिरस्तु तं राजा प्रत्युद्गम्याभ्यपूजयत् ॥ ०१९ ॥

स पूजितः पाण्डुसुतैर्यथान्यायं सुसत्कृतः ।
प्रतिपूज्य च तान्सर्वान्विश्रान्तः सहसैनिकः ॥ ०२० ॥

उवाच मध्ये वीराणां कुन्तीपुत्रं धनञ्जयम् ॥ ०२० ॥

सहायोऽस्मि स्थितो युद्धे यदि भीतोऽसि पाण्डव ।
करिष्यामि रणे साह्यमसह्यं तव शत्रुभिः ॥ ०२१ ॥

न हि मे विक्रमे तुल्यः पुमानस्तीह कश्चन ।
निहत्य समरे शत्रूंस्तव दास्यामि फल्गुन ॥ ०२२ ॥

इत्युक्तो धर्मराजस्य केशवस्य च संनिधौ ।
शृण्वतां पार्थिवेन्द्राणामन्येषां चैव सर्वशः ॥ ०२३ ॥

वासुदेवमभिप्रेक्ष्य धर्मराजं च पाण्डवम् ।
उवाच धीमान्कौन्तेयः प्रहस्य सखिपूर्वकम् ॥ ०२४ ॥

युध्यमानस्य मे वीर गन्धर्वैः सुमहाबलैः ।
सहायो घोषयात्रायां कस्तदासीत्सखा मम ॥ ०२५ ॥

तथा प्रतिभये तस्मिन्देवदानवसङ्कुले ।
खाण्डवे युध्यमानस्य कः सहायस्तदाभवत् ॥ ०२६ ॥

निवातकवचैर्युद्धे कालकेयैश्च दानवैः ।
तत्र मे युध्यमानस्य कः सहायस्तदाभवत् ॥ ०२७ ॥

तथा विराटनगरे कुरुभिः सह सङ्गरे ।
युध्यतो बहुभिस्तात कः सहायोऽभवन्मम ॥ ०२८ ॥

उपजीव्य रणे रुद्रं शक्रं वैश्रवणं यमम् ।
वरुणं पावकं चैव कृपं द्रोणं च माधवम् ॥ ०२९ ॥

धारयन्गाण्डिवं दिव्यं धनुस्तेजोमयं दृढम् ।
अक्षय्यशरसंयुक्तो दिव्यास्त्रपरिबृंहितः ॥ ०३० ॥

कौरवाणां कुले जातः पाण्डोः पुत्रो विशेषतः ।
द्रोणं व्यपदिशञ्शिष्यो वासुदेवसहायवान् ॥ ०३१ ॥

कथमस्मद्विधो ब्रूयाद्भीतोऽस्मीत्ययशस्करम् ।
वचनं नरशार्दूल वज्रायुधमपि स्वयम् ॥ ०३२ ॥

नास्मि भीतो महाबाहो सहायार्थश्च नास्ति मे ।
यथाकामं यथायोगं गच्छ वान्यत्र तिष्ठ वा ॥ ०३३ ॥

विनिवर्त्य ततो रुक्मी सेनां सागरसंनिभाम् ।
दुर्योधनमुपागच्छत्तथैव भरतर्षभ ॥ ०३४ ॥

तथैव चाभिगम्यैनमुवाच स नराधिपः ।
प्रत्याख्यातश्च तेनापि स तदा शूरमानिना ॥ ०३५ ॥

द्वावेव तु महाराज तस्माद्युद्धाद्व्यपेयतुः ।
रौहिणेयश्च वार्ष्णेयो रुक्मी च वसुधाधिपः ॥ ०३६ ॥

गते रामे तीर्थयात्रां भीष्मकस्य सुते तथा ।
उपाविशन्पाण्डवेया मन्त्राय पुनरेव हि ॥ ०३७ ॥

समितिर्धर्मराजस्य सा पार्थिवसमाकुला ।
शुशुभे तारकाचित्रा द्यौश्चन्द्रेणेव भारत ॥ ०३८ ॥

---

# अध्याय १५६

जनमेजय उवाच ॥

तथा व्यूढेष्वनीकेषु कुरुक्षेत्रे द्विजर्षभ ।
किमकुर्वन्त कुरवः कालेनाभिप्रचोदिताः ॥ ००१ ॥

वैशंपायन उवाच ॥

तथा व्यूढेष्वनीकेषु यत्तेषु भरतर्षभ ।
धृतराष्ट्रो महाराज सञ्जयं वाक्यमब्रवीत् ॥ ००२ ॥

एहि सञ्जय मे सर्वमाचक्ष्वानवशेषतः ।
सेनानिवेशे यद्वृत्तं कुरुपाण्डवसेनयोः ॥ ००३ ॥

दिष्टमेव परं मन्ये पौरुषं चाप्यनर्थकम् ।

यदहं जानमानोऽपि युद्धदोषान्क्षयोदयान् ॥ ००४ ॥

तथापि निकृतिप्रज्ञं पुत्रं दुर्द्यूतदेविनम् ।
न शक्नोमि नियन्तुं वा कर्तुं वा हितमात्मनः ॥ ००५ ॥

भवत्येव हि मे सूत बुद्धिर्दोषानुदर्शिनी ।
दुर्योधनं समासाद्य पुनः सा परिवर्तते ॥ ००६ ॥

एवं गते वै यद्भावि तद्भविष्यति सञ्जय ।
क्षत्रधर्मः किल रणे तनुत्यागोऽभिपूजितः ॥ ००७ ॥

सञ्जय उवाच ॥

त्वद्युक्तोऽयमनुप्रश्नो महाराज यथार्हसि ।
न तु दुर्योधने दोषमिममासक्तुमर्हसि ॥ ००८ ॥

शृणुष्वानवशेषेण वदतो मम पार्थिव ॥ ००८ ॥

य आत्मनो दुश्चरितादशुभं प्राप्नुयान्नरः ।
एनसा न स दैवं वा कालं वा गन्तुमर्हति ॥ ००९ ॥

महाराज मनुष्येषु निन्द्यं यः सर्वमाचरेत् ।
स वध्यः सर्वलोकस्य निन्दितानि समाचरन् ॥ ०१० ॥

निकारा मनुजश्रेष्ठ पाण्डवैस्त्वत्प्रतीक्षया ।
अनुभूताः सहामात्यैर्निकृतैरधिदेवने ॥ ०११ ॥

हयानां च गजानां च राज्ञां चामिततेजसाम् ।
वैशसं समरे वृत्तं यत्तन्मे शृणु सर्वशः ॥ ०१२ ॥

स्थिरो भूत्वा महाराज सर्वलोकक्षयोदयम् ।

यथाभूतं महायुद्धे श्रुत्वा मा विमना भव ॥ ०१३ ॥

न ह्येव कर्ता पुरुषः कर्मणोः शुभपापयोः ।
अस्वतन्त्रो हि पुरुषः कार्यते दारुयन्त्रवत् ॥ ०१४ ॥

केचिदीश्वरनिर्दिष्टाः केचिदेव यदृच्छया ।
पूर्वकर्मभिरप्यन्ये त्रैधमेतद्विकृष्यते ॥ ०१५ ॥

---

# उलूकयानपर्व

## अध्याय १५७

सञ्जय उवाच ॥

हिरण्वत्यां निविष्टेषु पाण्डवेषु महात्मसु ।
दुर्योधनो महाराज कर्णेन सह भारत ॥ ००१ ॥

सौबलेन च राजेन्द्र तथा दुःशासनेन च ।
आहूयोपह्वरे राजन्नुलूकमिदमब्रवीत् ॥ ००२ ॥

उलूक गच्छ कैतव्य पाण्डवान्सहसोमकान् ।
गत्वा मम वचो ब्रूहि वासुदेवस्य शृण्वतः ॥ ००३ ॥

इदं तत्समनुप्राप्तं वर्षपूगाभिचिन्तितम् ।
पाण्डवानां कुरूणां च युद्धं लोकभयङ्करम् ॥ ००४ ॥

यदेतत्कत्थनावाक्यं सञ्जयो महदब्रवीत् ।

मध्ये कुरूणां कौन्तेय तस्य कालोऽयमागतः ॥ ००५ ॥

यथा वः संप्रतिज्ञातं तत्सर्वं क्रियतामिति ॥ ००५ ॥

अमर्षं राज्यहरणं वनवासं च पाण्डव ।
द्रौपद्याश्च परिक्लेशं संस्मरन्पुरुषो भव ॥ ००६ ॥

यदर्थं क्षत्रिया सूते गर्भं तदिदमागतम् ।
बलं वीर्यं च शौर्यं च परं चाप्यस्त्रलाघवम् ॥ ००७ ॥

पौरुषं दर्शयन्युद्धे कोपस्य कुरु निष्कृतिम् ॥ ००७ ॥

परिक्लिष्टस्य दीनस्य दीर्घकालोषितस्य च ।
न स्फुटेद्धृदयं कस्य ऐश्वर्याद्भ्रंशितस्य च ॥ ००८ ॥

कुले जातस्य शूरस्य परवित्तेषु गृध्यतः ।
आच्छिन्नं राज्यमाक्रम्य कोपं कस्य न दीपयेत् ॥ ००९ ॥

यत्तदुक्तं महद्वाक्यं कर्मणा तद्विभाव्यताम् ।
अकर्मणा कत्थितेन सन्तः कुपुरुषं विदुः ॥ ०१० ॥

अमित्राणां वशे स्थानं राज्यस्य च पुनर्भवः ।
द्वावर्थौ युध्यमानस्य तस्मात्कुरुत पौरुषम् ॥ ०११ ॥

अस्मान्वा त्वं पराजित्य प्रशाधि पृथिवीमिमाम् ।
अथ वा निहतोऽस्माभिर्वीरलोकं गमिष्यसि ॥ ०१२ ॥

राष्ट्रात्प्रव्राजनं क्लेशं वनवासं च पाण्डव ।
कृष्णायाश्च परिक्लेशं संस्मरन्पुरुषो भव ॥ ०१३ ॥

अप्रियाणां च वचने प्रव्रजत्सु पुनः पुनः ।

अमर्षं दर्शयाद्य त्वममर्षो ह्येव पौरुषम्  ॥ ०१४  ॥

क्रोधो बलं तथा वीर्यं ज्ञानयोगोऽस्त्रलाघवम् ।
इह ते पार्थ दृश्यन्तां सङ्ग्रामे पुरुषो भव  ॥ ०१५  ॥

तं च तूबरकं मूढं बह्वाशिनमविद्यकम् ।
उलूक मद्वचो ब्रूया असकृद्भीमसेनकम्  ॥ ०१६  ॥

अशक्तेनैव यच्छप्तं सभामध्ये वृकोदर ।
दुःशासनस्य रुधिरं पीयतां यदि शक्यते  ॥ ०१७  ॥

लोहाभिहारो निर्वृत्तः कुरुक्षेत्रमकर्दमम् ।
पुष्टास्तेऽश्वा भृता योधाः श्वो युध्यस्व सकेशवः  ॥ ०१८  ॥

---

# अध्याय १५८

सञ्जय उवाच  ॥

सेनानिवेशं संप्राप्य कैतव्यः पाण्डवस्य ह ।
समागतः पाण्डवेयैर्युधिष्ठिरमभाषत  ॥ ००१  ॥

अभिज्ञो दूतवाक्यानां यथोक्तं ब्रुवतो मम ।
दुर्योधनसमादेशं श्रुत्वा न क्रोद्धुमर्हसि  ॥ ००२  ॥

युधिष्ठिर उवाच  ॥

उलूक न भयं तेऽस्ति ब्रूहि त्वं विगतज्वरः ।
यन्मतं धार्तराष्ट्रस्य लुब्धस्यादीर्घदर्शिनः  ॥ ००३  ॥

सञ्जय उवाच ॥

ततो द्युतिमतां मध्ये पाण्डवानां महात्मनाम् ।
सृञ्जयानां च सर्वेषां कृष्णस्य च यशस्विनः ॥ ००४ ॥

द्रुपदस्य सपुत्रस्य विराटस्य च संनिधौ ।
भूमिपानां च सर्वेषां मध्ये वाक्यं जगाद ह ॥ ००५ ॥

इदं त्वामब्रवीद्राजा धार्तराष्ट्रो महामनाः ।
श्रृण्वतां कुरुवीराणां तन्निबोध नराधिप ॥ ००६ ॥

पराजितोऽसि द्यूतेन कृष्णा चानायिता सभाम् ।
शक्योऽमर्षो मनुष्येण कर्तुं पुरुषमानिना ॥ ००७ ॥

द्वादशैव तु वर्षाणि वने धिष्ण्याद्विवासिताः ।
संवत्सरं विराटस्य दास्यमास्थाय चोषिताः ॥ ००८ ॥

अमर्षं राज्यहरणं वनवासं च पाण्डव ।
द्रौपद्याश्च परिक्लेशं संस्मरन्पुरुषो भव ॥ ००९ ॥

अशक्तेन च यच्छप्तं भीमसेनेन पाण्डव ।
दुःशासनस्य रुधिरं पीयतां यदि शक्यते ॥ ०१० ॥

लोहाभिहारो निर्वृत्तः कुरुक्षेत्रमकर्दमम् ।
समः पन्था भृता योधाः श्वो युध्यस्व सकेशवः ॥ ०११ ॥

असमागम्य भीष्मेण संयुगे किं विकत्थसे ।
आरुरुक्षुर्यथा मन्दः पर्वतं गन्धमादनम् ॥ ०१२ ॥

द्रोणं च युध्यतां श्रेष्ठं शचीपतिसमं युधि ।

अजित्वा संयुगे पार्थ राज्यं कथमिहेच्छसि ॥ ०१३ ॥

ब्राह्मे धनुषि चाचार्यं वेदयोरन्तरं द्वयोः ।
युधि धुर्यमविक्षोभ्यमनीकधरमच्युतम् ॥ ०१४ ॥

द्रोणं मोहाद्युधा पार्थ यज्जिगीषसि तन्मृषा ।
न हि शुश्रुम वातेन मेरुमुन्मथितं गिरिम् ॥ ०१५ ॥

अनिलो वा वहेन्मेरुं द्यौर्वापि निपतेन्महीम् ।
युगं वा परिवर्तेत यद्येवं स्याद्यथात्थ माम् ॥ ०१६ ॥

को ह्याभ्यां जीविताकाङ्क्षी प्राप्यास्त्रमरिमर्दनम् ।
गजो वाजी नरो वापि पुनः स्वस्ति गृहान्व्रजेत् ॥ ०१७ ॥

कथमाभ्यामभिध्यातः संसृष्टो दारुणेन वा ।
रणे जीवन्विमुच्येत पदा भूमिमुपस्पृशन् ॥ ०१८ ॥

किं दर्दुरः कूपशयो यथेमां ; न बुध्यसे राजचमूं समेताम् ।
दुराधर्षां देवचमूप्रकाशां ; गुप्तां नरेन्द्रैस्त्रिदशैरिव द्याम् ॥ ०१९ ॥

प्राच्यैः प्रतीच्यैरथ दाक्षिणात्यै ;रुदीच्यकाम्बोजशकैः खशैश्च ।
शाल्वैः समत्स्यैः कुरुमध्यदेशै ;र्म्लेच्छैः पुलिन्दैर्द्रविडान्ध्रकाञ्च्यैः ॥ ०२० ॥

नानाजनौघं युधि संप्रवृद्धं ; गाङ्गं यथा वेगमवारणीयम् ।
मां च स्थितं नागबलस्य मध्ये ; युयुत्ससे मन्द किमल्पबुद्धे ॥ ०२१ ॥

इत्येवमुक्त्वा राजानं धर्मपुत्रं युधिष्ठिरम् ।
अभ्यावृत्य पुनर्जिष्णुमुलूकः प्रत्यभाषत ॥ ०२२ ॥

अकत्थमानो युध्यस्व कत्थसेऽर्जुन किं बहु ।
पर्यायात्सिद्धिरेतस्य नैतत्सिध्यति कत्थनात् ॥ ०२३ ॥

यदीदं कत्थनात्सिध्येत्कर्म लोके धनञ्जय ।
सर्वे भवेयुः सिद्धार्था बहु कत्थेत दुर्गतः ॥ ०२४ ॥

जानामि ते वासुदेवं सहायं ; जानामि ते गाण्डिवं तालमात्रम् ।
जानाम्येतत्त्वादृशो नास्ति योद्धा ; राज्यं च ते जानमानो हरामि ॥ ०२५ ॥

न तु पर्यायधर्मेण सिद्धिं प्राप्नोति भूयसीम् ।
मनसैव हि भूतानि धाता प्रकुरुते वशे ॥ ०२६ ॥

त्रयोदश समा भुक्तं राज्यं विलपतस्तव ।
भूयश्चैव प्रशासिष्ये निहत्य त्वां सबान्धवम् ॥ ०२७ ॥

क्व तदा गाण्डिवं तेऽभूद्यत्त्वं दासपणे जितः ।
क्व तदा भीमसेनस्य बलमासीच्च फल्गुन ॥ ०२८ ॥

सगदाद्भीमसेनाच्च पार्थाच्चैव सगाण्डिवात् ।
न वै मोक्षस्तदा वोऽभूद्विना कृष्णामनिन्दिताम् ॥ ०२९ ॥

सा वो दास्यं समापन्नान्मोक्षयामास भामिनी ।
अमानुष्यसमायुक्तान्दास्यकर्मण्यवस्थितान् ॥ ०३० ॥

अवोचं यत्षण्ढतिलानहं वस्तथ्यमेव तत् ।
धृता हि वेणी पार्थेन विराटनगरे तदा ॥ ०३१ ॥

सूदकर्मणि च श्रान्तं विराटस्य महानसे ।
भीमसेनेन कौन्तेय यच्च तन्मम पौरुषम् ॥ ०३२ ॥

एवमेव सदा दण्डं क्षत्रियाः क्षत्रिये दधुः ।
श्रेण्यां कक्ष्यां च वेण्यां च संयुगे यः पलायते ॥ ०३३ ॥

न भयाद्वासुदेवस्य न चापि तव फल्गुन ।
राज्यं प्रतिप्रदास्यामि युध्यस्व सहकेशवः ॥ ०३४ ॥

न माया हीन्द्रजालं वा कुहका वा विभीषणी ।
आत्तशस्त्रस्य मे युद्धे वहन्ति प्रतिगर्जनाः ॥ ०३५ ॥

वासुदेवसहस्रं वा फल्गुनानां शतानि वा ।
आसाद्य माममोघेषुं द्रविष्यन्ति दिशो दश ॥ ०३६ ॥

संयुगं गच्छ भीष्मेण भिन्धि त्वं शिरसा गिरिम् ।
प्रतरेमं महागाधं बाहुभ्यां पुरुषोदधिम् ॥ ०३७ ॥

शारद्वतमहीमानं विविंशतिझषाकुलम् ।
बृहद्बलसमुच्चालं सौमदत्तितिमिङ्गिलम् ॥ ०३८ ॥

दुःशासनौघं शलशल्यमत्स्यं ; सुषेणचित्रायुधनागनक्रम् ।
जयद्रथाद्रिं पुरुमित्रगाधं ; दुर्मर्षणोदं शकुनिप्रपातम् ॥ ०३९ ॥

शस्त्रौघमक्षय्यमतिप्रवृद्धं ; यदावगाह्य श्रमनष्टचेताः ।
भविष्यसि त्वं हतसर्वबान्धव ;स्तदा मनस्ते परितापमेष्यति ॥ ०४० ॥

तदा मनस्ते त्रिदिवादिवाशुचे ;र्निवर्ततां पार्थ महीप्रशासनात् ।
राज्यं प्रशास्तुं हि सुदुर्लभं त्वया ; बुभूषता स्वर्ग इवातपस्विना ॥ ०४१ ॥

---

# अध्याय १५९

सञ्जय उवाच ॥

उलूकस्त्वर्जुनं भूयो यथोक्तं वाक्यमब्रवीत् ।
आशीविषमिव क्रुद्धं तुदन्वाक्यशलाकया ॥ ००१ ॥

तस्य तद्वचनं श्रुत्वा रुषिताः पाण्डवा भृशम् ।
प्रागेव भृशसङ्क्रुद्धाः कैतव्येन प्रधर्षिताः ॥ ००२ ॥

नासनेष्ववतिष्ठन्त बाहूंश्चैव विचिक्षिपुः ।
आशीविषा इव क्रुद्धा वीक्षां चक्रुः परस्परम् ॥ ००३ ॥

अवाक्शिरा भीमसेनः समुदैक्षत केशवम् ।
नेत्राभ्यां लोहितान्ताभ्यामाशीविष इव श्वसन् ॥ ००४ ॥

आर्तं वातात्मजं दृष्ट्वा क्रोधेनाभिहतं भृशम् ।
उत्स्मयन्निव दाशार्हः कैतव्यं प्रत्यभाषत ॥ ००५ ॥

प्रयाहि शीघ्रं कैतव्य ब्रूयाश्चैव सुयोधनम् ।
श्रुतं वाक्यं गृहीतोऽर्थो मतं यत्ते तथास्तु तत् ॥ ००६ ॥

मद्वचश्चापि भूयस्ते वक्तव्यः स सुयोधनः ।
श्व इदानीं प्रदृश्येथाः पुरुषो भव दुर्मते ॥ ००७ ॥

मन्यसे यच्च मूढ त्वं न योत्स्यति जनार्दनः ।
सारथ्येन वृतः पार्थैरिति त्वं न बिभेषि च ॥ ००८ ॥

जघन्यकालमप्येतद्भवेद्यत्सर्वपार्थिवान् ।
निर्दहेयमहं क्रोधात्तृणानीव हुताशनः ॥ ००९ ॥

युधिष्ठिरनियोगात्तु फल्गुनस्य महात्मनः ।
करिष्ये युध्यमानस्य सारथ्यं विदितात्मनः ॥ ०१० ॥

यद्युत्पतसि लोकांस्त्रीन्यद्याविशसि भूतलम् ।
तत्र तत्रार्जुनरथं प्रभाते द्रक्ष्यसेऽग्रतः ॥ ०११ ॥

यच्चापि भीमसेनस्य मन्यसे मोघगर्जितम् ।
दुःशासनस्य रुधिरं पीतमित्यवधार्यताम् ॥ ०१२ ॥

न त्वां समीक्षते पार्थो नापि राजा युधिष्ठिरः ।
न भीमसेनो न यमौ प्रतिकूलप्रभाषिणम् ॥ ०१३ ॥

---

# अध्याय १६०

सञ्जय उवाच ॥

दुर्योधनस्य तद्वाक्यं निशम्य भरतर्षभः ।
नेत्राभ्यामतिताम्राभ्यां कैतव्यं समुदैक्षत ॥ ००१ ॥

स केशवमभिप्रेक्ष्य गुडाकेशो महायशाः ।
अभ्यभाषत कैतव्यं प्रगृह्य विपुलं भुजम् ॥ ००२ ॥

स्ववीर्यं यः समाश्रित्य समाह्वयति वै परान् ।
अभीतः पूरयञ्शक्तिं स वै पुरुष उच्यते ॥ ००३ ॥

परवीर्यं समाश्रित्य यः समाह्वयते परान् ।
क्षत्रबन्धुरशक्तत्वाल्लोके स पुरुषाधमः ॥ ००४ ॥

स त्वं परेषां वीर्येण मन्यसे वीर्यमात्मनः ।
स्वयं कापुरुषो मूढः परांश्च क्षेप्तुमिच्छसि ॥ ००५ ॥

यस्त्वं वृद्धं सर्वराज्ञां हितबुद्धिं जितेन्द्रियम् ।
मरणाय महाबुद्धिं दीक्षयित्वा विकत्थसे ॥ ००६ ॥

भावस्ते विदितोऽस्माभिर्दुर्बुद्धे कुलपांसन ।
न हनिष्यन्ति गङ्गेयं पाण्डवा घृणयेति च ॥ ००७ ॥

यस्य वीर्यं समाश्रित्य धार्तराष्ट्र विकत्थसे ।
हन्तास्मि प्रथमं भीष्मं मिषतां सर्वधन्विनाम् ॥ ००८ ॥

कैतव्य गत्वा भरतान्समेत्य ; सुयोधनं धार्तराष्ट्रं ब्रवीहि ।
तथेत्याह अर्जुनः सव्यसाची ; निशाव्यपाये भविता विमर्दः ॥ ००९ ॥

यद्वोऽब्रवीद्वाक्यमदीनसत्त्वो ; मध्ये कुरूणां हर्षयन्सत्यसंधः ।
अहं हन्ता पाण्डवानामनीकं ; शाल्वेयकांश्चेति ममैष भारः ॥ ०१० ॥

हन्यामहं द्रोणमृते हि लोकं ; न ते भयं विद्यते पाण्डवेभ्यः ।
ततो हि ते लब्धतमं च राज्यं ; क्षयं गताः पाण्डवाश्चेति भावः ॥ ०११ ॥

स दर्पपूर्णो न समीक्षसे त्व ;मनर्थमात्मन्यपि वर्तमानम् ।
तस्मादहं ते प्रथमं समूहे ; हन्ता समक्षं कुरुवृद्धमेव ॥ ०१२ ॥

सूर्योदये युक्तसेनः प्रतीक्ष्य ; ध्वजी रथी रक्ष च सत्यसंधम् ।
अहं हि वः पश्यतां द्वीपमेनं ; रथाद्भीष्मं पातयितास्मि बाणैः ॥ ०१३ ॥

श्वोभूते कत्थनावाक्यं विज्ञास्यति सुयोधनः ।
अर्दितं शरजालेन मया दृष्ट्वा पितामहम् ॥ ०१४ ॥

यदुक्तश्च सभामध्ये पुरुषो ह्रस्वदर्शनः ।
क्रुद्धेन भीमसेनेन भ्राता दुःशासनस्तव ॥ ०१५ ॥

अधर्मज्ञो नित्यवैरी पापबुद्धिर्नृशंसकृत् ।

सत्यां प्रतिज्ञां नचिराद्द्रक्ष्यसे तां सुयोधन ॥ ०१६ ॥

अभिमानस्य दर्पस्य क्रोधपारुष्ययोस्तथा ।
नैष्ठुर्यस्यावलेपस्य आत्मसंभावनस्य च ॥ ०१७ ॥

नृशंसतायास्तैक्ष्ण्यस्य धर्मविद्वेषणस्य च ।
अधर्मस्यातिवादस्य वृद्धातिक्रमणस्य च ॥ ०१८ ॥

दर्शनस्य च वक्रस्य कृत्स्नस्यापनयस्य च ।
द्रक्ष्यसि त्वं फलं तीव्रमचिरेण सुयोधन ॥ ०१९ ॥

वासुदेवद्वितीये हि मयि क्रुद्धे नराधिप ।
आशा ते जीविते मूढ राज्ये वा केन हेतुना ॥ ०२० ॥

शान्ते भीष्मे तथा द्रोणे सूतपुत्रे च पातिते ।
निराशो जीविते राज्ये पुत्रेषु च भविष्यसि ॥ ०२१ ॥

भ्रातॄणां निधनं दृष्ट्वा पुत्राणां च सुयोधन ।
भीमसेनेन निहतो दुष्कृतानि स्मरिष्यसि ॥ ०२२ ॥

न द्वितीयां प्रतिज्ञां हि प्रतिज्ञास्यति केशवः ।
सत्यं ब्रवीम्यहं ह्येतत्सर्वं सत्यं भविष्यति ॥ ०२३ ॥

इत्युक्तः कैतवो राजंस्तद्वाक्यमुपधार्य च ।
अनुज्ञातो निववृते पुनरेव यथागतम् ॥ ०२४ ॥

उपावृत्य तु पाण्डुभ्यः कैतव्यो धृतराष्ट्रजम् ।
गत्वा यथोक्तं तत्सर्वमुवाच कुरुसंसदि ॥ ०२५ ॥

केशवार्जुनयोर्वाक्यं निशम्य भरतर्षभः ।
दुःशासनं च कर्णं च शकुनिं चाभ्यभाषत ॥ ०२६ ॥

आज्ञापयत राज्ञश्च बलं मित्रबलं तथा ।
यथा प्रागुदयात्सर्वा युक्ता तिष्ठत्यनीकिनी ॥ ०२७ ॥

ततः कर्णसमादिष्टा दूताः प्रत्वरिता रथैः ।
उष्ट्रवामीभिरप्यन्ये सदश्वैश्च महाजवैः ॥ ०२८ ॥

तूर्णं परियियुः सेनां कृत्स्नां कर्णस्य शासनात् ।
आज्ञापयन्तो राज्ञस्तान्योगः प्रागुदयादिति ॥ ०२९ ॥

---

# रथातिरथसंख्यानपर्व

## अध्याय १६१

सञ्जय उवाच ॥

उलूकस्य वचः श्रुत्वा कुन्तीपुत्रो युधिष्ठिरः ।
सेनां निर्यापयामास धृष्टद्युम्नपुरोगमाम् ॥ ००१ ॥

पदातिनीं नागवतीं रथिनीमश्ववृन्दिनीम् ।
चतुर्विधबलां भीमामकम्प्यां पृथिवीमिव ॥ ००२ ॥

भीमसेनादिभिर्गुप्तां सार्जुनैश्च महारथैः ।
धृष्टद्युम्नवशां दुर्गां सागरस्तिमितोपमाम् ॥ ००३ ॥

तस्यास्त्वग्रे महेष्वासः पाञ्चाल्यो युद्धदुर्मदः ।
द्रोणप्रेप्सुरनीकानि धृष्टद्युम्नः प्रकर्षति ॥ ००४ ॥

यथाबलं यथोत्साहं रथिनः समुपादिशत् ।
अर्जुनं सूतपुत्राय भीमं दुर्योधनाय च ॥ ००५ ॥

अश्वत्थाम्ने च नकुलं शैब्यं च कृतवर्मणे ।
सैन्धवाय च वार्ष्णेयं युयुधानमुपादिशत् ॥ ००६ ॥

शिखण्डिनं च भीष्माय प्रमुखे समकल्पयत् ।
सहदेवं शकुनये चेकितानं शलाय च ॥ ००७ ॥

धृष्टकेतुं च शल्याय गौतमायोत्तमौजसम् ।
द्रौपदेयांश्च पञ्चभ्यस्त्रिगर्तेभ्यः समादिशत् ॥ ००८ ॥

वृषसेनाय सौभद्रं शेषाणां च महीक्षिताम् ।
समर्थं तं हि मेने वै पार्थादभ्यधिकं रणे ॥ ००९ ॥

एवं विभज्य योधांस्तान्पृथक्च सह चैव ह ।
ज्वालावर्णो महेष्वासो द्रोणमंशमकल्पयत् ॥ ०१० ॥

धृष्टद्युम्नो महेष्वासः सेनापतिपतिस्ततः ।
विधिवद्व्यूह्य मेधावी युद्धाय धृतमानसः ॥ ०११ ॥

यथादिष्टान्यनीकानि पाण्डवानामयोजयत् ।
जयाय पाण्डुपुत्राणां यत्तस्तस्थौ रणाजिरे ॥ ०१२ ॥

---

# अध्याय १६२

धृतराष्ट्र उवाच ॥

प्रतिज्ञाते फल्गुनेन वधे भीष्मस्य सञ्जय ।
किमकुर्वन्त मे मन्दाः पुत्रा दुर्योधनादयः ॥ ००१ ॥

हतमेव हि पश्यामि गाङ्गेयं पितरं रणे ।
वासुदेवसहायेन पार्थेन दृढधन्वना ॥ ००२ ॥

स चापरिमितप्रज्ञस्तच्छ्रुत्वा पार्थभाषितम् ।
किमुक्तवान्महेष्वासो भीष्मः प्रहरतां वरः ॥ ००३ ॥

सेनापत्यं च संप्राप्य कौरवाणां धुरंधरः ।
किमचेष्टत गाङ्गेयो महाबुद्धिपराक्रमः ॥ ००४ ॥

वैशंपायन उवाच ॥

ततस्तत्सञ्जयस्तस्मै सर्वमेव न्यवेदयत् ।
यथोक्तं कुरुवृद्धेन भीष्मेणामिततेजसा ॥ ००५ ॥

सञ्जय उवाच ॥

सेनापत्यमनुप्राप्य भीष्मः शांतनवो नृप ।
दुर्योधनमुवाचेदं वचनं हर्षयन्निव ॥ ००६ ॥

नमस्कृत्वा कुमाराय सेनान्ये शक्तिपाणये ।
अहं सेनापतिस्तेऽद्य भविष्यामि न संशयः ॥ ००७ ॥

सेनाकर्मण्यभिज्ञोऽस्मि व्यूहेषु विविधेषु च ।
कर्म कारयितुं चैव भृतानप्यभृतांस्तथा ॥ ००८ ॥

यात्रायानेषु युद्धेषु लब्धप्रशमनेषु च ।
भृशं वेद महाराज यथा वेद बृहस्पतिः ॥ ००९ ॥

व्यूहानपि महारम्भान्दैवगान्धर्वमानुषान् ।
तैरहं मोहयिष्यामि पाण्डवान्व्येतु ते ज्वरः ॥ ०१० ॥

सोऽहं योत्स्यामि तत्त्वेन पालयंस्तव वाहिनीम् ।
यथावच्छास्त्रतो राजन्व्येतु ते मानसो ज्वरः ॥ ०११ ॥

दुर्योधन उवाच ॥

न विद्यते मे गाङ्गेय भयं देवासुरेष्वपि ।
समस्तेषु महाबाहो सत्यमेतद्ब्रवीमि ते ॥ ०१२ ॥

किं पुनस्त्वयि दुर्धर्षे सेनापत्ये व्यवस्थिते ।
द्रोणे च पुरुषव्याघ्रे स्थिते युद्धाभिनन्दिनि ॥ ०१३ ॥

भवद्भ्यां पुरुषाग्र्याभ्यां स्थिताभ्यां विजयो मम ।
न दुर्लभं कुरुश्रेष्ठ देवराज्यमपि ध्रुवम् ॥ ०१४ ॥

रथसंख्यां तु कार्त्स्न्येन परेषामात्मनस्तथा ।
तथैवातिरथानां च वेत्तुमिच्छामि कौरव ॥ ०१५ ॥

पितामहो हि कुशलः परेषामात्मनस्तथा ।
श्रोतुमिच्छाम्यहं सर्वैः सहैभिर्वसुधाधिपैः ॥ ०१६ ॥

भीष्म उवाच ॥

गान्धारे श्रृणु राजेन्द्र रथसंख्यां स्वके बले ।
ये रथाः पृथिवीपाल तथैवातिरथाश्च ये ॥ ०१७ ॥

बहूनीह सहस्राणि प्रयुतान्यर्बुदानि च ।
रथानां तव सेनायां यथामुख्यं तु मे श्रृणु ॥ ०१८ ॥

भवानग्रे रथोदारः सह सर्वैः सहोदरैः ।
दुःशासनप्रभृतिभिर्भ्रातृभिः शतसंमितैः ॥ ०१९ ॥

सर्वे कृतप्रहरणाश्छेद्यभेद्यविशारदाः ।
रथोपस्थे गजस्कन्धे गदायुद्धेऽसिचर्मणि ॥ ०२० ॥

संयन्तारः प्रहर्तारः कृतास्त्रा भारसाधनाः ।
इष्वस्त्रे द्रोणशिष्याश्च कृपस्य च शरद्वतः ॥ ०२१ ॥

एते हनिष्यन्ति रणे पाञ्चालान्युद्धदुर्मदान् ।
कृतकिल्बिषाः पाण्डवेयैर्धार्तराष्ट्रा मनस्विनः ॥ ०२२ ॥

ततोऽहं भरतश्रेष्ठ सर्वसेनापतिस्तव ।
शत्रून्विध्वंसयिष्यामि कदर्थीकृत्य पाण्डवान् ॥ ०२३ ॥

न त्वात्मनो गुणान्वक्तुमर्हामि विदितोऽस्मि ते ॥ ०२३ ॥

कृतवर्मा त्वतिरथो भोजः प्रहरतां वरः ।
अर्थसिद्धिं तव रणे करिष्यति न संशयः ॥ ०२४ ॥

अस्त्रविद्भिरनाधृष्यो दूरपाती दृढायुधः ।
हनिष्यति रिपूंस्तुभ्यं महेन्द्रो दानवानिव ॥ ०२५ ॥

मद्रराजो महेष्वासः शल्यो मेऽतिरथो मतः ।
स्पर्धते वासुदेवेन यो वै नित्यं रणे रणे ॥ ०२६ ॥

भागिनेयान्निजांस्त्यक्त्वा शल्यस्ते रथसत्तमः ।
एष योत्स्यति सङ्ग्रामे कृष्णं चक्रगदाधरम् ॥ ०२७ ॥

सागरोर्मिसमैर्वेगैः प्लावयन्निव शात्रवान् ।

भूरिश्रवाः कृतास्त्रश्च तव चापि हितः सुहृत् ॥ ०२८ ॥

सौमदत्तिर्महेष्वासो रथयूथपयूथपः ।
बलक्षयममित्राणां सुमहान्तं करिष्यति ॥ ०२९ ॥

सिन्धुराजो महाराज मतो मे द्विगुणो रथः ।
योत्स्यते समरे राजन्विक्रान्तो रथसत्तमः ॥ ०३० ॥

द्रौपदीहरणे पूर्वं परिक्लिष्टः स पाण्डवैः ।
संस्मरंस्तं परिक्लेशं योत्स्यते परवीरहा ॥ ०३१ ॥

एतेन हि तदा राजंस्तप आस्थाय दारुणम् ।
सुदुर्लभो वरो लब्धः पाण्डवान्योद्धुमाहवे ॥ ०३२ ॥

स एष रथशार्दूलस्तद्वैरं संस्मरन्रणे ।
योत्स्यते पाण्डवांस्तात प्राणांस्त्यक्त्वा सुदुस्त्यजान् ॥ ०३३ ॥

---

# अध्याय १६३

भीष्म उवाच ॥

सुदक्षिणस्तु काम्बोजो रथ एकगुणो मतः ।
तवार्थसिद्धिमाकाङ्क्षन्योत्स्यते समरे परैः ॥ ००१ ॥

एतस्य रथसिंहस्य तवार्थे राजसत्तम ।
पराक्रमं यथेन्द्रस्य द्रक्ष्यन्ति कुरवो युधि ॥ ००२ ॥

एतस्य रथवंशो हि तिग्मवेगप्रहारिणाम् ।

काम्बोजानां महाराज शलभानामिवायतिः ॥ ००३ ॥

नीलो माहिष्मतीवासी नीलवर्मधरस्तव ।
रथवंशेन शत्रूणां कदनं वै करिष्यति ॥ ००४ ॥

कृतवैरः पुरा चैव सहदेवेन पार्थिवः ।
योत्स्यते सततं राजंस्तवार्थे कुरुसत्तम ॥ ००५ ॥

विन्दानुविन्दावावन्त्यौ समेतौ रथसत्तमौ ।
कृतिनौ समरे तात दृढवीर्यपराक्रमौ ॥ ००६ ॥

एतौ तौ पुरुषव्याघ्रौ रिपुसैन्यं प्रधक्ष्यतः ।
गदाप्रासासिनाराचैस्तोमरैश्च भुजच्युतैः ॥ ००७ ॥

युद्धाभिकामौ समरे क्रीडन्ताविव यूथपौ ।
यूथमध्ये महाराज विचरन्तौ कृतान्तवत् ॥ ००८ ॥

त्रिगर्ता भ्रातरः पञ्च रथोदारा मता मम ।
कृतवैराश्च पार्थेन विराटनगरे तदा ॥ ००९ ॥

मकरा इव राजेन्द्र समुद्धततरङ्गिणीम् ।
गङ्गां विक्षोभयिष्यन्ति पार्थानां युधि वाहिनीम् ॥ ०१० ॥

ते रथाः पञ्च राजेन्द्र येषां सत्यरथो मुखम् ।
एते योत्स्यन्ति समरे संस्मरन्तः पुरा कृतम् ॥ ०११ ॥

व्यलीकं पाण्डवेयेन भीमसेनानुजेन ह ।
दिशो विजयता राजञ्श्वेतवाहेन भारत ॥ ०१२ ॥

ते हनिष्यन्ति पार्थानां समासाद्य महारथान् ।
वरान्वरान्महेष्वासान्क्षत्रियाणां धुरंधराः ॥ ०१३ ॥

लक्ष्मणस्तव पुत्रस्तु तथा दुःशासनस्य च ।
उभौ तौ पुरुषव्याघ्रौ सङ्ग्रामेष्वनिवर्तिनौ ॥ ०१४ ॥

तरुणौ सुकुमारौ च राजपुत्रौ तरस्विनौ ।
युद्धानां च विशेषज्ञौ प्रणेतारौ च सर्वशः ॥ ०१५ ॥

रथौ तौ रथशार्दूल मतौ मे रथसत्तमौ ।
क्षत्रधर्मरतौ वीरौ महत्कर्म करिष्यतः ॥ ०१६ ॥

दण्डधारो महाराज रथ एको नरर्षभः ।
योत्स्यते समरं प्राप्य स्वेन सैन्येन पालितः ॥ ०१७ ॥

बृहद्बलस्तथा राजा कौसल्यो रथसत्तमः ।
रथो मम मतस्तात दृढवेगपराक्रमः ॥ ०१८ ॥

एष योत्स्यति सङ्ग्रामे स्वां चमूं संप्रहर्षयन् ।
उग्रायुधो महेष्वासो धार्तराष्ट्रहिते रतः ॥ ०१९ ॥

कृपः शारद्वतो राजन्रथयूथपयूथपः ।
प्रियान्प्राणान्परित्यज्य प्रधक्ष्यति रिपूंस्तव ॥ ०२० ॥

गौतमस्य महर्षेर्य आचार्यस्य शरद्वतः ।
कार्त्तिकेय इवाजेयः शरस्तम्बात्सुतोऽभवत् ॥ ०२१ ॥

एष सेनां बहुविधां विविधायुधकार्मुकाम् ।
अग्निवत्समरे तात चरिष्यति विमर्दयन् ॥ ०२२ ॥

# अध्याय १६४

भीष्म उवाच ॥

शकुनिर्मातुलस्तेऽसौ रथ एको नराधिप ।
प्रसज्य पाण्डवैर्वैरं योत्स्यते नात्र संशयः ॥ ००१ ॥

एतस्य सैन्या दुर्धर्षाः समरेऽप्रतियायिनः ।
विकृतायुधभूयिष्ठा वायुवेगसमा जवे ॥ ००२ ॥

द्रोणपुत्रो महेष्वासः सर्वेषामति धन्विनाम् ।
समरे चित्रयोधी च दृढास्त्रश्च महारथः ॥ ००३ ॥

एतस्य हि महाराज यथा गाण्डीवधन्वनः ।
शरासनाद्विनिर्मुक्ताः संसक्ता यान्ति सायकाः ॥ ००४ ॥

नैष शक्यो मया वीरः संख्यातुं रथसत्तमः ।
निर्दहेदपि लोकांस्त्रीनिच्छन्नेष महायशाः ॥ ००५ ॥

क्रोधस्तेजश्च तपसा संभृतोऽऽश्रमवासिना ।
द्रोणेनानुगृहीतश्च दिव्यैरस्त्रैरुदारधीः ॥ ००६ ॥

दोषस्त्वस्य महानेको येनैष भरतर्षभ ।
न मे रथो नातिरथो मतः पार्थिवसत्तम ॥ ००७ ॥

जीवितं प्रियमत्यर्थमायुष्कामः सदा द्विजः ।
न ह्यस्य सदृशः कश्चिदुभयोः सेनयोरपि ॥ ००८ ॥

हन्यादेकरथेनैव देवानामपि वाहिनीम् ।
वपुष्मांस्तलघोषेण स्फोटयेदपि पर्वतान् ॥ ००९ ॥

असंख्येयगुणो वीरः प्रहर्ता दारुणद्युतिः ।
दण्डपाणिरिवासह्यः कालवत्प्रचरिष्यति ॥ ०१० ॥

युगान्ताग्निसमः क्रोधे सिंहग्रीवो महामतिः ।
एष भारत युद्धस्य पृष्ठं संशमयिष्यति ॥ ०११ ॥

पिता त्वस्य महातेजा वृद्धोऽपि युवभिर्वरः ।
रणे कर्म महत्कर्ता तत्र मे नास्ति संशयः ॥ ०१२ ॥

अस्त्रवेगानिलोद्धूतः सेनाकक्षेन्धनोत्थितः ।
पाण्डुपुत्रस्य सैन्यानि प्रधक्ष्यति जये धृतः ॥ ०१३ ॥

रथयूथपयूथानां यूथपः स नरर्षभः ।
भारद्वाजात्मजः कर्ता कर्म तीव्रं हिताय वः ॥ ०१४ ॥

सर्वमूर्धाभिषिक्तानामाचार्यः स्थविरो गुरुः ।
गच्छेदन्तं सृञ्जयानां प्रियस्त्वस्य धनञ्जयः ॥ ०१५ ॥

नैष जातु महेष्वासः पार्थमक्लिष्टकारिणम् ।
हन्यादाचार्यकं दीप्तं संस्मृत्य गुणनिर्जितम् ॥ ०१६ ॥

श्लाघत्येष सदा वीरः पार्थस्य गुणविस्तरैः ।
पुत्रादभ्यधिकं चैव भारद्वाजोऽनुपश्यति ॥ ०१७ ॥

हन्यादेकरथेनैव देवगन्धर्वदानवान् ।
एकीभूतानपि रणे दिव्यैरस्त्रैः प्रतापवान् ॥ ०१८ ॥

पौरवो राजशार्दूलस्तव राजन्महारथः ।
मतो मम रथो वीर परवीररथारुजः ॥ ०१९ ॥

स्वेन सैन्येन सहितः प्रतपञ्शत्रुवाहिनीम् ।

प्रधक्ष्यति स पाञ्चालान्कक्षं कृष्णगतिर्यथा ॥ ०२० ॥

सत्यव्रतो रथवरो राजपुत्रो महारथः ।
तव राजन्रिपुबले कालवत्प्रचरिष्यति ॥ ०२१ ॥

एतस्य योधा राजेन्द्र विचित्रकवचायुधाः ।
विचरिष्यन्ति सङ्ग्रामे निघ्नन्तः शात्रवांस्तव ॥ ०२२ ॥

वृषसेनो रथाग्र्यस्ते कर्णपुत्रो महारथः ।
प्रधक्ष्यति रिपूणां ते बलानि बलिनां वरः ॥ ०२३ ॥

जलसंधो महातेजा राजन्रथवरस्तव ।
त्यक्ष्यते समरे प्राणान्मागधः परवीरहा ॥ ०२४ ॥

एष योत्स्यति सङ्ग्रामे गजस्कन्धविशारदः ।
रथेन वा महाबाहुः क्षपयञ्शत्रुवाहिनीम् ॥ ०२५ ॥

रथ एष महाराज मतो मम नरर्षभः ।
त्वदर्थे त्यक्ष्यति प्राणान्सह सैन्यो महारणे ॥ ०२६ ॥

एष विक्रान्तयोधी च चित्रयोधी च सङ्गरे ।
वीतभीश्चापि ते राजञ्शात्रवैः सह योत्स्यते ॥ ०२७ ॥

बाह्लीकोऽतिरथश्चैव समरे चानिवर्तिता ।
मम राजन्मतो युद्धे शूरो वैवस्वतोपमः ॥ ०२८ ॥

न ह्येष समरं प्राप्य निवर्तेत कथञ्चन ।
यथा सततगो राजन्नाभिहत्य परान्रणे ॥ ०२९ ॥

सेनापतिर्महाराज सत्यवांस्ते महारथः ।
रणेष्वद्भुतकर्मा च रथःपररथारुजः ॥ ०३० ॥

एतस्य समरं दृष्ट्वा न व्यथास्ति कथञ्चन ।
उत्स्मयन्नभ्युपैत्येष परान्रथपथे स्थितान्  ॥ ०३१  ॥

एष चारिषु विक्रान्तः कर्म सत्पुरुषोचितम् ।
कर्ता विमर्दे सुमहत्त्वदर्थे पुरुषोत्तमः  ॥ ०३२  ॥

अलायुधो राक्षसेन्द्रः क्रूरकर्मा महाबलः ।
हनिष्यति परान्राजन्पूर्ववैरमनुस्मरन्  ॥ ०३३  ॥

एष राक्षससैन्यानां सर्वेषां रथसत्तमः ।
मायावी दृढवैरश्च समरे विचरिष्यति  ॥ ०३४  ॥

प्राग्ज्योतिषाधिपो वीरो भगदत्तः प्रतापवान् ।
गजाङ्कुशधरश्रेष्ठो रथे चैव विशारदः  ॥ ०३५  ॥

एतेन युद्धमभवत्पुरा गाण्डीवधन्वनः ।
दिवसान्सुबहून्राजन्नुभयोर्जयगृद्धिनोः  ॥ ०३६  ॥

ततः सखायं गान्धारे मानयन्पाकशासनम् ।
अकरोत्संविदं तेन पाण्डवेन महात्मना  ॥ ०३७  ॥

एष योत्स्यति सङ्ग्रामे गजस्कन्धविशारदः ।
ऐरावतगतो राजा देवानामिव वासवः  ॥ ०३८  ॥

---

# अध्याय १६५

भीष्म उवाच  ॥

अचलो वृषकश्चैव भ्रातरौ सहितावुभौ ।
रथौ तव दुराधर्षौ शत्रून्विध्वंसयिष्यतः ॥ ००१ ॥

बलवन्तौ नरव्याघ्रौ दृढक्रोधौ प्रहारिणौ ।
गान्धारमुख्यौ तरुणौ दर्शनीयौ महाबलौ ॥ ००२ ॥

सखा ते दयितो नित्यं य एष रणकर्कशः ।
प्रोत्साहयति राजंस्त्वां विग्रहे पाण्डवैः सह ॥ ००३ ॥

परुषः कत्थनो नीचः कर्णो वैकर्तनस्तव ।
मन्त्री नेता च बन्धुश्च मानी चात्यन्तमुच्छ्रितः ॥ ००४ ॥

एष नैव रथः पूर्णो नाप्येवातिरथो नृप ।
वियुक्तः कवचेनैष सहजेन विचेतनः ॥ ००५ ॥

कुण्डलाभ्यां च दिव्याभ्यां वियुक्तः सततं घृणी ॥ ००५ ॥

अभिशापाच्च रामस्य ब्राह्मणस्य च भाषणात् ।
करणानां वियोगाच्च तेन मेऽर्धरथो मतः ॥ ००६ ॥

नैष फल्गुनमासाद्य पुनर्जीवन्विमोक्ष्यते ॥ ००६ ॥

सञ्जय उवाच ॥

ततोऽब्रवीन्महाबाहुर्द्रोणः शस्त्रभृतां वरः ।
एवमेतद्यथात्थ त्वं न मिथ्यास्तीति किञ्चन ॥ ००७ ॥

रणे रणेऽतिमानी च विमुखश्चैव दृश्यते ।
घृणी कर्णः प्रमादी च तेन मेऽर्धरथो मतः ॥ ००८ ॥

एतच्छ्रुत्वा तु राधेयः क्रोधादुत्फुल्ललोचनः ।
उवाच भीष्मं राजेन्द्र तुदन्वाग्भिः प्रतोदवत् ॥ ००९ ॥

पितामह यथेष्टं मां वाक्शरैरुपकृन्तसि ।
अनागसं सदा द्वेषादेवमेव पदे पदे ॥ ०१० ॥

मर्षयामि च तत्सर्वं दुर्योधनकृतेन वै ॥ ०१० ॥

त्वं तु मां मन्यसेऽशक्तं यथा कापुरुषं तथा ।
भवानर्धरथो मह्यं मतो नास्त्यत्र संशयः ॥ ०११ ॥

सर्वस्य जगतश्चैव गाङ्गेय न मृषा वदे ।
कुरूणामहितो नित्यं न च राजावबुध्यते ॥ ०१२ ॥

को हि नाम समानेषु राजसूदात्तकर्मसु ।
तेजोवधमिमं कुर्याद्विभेदयिषुराहवे ॥ ०१३ ॥

यथा त्वं गुणनिर्देशादपराधं चिकीर्षसि ॥ ०१३ ॥

न हायनैर्न पलितैर्न वित्तैर्न च बन्धुभिः ।
महारथत्वं संख्यातुं शक्यं क्षत्रस्य कौरव ॥ ०१४ ॥

बलज्येष्ठं स्मृतं क्षत्रं मन्त्रज्येष्ठा द्विजातयः ।
धनज्येष्ठाः स्मृता वैश्याः शूद्रास्तु वयसाधिकाः ॥ ०१५ ॥

यथेच्छकं स्वयङ्ग्राहाद्रथानतिरथांस्तथा ।
कामद्वेषसमायुक्तो मोहात्प्रकुरुते भवान् ॥ ०१६ ॥

दुर्योधन महाबाहो साधु सम्यगवेक्ष्यताम् ।
त्यज्यतां दुष्टभावोऽयं भीष्मः किल्बिषकृत्तव ॥ ०१७ ॥

भिन्ना हि सेना नृपते दुःसंधेया भवत्युत ।
मौलापि पुरुषव्याघ्र किमु नाना समुत्थिता ॥ ०१८ ॥

एषां द्वैधं समुत्पन्नं योधानां युधि भारत ।
तेजोवधो नः क्रियते प्रत्यक्षेण विशेषतः ॥ ०१९ ॥

रथानां क्व च विज्ञानं क्व च भीष्मोऽल्पचेतनः ।
अहमावारयिष्यामि पाण्डवानामनीकिनीम् ॥ ०२० ॥

आसाद्य माममोघेषुं गमिष्यन्ति दिशो दश ।
पाण्डवाः सहपञ्चालाः शार्दूलं वृषभा इव ॥ ०२१ ॥

क्व च युद्धविमर्दो वा मन्त्राः सुव्याहृतानि वा ।
क्व च भीष्मो गतवया मन्दात्मा कालमोहितः ॥ ०२२ ॥

स्पर्धते हि सदा नित्यं सर्वेण जगता सह ।
न चान्यं पुरुषं कञ्चिन्मन्यते मोघदर्शनः ॥ ०२३ ॥

श्रोतव्यं खलु वृद्धानामिति शास्त्रनिदर्शनम् ।
न त्वेवाप्यतिवृद्धानां पुनर्बाला हि ते मताः ॥ ०२४ ॥

अहमेको हनिष्यामि पाण्डवान्नात्र संशयः ।
सुयुद्धे राजशार्दूल यशो भीष्मं गमिष्यति ॥ ०२५ ॥

कृतः सेनापतिस्त्वेष त्वया भीष्मो नराधिप ।
सेनापतिं गुणो गन्ता न तु योधान्कथञ्चन ॥ ०२६ ॥

नाहं जीवति गाङ्गेये योत्स्ये राजन्कथञ्चन ।
हते तु भीष्मे योधास्मि सर्वैरेव महारथैः ॥ ०२७ ॥

# अध्याय १६६

भीष्म उवाच ॥

समुद्यतोऽयं भारो मे सुमहान्सागरोपमः ।
धार्तराष्ट्रस्य सङ्ग्रामे वर्षपूगाभिचिन्तितः ॥ ००१ ॥

तस्मिन्नभ्यागते काले प्रतप्ते लोमहर्षणे ।
मिथोभेदो न मे कार्यस्तेन जीवसि सूतज ॥ ००२ ॥

न ह्यहं नाद्य विक्रम्य स्थविरोऽपि शिशोस्तव ।
युद्धश्रद्धां रणे छिन्द्यां जीवितस्य च सूतज ॥ ००३ ॥

जामदग्न्येन रामेण महास्त्राणि प्रमुञ्चता ।
न मे व्यथाभवत्काचित्त्वं तु मे किं करिष्यसि ॥ ००४ ॥

कामं नैतत्प्रशंसन्ति सन्तोऽऽत्मबलसंस्तवम् ।
वक्ष्यामि तु त्वां संतप्तो निहीन कुलपांसन ॥ ००५ ॥

समेतं पार्थिवं क्षत्रं काशिराज्ञः स्वयंवरे ।
निर्जित्यैकरथेनैव यत्कन्यास्तरसा हृताः ॥ ००६ ॥

ईदृशानां सहस्राणि विशिष्टानामथो पुनः ।
मयैकेन निरस्तानि ससैन्यानि रणाजिरे ॥ ००७ ॥

त्वां प्राप्य वैरपुरुषं कुरूणामनयो महान् ।
उपस्थितो विनाशाय यतस्व पुरुषो भव ॥ ००८ ॥

युध्यस्व पार्थं समरे येन विस्पर्धसे सह ।

द्रक्ष्यामि त्वां विनिर्मुक्तमस्माद्युद्धात्सुदुर्मते ॥ ००९ ॥

सञ्जय उवाच ॥

तमुवाच ततो राजा धार्तराष्ट्रो महामनाः ।
मामवेक्षस्व गाङ्गेय कार्यं हि महदुद्यतम् ॥ ०१० ॥

चिन्त्यतामिदमेवाग्रे मम निःश्रेयसं परम् ।
उभावपि भवन्तौ मे महत्कर्म करिष्यतः ॥ ०११ ॥

भूयश्च श्रोतुमिच्छामि परेषां रथसत्तमान् ।
ये चैवातिरथास्तत्र तथैव रथयूथपाः ॥ ०१२ ॥

बलाबलममित्राणां श्रोतुमिच्छामि कौरव ।
प्रभातायां रजन्यां वै इदं युद्धं भविष्यति ॥ ०१३ ॥

भीष्म उवाच ॥

एते रथास्ते संख्यातास्तथैवातिरथा नृप ।
य चाप्यर्धरथा राजन्पाण्डवानामतः शृणु ॥ ०१४ ॥

यदि कौतूहलं तेऽद्य पाण्डवानां बले नृप ।
रथसंख्यां महाबाहो सहैभिर्वसुधाधिपैः ॥ ०१५ ॥

स्वयं राजा रथोदारः पाण्डवः कुन्तिनन्दनः ।
अग्निवत्समरे तात चरिष्यति न संशयः ॥ ०१६ ॥

भीमसेनस्तु राजेन्द्र रथोऽष्टगुणसंमितः ।
नागायुतबलो मानी तेजसा न स मानुषः ॥ ०१७ ॥

माद्रीपुत्रौ तु रथिनौ द्वावेव पुरुषर्षभौ ।

अश्विनाविव रूपेण तेजसा च समन्वितौ ॥ ०१८ ॥

एते चमूमुखगताः स्मरन्तः क्लेशमात्मनः ।
रुद्रवत्प्रचरिष्यन्ति तत्र मे नास्ति संशयः ॥ ०१९ ॥

सर्व एव महात्मानः शालस्कन्धा इवोद्गताः ।
प्रादेशेनाधिकाः पुम्भिरन्यैस्ते च प्रमाणतः ॥ ०२० ॥

सिंहसंहननाः सर्वे पाण्डुपुत्रा महाबलाः ।
चरितब्रह्मचर्याश्च सर्वे चातितपस्विनः ॥ ०२१ ॥

ह्रीमन्तः पुरुषव्याघ्रा व्याघ्रा इव बलोत्कटाः ।
जवे प्रहारे संमर्दे सर्व एवातिमानुषाः ॥ ०२२ ॥

सर्वे जितमहीपाला दिग्जये भरतर्षभ ॥ ०२२ ॥

न चैषां पुरुषाः केचिदायुधानि गदाः शरान् ।
विषहन्ति सदा कर्तुमधिज्यान्यपि कौरव ॥ ०२३ ॥

उद्यन्तुं वा गदां गुर्वीं शरान्वापि प्रकर्षितुम् ॥ ०२३ ॥

जवे लक्ष्यस्य हरणे भोज्ये पांसुविकर्षणे ।
बालैरपि भवन्तस्तैः सर्व एव विशेषिताः ॥ ०२४ ॥

ते ते सैन्यं समासाद्य व्याघ्रा इव बलोत्कटाः ।
विध्वंसयिष्यन्ति रणे मा स्म तैः सह सङ्गमः ॥ ०२५ ॥

एकैकशस्ते सङ्ग्रामे हन्युः सर्वान्महीक्षितः ।
प्रत्यक्षं तव राजेन्द्र राजसूये यथाभवत् ॥ ०२६ ॥

द्रौपद्याश्च परिक्लेशं द्यूते च परुषा गिरः ।

ते संस्मरन्तः सङ्ग्रामे विचरिष्यन्ति कालवत् ॥ ०२७ ॥

लोहिताक्षो गुडाकेशो नारायणसहायवान् ।
उभयोः सेनयोर्वीर रथो नास्तीह तादृशः ॥ ०२८ ॥

न हि देवेषु वा पूर्वं दानवेषूरगेषु वा ।
राक्षसेष्वथ यक्षेषु नरेषु कुत एव तु ॥ ०२९ ॥

भूतोऽथ वा भविष्यो वा रथः कश्चिन्मया श्रुतः ।
समायुक्तो महाराज यथा पार्थस्य धीमतः ॥ ०३० ॥

वासुदेवश्च संयन्ता योद्धा चैव धनञ्जयः ।
गाण्डीवं च धनुर्दिव्यं ते चाश्वा वातरंहसः ॥ ०३१ ॥

अभेद्यं कवचं दिव्यमक्षय्यौ च महेषुधी ।
अस्त्रग्रामश्च माहेन्द्रो रौद्रः कौबेर एव च ॥ ०३२ ॥

याम्यश्च वारुणश्चैव गदाश्चोग्रप्रदर्शनाः ।
वज्रादीनि च मुख्यानि नानाप्रहरणानि वै ॥ ०३३ ॥

दानवानां सहस्राणि हिरण्यपुरवासिनाम् ।
हतान्येकरथेनाजौ कस्तस्य सदृशो रथः ॥ ०३४ ॥

एष हन्याद्धि संरम्भी बलवान्सत्यविक्रमः ।
तव सेनां महाबाहुः स्वां चैव परिपालयन् ॥ ०३५ ॥

अहं चैनं प्रत्युदियामाचार्यो वा धनञ्जयम् ।
न तृतीयोऽस्ति राजेन्द्र सेनयोरुभयोरपि ॥ ०३६ ॥

य एनं शरवर्षाणि वर्षन्तमुदियाद्रथी ॥ ०३६ ॥

जीमूत इव घर्मान्ते महावातसमीरितः ।
समायुक्तस्तु कौन्तेयो वासुदेवसहायवान्  ॥ ०३७  ॥

तरुणश्च कृती चैव जीर्णावावामुभावपि  ॥ ०३७  ॥

सञ्जय उवाच  ॥

एतच्छ्रुत्वा तु भीष्मस्य राज्ञां दध्वंसिरे तदा ।
काञ्चनाङ्गदिनः पीना भुजाश्चन्दनरूषिताः  ॥ ०३८  ॥

मनोभिः सह सावेगैः संस्मृत्य च पुरातनम् ।
सामर्थ्यं पाण्डवेयानां यथाप्रत्यक्षदर्शनात्  ॥ ०३९  ॥

---

# अध्याय १६७

भीष्म उवाच  ॥

द्रौपदेया महाराज सर्वे पञ्च महारथाः ।
वैराटिरुत्तरश्चैव रथो मम महान्मतः  ॥ ००१  ॥

अभिमन्युर्महाराज रथयूथपयूथपः ।
समः पार्थेन समरे वासुदेवेन वा भवेत्  ॥ ००२  ॥

लघ्वस्त्रश्चित्रयोधी च मनस्वी दृढविक्रमः ।
संस्मरन्वै परिक्लेशं स्वपितुर्विक्रमिष्यति  ॥ ००३  ॥

सात्यकिर्माधवः शूरो रथयूथपयूथपः ।

एष वृष्णिप्रवीराणाममर्षी जितसाध्वसः ॥ ००४ ॥

उत्तमौजास्तथा राजन्नथो मम महान्मतः ।
युधामन्युश्च विक्रान्तो रथोदारो नरर्षभः ॥ ००५ ॥

एतेषां बहुसाहस्रा रथा नागा हयास्तथा ।
योत्स्यन्ते ते तनुं त्यक्त्वा कुन्तीपुत्रप्रियेप्सया ॥ ००६ ॥

पाण्डवैः सह राजेन्द्र तव सेनासु भारत ।
अग्निमारुतवद्राजन्नाह्वयन्तः परस्परम् ॥ ००७ ॥

अजेयौ समरे वृद्धौ विराटद्रुपदावुभौ ।
महारथौ महावीर्यौ मतौ मे पुरुषर्षभौ ॥ ००८ ॥

वयोवृद्धावपि तु तौ क्षत्रधर्मपरायणौ ।
यतिष्येते परं शक्त्या स्थितौ वीरगते पथि ॥ ००९ ॥

संबन्धकेन राजेन्द्र तौ तु वीर्यबलान्वयात् ।
आर्यवृत्तौ महेष्वासौ स्नेहपाशसितावुभौ ॥ ०१० ॥

कारणं प्राप्य तु नराः सर्व एव महाभुजाः ।
शूरा वा कातरा वापि भवन्ति नरपुङ्गव ॥ ०११ ॥

एकायनगतावेतौ पार्थेन दृढभक्तिकौ ।
त्यक्त्वा प्राणान्परं शक्त्या घटितारौ नराधिप ॥ ०१२ ॥

पृथगक्षौहिणीभ्यां तावुभौ संयति दारुणौ ।
संबन्धिभावं रक्षन्तौ महत्कर्म करिष्यतः ॥ ०१३ ॥

लोकवीरौ महेष्वासौ त्यक्तात्मानौ च भारत ।
प्रत्ययं परिरक्षन्तौ महत्कर्म करिष्यतः ॥ ०१४ ॥

# अध्याय १६८

भीष्म उवाच ॥

पाञ्चालराजस्य सुतो राजन्परपुरञ्जयः ।
शिखण्डी रथमुख्यो मे मतः पार्थस्य भारत ॥ ००१ ॥

एष योत्स्यति सङ्ग्रामे नाशयन्पूर्वसंस्थितिम् ।
परं यशो विप्रथयंस्तव सेनासु भारत ॥ ००२ ॥

एतस्य बहुलाः सेनाः पाञ्चालाश्च प्रभद्रकाः ।
तेनासौ रथवंशेन महत्कर्म करिष्यति ॥ ००३ ॥

धृष्टद्युम्नश्च सेनानीः सर्वसेनासु भारत ।
मतो मेऽतिरथो राजन्द्रोणशिष्यो महारथः ॥ ००४ ॥

एष योत्स्यति सङ्ग्रामे सूदयन्वै परान्रणे ।
भगवानिव सङ्क्रुद्धः पिनाकी युगसङ्क्षये ॥ ००५ ॥

एतस्य तद्रथानीकं कथयन्ति रणप्रियाः ।
बहुत्वात्सागरप्रख्यं देवानामिव संयुगे ॥ ००६ ॥

क्षत्रधर्मा तु राजेन्द्र मतो मेऽर्धरथो नृप ।
धृष्टद्युम्नस्य तनयो बाल्यान्नातिकृतश्रमः ॥ ००७ ॥

शिशुपालसुतो वीरश्चेदिराजो महारथः ।
धृष्टकेतुर्महेष्वासः संबन्धी पाण्डवस्य ह ॥ ००८ ॥

एष चेदिपतिः शूरः सह पुत्रेण भारत ।
महारथेनासुकरं महत्कर्म करिष्यति ॥ ००९ ॥

क्षत्रधर्मरतो मह्यं मतः परपुरञ्जयः ।
क्षत्रदेवस्तु राजेन्द्र पाण्डवेषु रथोत्तमः ॥ ०१० ॥

जयन्तश्चामितौजाश्च सत्यजिच्च महारथः ॥ ०१० ॥

महारथा महात्मानः सर्वे पाञ्चालसत्तमाः ।
योत्स्यन्ते समरे तात संरब्धा इव कुञ्जराः ॥ ०११ ॥

अजो भोजश्च विक्रान्तौ पाण्डवेषु महारथौ ।
पाण्डवानां सहायार्थे परं शक्त्या यतिष्यतः ॥ ०१२ ॥

शीघ्रास्त्रौ चित्रयोद्धारौ कृतिनौ दृढविक्रमौ ॥ ०१२ ॥

केकयाः पञ्च राजेन्द्र भ्रातरो युद्धदुर्मदाः ।
सर्व एते रथोदाराः सर्वे लोहितकध्वजाः ॥ ०१३ ॥

काशिकः सुकुमारश्च नीलो यश्चापरो नृपः ।
सूर्यदत्तश्च शङ्खश्च मदिराश्वश्च नामतः ॥ ०१४ ॥

सर्व एते रथोदाराः सर्वे चाहवलक्षणाः ।
सर्वास्त्रविदुषः सर्वे महात्मानो मता मम ॥ ०१५ ॥

वार्धक्षेमिर्महाराज रथो मम महान्मतः ।
चित्रायुधश्च नृपतिर्मतो मे रथसत्तमः ॥ ०१६ ॥

स हि सङ्ग्रामशोभी च भक्तश्चापि किरीटिनः ॥ ०१६ ॥

चेकितानः सत्यधृतिः पाण्डवानां महारथौ ।
द्वाविमौ पुरुषव्याघ्रौ रथोदारौ मतौ मम ॥ ०१७ ॥

व्याघ्रदत्तश्च राजेन्द्र चन्द्रसेनश्च भारत ।
मतौ मम रथोदारौ पाण्डवानां न संशयः ॥ ०१८ ॥

सेनाबिन्दुश्च राजेन्द्र क्रोधहन्ता च नामतः ।
यः समो वासुदेवेन भीमसेनेन चाभिभूः ॥ ०१९ ॥

स योत्स्यतीह विक्रम्य समरे तव सैनिकैः ॥ ०१९ ॥

मां द्रोणं च कृपं चैव यथा संमन्यते भवान् ।
तथा स समरश्लाघी मन्तव्यो रथसत्तमः ॥ ०२० ॥

काश्यः परमशीघ्रास्त्रः श्लाघनीयो रथोत्तमः ।
रथ एकगुणो मह्यं मतः परपुरञ्जयः ॥ ०२१ ॥

अयं च युधि विक्रान्तो मन्तव्योऽष्टगुणो रथः ।
सत्यजित्समरश्लाघी द्रुपदस्यात्मजो युवा ॥ ०२२ ॥

गतः सोऽतिरथत्वं हि धृष्टद्युम्नेन संमितः ।
पाण्डवानां यशस्कामः परं कर्म करिष्यति ॥ ०२३ ॥

अनुरक्तश्च शूरश्च रथोऽयमपरो महान् ।
पाण्ड्यराजो महावीर्यः पाण्डवानां धुरंधरः ॥ ०२४ ॥

दृढधन्वा महेष्वासः पाण्डवानां रथोत्तमः ।
श्रेणिमान्कौरवश्रेष्ठ वसुदानश्च पार्थिवः ॥ ०२५ ॥

उभावेतावतिरथौ मतौ मम परंतप ॥ ०२५ ॥

# अध्याय १६९

भीष्म उवाच ॥

रोचमानो महाराज पाण्डवानां महारथः ।
योत्स्यतेऽमरवत्संख्ये परसैन्येषु भारत ॥ ००१ ॥

पुरुजित्कुन्तिभोजश्च महेष्वासो महाबलः ।
मातुलो भीमसेनस्य स च मेऽतिरथो मतः ॥ ००२ ॥

एष वीरो महेष्वासः कृती च निपुणश्च ह ।
चित्रयोधी च शक्तश्च मतो मे रथपुङ्गवः ॥ ००३ ॥

स योत्स्यति हि विक्रम्य मघवानिव दानवैः ।
योधाश्चास्य परिख्याताः सर्वे युद्धविशारदाः ॥ ००४ ॥

भागिनेयकृते वीरः स करिष्यति सङ्गरे ।
सुमहत्कर्म पाण्डूनां स्थितः प्रियहिते नृपः ॥ ००५ ॥

भैमसेनिर्महाराज हैडिम्बो राक्षसेश्वरः ।
मतो मे बहुमायावी रथयूथपयूथपः ॥ ००६ ॥

योत्स्यते समरे तात मायाभिः समरप्रियः ।
ये चास्य राक्षसाः शूराः सचिवा वशवर्तिनः ॥ ००७ ॥

एते चान्ये च बहवो नानाजनपदेश्वराः ।
समेताः पाण्डवस्यार्थे वासुदेवपुरोगमाः ॥ ००८ ॥

एते प्राधान्यतो राजन्पाण्डवस्य महात्मनः ।
रथाश्चातिरथाश्चैव ये चाप्यर्धरथा मताः ॥ ००९ ॥

नेष्यन्ति समरे सेनां भीमां यौधिष्ठिरीं नृप ।
महेन्द्रेणेव वीरेण पाल्यमानां किरीटिना ॥ ०१० ॥

तैरहं समरे वीर त्वामायद्भिर्जयैषिभिः ।
योत्स्यामि जयमाकाङ्क्षन्नथ वा निधनं रणे ॥ ०११ ॥

पार्थं च वासुदेवं च चक्रगाण्डीवधारिणौ ।
संध्यागताविवार्केन्दू समेष्ये पुरुषोत्तमौ ॥ ०१२ ॥

ये चैव ते रथोदाराः पाण्डुपुत्रस्य सैनिकाः ।
सहसैन्यानहं तांश्च प्रतीयां रणमूर्धनि ॥ ०१३ ॥

एते रथाश्चातिरथाश्च तुभ्यं ; यथाप्रधानं नृप कीर्तिता मया ।
तथा राजन्नर्धरथाश्च के चि ;त्तथैव तेषामपि कौरवेन्द्र ॥ ०१४ ॥

अर्जुनं वासुदेवं च ये चान्ये तत्र पार्थिवाः ।
सर्वानावारयिष्यामि यावद्द्रक्ष्यामि भारत ॥ ०१५ ॥

पाञ्चाल्यं तु महाबाहो नाहं हन्यां शिखण्डिनम् ।
उद्यतेषुमभिप्रेक्ष्य प्रतियुध्यन्तमाहवे ॥ ०१६ ॥

लोकस्तद्वेद यदहं पितुः प्रियचिकीर्षया ।
प्राप्तं राज्यं परित्यज्य ब्रह्मचर्ये धृतव्रतः ॥ ०१७ ॥

चित्राङ्गदं कौरवाणामहं राज्येऽभ्यषेचयम् ।
विचित्रवीर्यं च शिशुं यौवराज्येऽभ्यषेचयम् ॥ ०१८ ॥

देवव्रतत्वं विख्याप्य पृथिव्यां सर्वराजसु ।

नैव हन्यां स्त्रियं जातु न स्त्रीपूर्वं कथञ्चन ॥ ०१९ ॥

स हि स्त्रीपूर्वको राजञ्शिखण्डी यदि ते श्रुतः ।
कन्या भूत्वा पुमाञ्जातो न योत्स्ये तेन भारत ॥ ०२० ॥

सर्वांस्त्वन्यान्हनिष्यामि पार्थिवान्भरतर्षभ ।
यान्समेष्यामि समरे न तु कुन्तीसुतान्नृप ॥ ०२१ ॥

---

# अम्बोपाख्यानपर्व

## अध्याय १७०

दुर्योधन उवाच ॥

किमर्थं भरतश्रेष्ठ न हन्यास्त्वं शिखण्डिनम् ।
उद्यतेषुमथो दृष्ट्वा समरेष्वाततायिनम् ॥ ००१ ॥

पूर्वमुक्त्वा महाबाहो पाण्डवान्सह सोमकैः ।
वधिष्यामीति गाङ्गेय तन्मे ब्रूहि पितामह ॥ ००२ ॥

भीष्म उवाच ॥

शृणु दुर्योधन कथां सहैभिर्वसुधाधिपैः ।
यदर्थं युधि संप्रेक्ष्य नाहं हन्यां शिखण्डिनम् ॥ ००३ ॥

महाराजो मम पिता शंतनुर्भरतर्षभः ।
दिष्टान्तं प्राप धर्मात्मा समये पुरुषर्षभ ॥ ००४ ॥

ततोऽहं भरतश्रेष्ठ प्रतिज्ञां परिपालयन् ।
चित्राङ्गदं भ्रातरं वै महाराज्येऽभ्यषेचयम्  ॥ ००५  ॥

तस्मिंश्च निधनं प्राप्ते सत्यवत्या मते स्थितः ।
विचित्रवीर्यं राजानमभ्यषिञ्चं यथाविधि  ॥ ००६  ॥

मयाभिषिक्तो राजेन्द्र यवीयानपि धर्मतः ।
विचित्रवीर्यो धर्मात्मा मामेव समुदैक्षत  ॥ ००७  ॥

तस्य दारक्रियां तात चिकीर्षुरहमप्युत ।
अनुरूपादिव कुलादिति चिन्त्य मनो दधे  ॥ ००८  ॥

तथाश्रौषं महाबाहो तिस्रः कन्याः स्वयंवरे ।
रूपेणाप्रतिमाः सर्वाः काशिराजसुतास्तदा  ॥ ००९  ॥

अम्बा चैवाम्बिका चैव तथैवाम्बालिकापरा  ॥ ००९  ॥

राजानश्च समाहूताः पृथिव्यां भरतर्षभ ।
अम्बा ज्येष्ठाभवत्तासामम्बिका त्वथ मध्यमा  ॥ ०१०  ॥

अम्बालिका च राजेन्द्र राजकन्या यवीयसी  ॥ ०१०  ॥

सोऽहमेकरथेनैव गतः काशिपतेः पुरीम् ।
अपश्यं ता महाबाहो तिस्रः कन्याः स्वलङ्कृताः  ॥ ०११  ॥

राज्ञश्चैव समावृत्तान्पार्थिवान्पृथिवीपते  ॥ ०११  ॥

ततोऽहं तान्नृपान्सर्वानाहूय समरे स्थितान् ।
रथमारोपयां चक्रे कन्यास्ता भरतर्षभ  ॥ ०१२  ॥

वीर्यशुल्काश्च ता ज्ञात्वा समारोप्य रथं तदा ।
अवोचं पार्थिवान्सर्वानहं तत्र समागतान् ॥ ०१३ ॥

भीष्मः शांतनवः कन्या हरतीति पुनः पुनः ॥ ०१३ ॥

ते यतध्वं परं शक्त्या सर्वे मोक्षाय पार्थिवाः ।
प्रसह्य हि नयाम्येष मिषतां वो नराधिपाः ॥ ०१४ ॥

ततस्ते पृथिवीपालाः समुत्पेतुरुदायुधाः ।
योगो योग इति क्रुद्धाः सारथींश्चाप्यचोदयन् ॥ ०१५ ॥

ते रथैर्मेघसङ्काशैर्गजैश्च गजयोधिनः ।
पृष्ठ्यैश्चाश्वैर्महीपालाः समुत्पेतुरुदायुधाः ॥ ०१६ ॥

ततस्ते मां महीपालाः सर्व एव विशां पते ।
रथव्रातेन महता सर्वतः पर्यवारयन् ॥ ०१७ ॥

तानहं शरवर्षेण महता प्रत्यवारयम् ।
सर्वान्नृपांश्चाप्यजयं देवराडिव दानवान् ॥ ०१८ ॥

तेषामापततां चित्रान्ध्वजान्हेमपरिष्कृतान् ।
एकैकेन हि बाणेन भूमौ पातितवानहम् ॥ ०१९ ॥

हयांश्चैषां गजांश्चैव सारथींश्चाप्यहं रणे ।
अपातयं शरैर्दीप्तैः प्रहसन्पुरुषर्षभ ॥ ०२० ॥

ते निवृत्ताश्च भग्नाश्च दृष्ट्वा तल्लाघवं मम ।
अथाहं हास्तिनपुरमायां जित्वा महीक्षितः ॥ ०२१ ॥

अतोऽहं ताश्च कन्या वै भ्रातुरर्थाय भारत ।
तच्च कर्म महाबाहो सत्यवत्यै न्यवेदयम् ॥ ०२२ ॥

# अध्याय १७१

भीष्म उवाच ॥

ततोऽहं भरतश्रेष्ठ मातरं वीरमातरम् ।
अभिगम्योपसङ्गृह्य दाशेयीमिदमब्रुवम् ॥ ००१ ॥

इमाः काशिपतेः कन्या मया निर्जित्य पार्थिवान् ।
विचित्रवीर्यस्य कृते वीर्यशुल्का उपार्जिताः ॥ ००२ ॥

ततो मूर्धन्युपाघ्राय पर्यश्रुनयना नृप ।
आह सत्यवती हृष्टा दिष्ट्या पुत्र जितं त्वया ॥ ००३ ॥

सत्यवत्यास्त्वनुमते विवाहे समुपस्थिते ।
उवाच वाक्यं सव्रीडा ज्येष्ठा काशिपतेः सुता ॥ ००४ ॥

भीष्म त्वमसि धर्मज्ञः सर्वशास्त्रविशारदः ।
श्रुत्वा च धर्म्यं वचनं मह्यं कर्तुमिहार्हसि ॥ ००५ ॥

मया शाल्वपतिः पूर्वं मनसाभिवृतो वरः ।
तेन चास्मि वृता पूर्वं रहस्यविदिते पितुः ॥ ००६ ॥

कथं मामन्यकामां त्वं राजञ्शास्त्रमधीत्य वै ।
वासयेथा गृहे भीष्म कौरवः सन्विशेषतः ॥ ००७ ॥

एतद्बुद्ध्या विनिश्चित्य मनसा भरतर्षभ ।
यत्क्षमं ते महाबाहो तदिहारब्धुमर्हसि ॥ ००८ ॥

स मां प्रतीक्षते व्यक्तं शाल्वराजो विशां पते ।
कृपां कुरु महाबाहो मयि धर्मभृतां वर ॥ ००९ ॥

त्वं हि सत्यव्रतो वीर पृथिव्यामिति नः श्रुतम् ॥ ००९ ॥

---

# अध्याय १७२

भीष्म उवाच ॥

ततोऽहं समनुज्ञाप्य कालीं सत्यवतीं तदा ।
मन्त्रिणश्च द्विजांश्चैव तथैव च पुरोहितान् ॥ ००१ ॥

समनुज्ञासिषं कन्यां ज्येष्ठामम्बां नराधिप ॥ ००१ ॥

अनुज्ञाता ययौ सा तु कन्या शाल्वपतेः पुरम् ।
वृद्धैर्द्विजातिभिर्गुप्ता धात्र्या चानुगता तदा ॥ ००२ ॥

अतीत्य च तमध्वानमाससाद नराधिपम् ॥ ००२ ॥

सा तमासाद्य राजानं शाल्वं वचनमब्रवीत् ।
आगताहं महाबाहो त्वामुद्दिश्य महाद्युते ॥ ००३ ॥

तामब्रवीच्छाल्वपतिः स्मयन्निव विशां पते ।
त्वयान्यपूर्वया नाहं भार्यार्थी वरवर्णिनि ॥ ००४ ॥

गच्छ भद्रे पुनस्तत्र सकाशं भारतस्य वै ।
नाहमिच्छामि भीष्मेण गृहीतां त्वां प्रसह्य वै ॥ ००५ ॥

त्वं हि निर्जित्य भीष्मेण नीता प्रीतिमती तदा ।
परामृश्य महायुद्धे निर्जित्य पृथिवीपतीन् ॥ ००६ ॥

नाहं त्वय्यन्यपूर्वायां भार्यार्थी वरवर्णिनि ॥ ००६ ॥

कथमस्मद्विधो राजा परपूर्वां प्रवेशयेत् ।
नारीं विदितविज्ञानः परेषां धर्ममादिशन् ॥ ००७ ॥

यथेष्टं गम्यतां भद्रे मा ते कालोऽत्यगादयम् ॥ ००७ ॥

अम्बा तमब्रवीद्राजन्ननङ्गशरपीडिता ।
मैवं वद महीपाल नैतदेवं कथञ्चन ॥ ००८ ॥

नास्मि प्रीतिमती नीता भीष्मेणामित्रकर्शन ।
बलान्नीतास्मि रुदती विद्राव्य पृथिवीपतीन् ॥ ००९ ॥

भजस्व मां शाल्वपते भक्तां बालामनागसम् ।
भक्तानां हि परित्यागो न धर्मेषु प्रशस्यते ॥ ०१० ॥

साहमामन्त्र्य गाङ्गेयं समरेष्वनिवर्तिनम् ।
अनुज्ञाता च तेनैव तवैव गृहमागता ॥ ०११ ॥

न स भीष्मो महाबाहुर्मामिच्छति विशां पते ।
भ्रातृहेतोः समारम्भो भीष्मस्येति श्रुतं मया ॥ ०१२ ॥

भगिन्यौ मम ये नीते अम्बिकाम्बालिके नृप ।
प्रादाद्विचित्रवीर्याय गाङ्गेयो हि यवीयसे ॥ ०१३ ॥

यथा शाल्वपते नान्यं नरं ध्यामि कथञ्चन ।
त्वामृते पुरुषव्याघ्र तथा मूर्धानमालभे ॥ ०१४ ॥

न चान्यपूर्वा राजेन्द्र त्वामहं समुपस्थिता ।
सत्यं ब्रवीमि शाल्वैतत्सत्येनात्मानमालभे ॥ ०१५ ॥

भजस्व मां विशालाक्ष स्वयं कन्यामुपस्थिताम् ।
अनन्यपूर्वां राजेन्द्र त्वत्प्रसादाभिकाङ्क्षिणीम् ॥ ०१६ ॥

तामेवं भाषमाणां तु शाल्वः काशिपतेः सुताम् ।
अत्यजद्भरतश्रेष्ठ त्वचं जीर्णामिवोरगः ॥ ०१७ ॥

एवं बहुविधैर्वाक्यैर्याच्यमानस्तयानघ ।
नाश्रद्दधच्छाल्वपतिः कन्याया भरतर्षभ ॥ ०१८ ॥

ततः सा मन्युनाविष्टा ज्येष्ठा काशिपतेः सुता ।
अब्रवीत्साश्रुनयना बाष्पविह्वलया गिरा ॥ ०१९ ॥

त्वया त्यक्ता गमिष्यामि यत्र यत्र विशां पते ।
तत्र मे सन्तु गतयः सन्तः सत्यं यथाब्रुवम् ॥ ०२० ॥

एवं संभाषमाणां तु नृशंसः शाल्वराट्तदा ।
पर्यत्यजत कौरव्य करुणं परिदेवतीम् ॥ ०२१ ॥

गच्छ गच्छेति तां शाल्वः पुनः पुनरभाषत ।
बिभेमि भीष्मात्सुश्रोणि त्वं च भीष्मपरिग्रहः ॥ ०२२ ॥

एवमुक्ता तु सा तेन शाल्वेनादीर्घदर्शिना ।
निश्चक्राम पुराद्दीना रुदती कुररी यथा ॥ ०२३ ॥

# अध्याय १७३

भीष्म उवाच ॥

सा निष्क्रमन्ती नगराच्चिन्तयामास भारत ।
पृथिव्यां नास्ति युवतिर्विषमस्थतरा मया ॥ ००१ ॥

बान्धवैर्विप्रहीनास्मि शाल्वेन च निराकृता ॥ ००१ ॥

न च शक्यं पुनर्गन्तुं मया वारणसाह्वयम् ।
अनुज्ञातास्मि भीष्मेण शाल्वमुद्दिश्य कारणम् ॥ ००२ ॥

किं नु गर्हाम्यथात्मानमथ भीष्मं दुरासदम् ।
आहो स्वित्पितरं मूढं यो मेऽकार्षीत्स्वयंवरम् ॥ ००३ ॥

ममायं स्वकृतो दोषो याहं भीष्मरथात्तदा ।
प्रवृत्ते वैशसे युद्धे शाल्वार्थं नापतं पुरा ॥ ००४ ॥

तस्येयं फलनिर्वृत्तिर्यदापन्नास्मि मूढवत् ॥ ००४ ॥

धिग्भीष्मं धिक्च मे मन्दं पितरं मूढचेतसम् ।
येनाहं वीर्यशुल्केन पण्यस्त्रीवत्प्रवेरिता ॥ ००५ ॥

धिङ्मां धिक्शाल्वराजानं धिग्धातारमथापि च ।
येषां दुर्नीतभावेन प्राप्तास्म्यापदमुत्तमाम् ॥ ००६ ॥

सर्वथा भागधेयानि स्वानि प्राप्नोति मानवः ।
अनयस्यास्य तु मुखं भीष्मः शांतनवो मम ॥ ००७ ॥

सा भीष्मे प्रतिकर्तव्यमहं पश्यामि सांप्रतम् ।
तपसा वा युधा वापि दुःखहेतुः स मे मतः ॥ ००८ ॥

को नु भीष्मं युधा जेतुमुत्सहेत महीपतिः ॥ ००८ ॥

एवं सा परिनिश्चित्य जगाम नगराद्बहिः ।
आश्रमं पुण्यशीलानां तापसानां महात्मनाम् ॥ ००९ ॥

ततस्तामवसद्रात्रिं तापसैः परिवारिता ॥ ००९ ॥

आचख्यौ च यथा वृत्तं सर्वमात्मनि भारत ।
विस्तरेण महाबाहो निखिलेन शुचिस्मिता ॥ ०१० ॥

हरणं च विसर्गं च शाल्वेन च विसर्जनम् ॥ ०१० ॥

ततस्तत्र महानासीद्ब्राह्मणः संशितव्रतः ।
शैखावत्यस्तपोवृद्धः शास्त्रे चारण्यके गुरुः ॥ ०११ ॥

आर्तां तामाह स मुनिः शैखावत्यो महातपाः ।
निःश्वसन्तीं सतीं बालां दुःखशोकपरायणाम् ॥ ०१२ ॥

एवं गते किं नु भद्रे शक्यं कर्तुं तपस्विभिः ।
आश्रमस्थैर्महाभागैस्तपोनित्यैर्महात्मभिः ॥ ०१३ ॥

सा त्वेनमब्रवीद्राजन्क्रियतां मदनुग्रहः ।
प्रव्राजितुमिहेच्छामि तपस्तप्स्यामि दुश्चरम् ॥ ०१४ ॥

मयैवैतानि कर्माणि पूर्वदेहेषु मूढया ।
कृतानि नूनं पापानि तेषामेतत्फलं ध्रुवम् ॥ ०१५ ॥

नोत्सहेयं पुनर्गन्तुं स्वजनं प्रति तापसाः ।
प्रत्याख्याता निरानन्दा शाल्वेन च निराकृता ॥ ०१६ ॥

उपदिष्टमिहेच्छामि तापस्यं वीतकल्मषाः ।
युष्माभिर्देवसङ्काशाः कृपा भवतु वो मयि ॥ ०१७ ॥

स तामाश्वासयत्कन्यां दृष्टान्तागमहेतुभिः ।
सान्त्वयामास कार्यं च प्रतिजज्ञे द्विजैः सह ॥ ०१८ ॥

---

# अध्याय १७४

भीष्म उवाच ॥

ततस्ते तापसाः सर्वे कार्यवन्तोऽभवंस्तदा ।
तां कन्यां चिन्तयन्तो वै किं कार्यमिति धर्मिणः ॥ ००१ ॥

केचिदाहुः पितुर्वेश्म नीयतामिति तापसाः ।
केचिदस्मदुपालम्भे मतिं चक्रुर्द्विजोत्तमाः ॥ ००२ ॥

केचिच्छाल्वपतिं गत्वा नियोज्यमिति मेनिरे ।
नेति केचिद्व्यवस्यन्ति प्रत्याख्याता हि तेन सा ॥ ००३ ॥

एवं गते किं नु शक्यं भद्रे कर्तुं मनीषिभिः ।
पुनरूचुश्च ते सर्वे तापसाः संशितव्रताः ॥ ००४ ॥

अलं प्रव्रजितेनेह भद्रे शृणु हितं वचः ।
इतो गच्छस्व भद्रं ते पितुरेव निवेशनम् ॥ ००५ ॥

प्रतिपत्स्यति राजा स पिता ते यदनन्तरम् ।
तत्र वत्स्यसि कल्याणि सुखं सर्वगुणान्विता ॥ ००६ ॥

न च तेऽन्या गतिर्न्याय्या भवेद्भद्रे यथा पिता ॥ ००६ ॥

पतिर्वापि गतिर्नार्याः पिता वा वरवर्णिनि ।
गतिः पतिः समस्थाया विषमे तु पिता गतिः ॥ ००७ ॥

प्रव्रज्या हि सुदुःखेयं सुकुमार्या विशेषतः ।
राजपुत्र्याः प्रकृत्या च कुमार्यास्तव भामिनि ॥ ००८ ॥

भद्रे दोषा हि विद्यन्ते बहवो वरवर्णिनि ।
आश्रमे वै वसन्त्यास्ते न भवेयुः पितुर्गृहे ॥ ००९ ॥

ततस्तु तेऽब्रुवन्वाक्यं ब्राह्मणास्तां तपस्विनीम् ।
त्वामिहैकाकिनीं दृष्ट्वा निर्जने गहने वने ॥ ०१० ॥

प्रार्थयिष्यन्ति राजेन्द्रास्तस्मान्मैवं मनः कृथाः ॥ ०१० ॥

अम्बोवाच ॥

न शक्यं काशिनगरीं पुनर्गन्तुं पितुर्गृहान् ।
अवज्ञाता भविष्यामि बान्धवानां न संशयः ॥ ०११ ॥

उषिता ह्यन्यथा बाल्ये पितुर्वेश्मनि तापसाः ।
नाहं गमिष्ये भद्रं वस्तत्र यत्र पिता मम ॥ ०१२ ॥

तपस्तप्तुमभीप्सामि तापसैः परिपालिता ॥ ०१२ ॥

यथा परेऽपि मे लोके न स्यादेवं महात्ययः ।
दौर्भाग्यं ब्राह्मणश्रेष्ठास्तस्मात्तप्स्याम्यहं तपः ॥ ०१३ ॥

भीष्म उवाच ॥

इत्येवं तेषु विप्रेषु चिन्तयत्सु तथा तथा ।
राजर्षिस्तद्वनं प्राप्तस्तपस्वी होत्रवाहनः ॥ ०१४ ॥

ततस्ते तापसाः सर्वे पूजयन्ति स्म तं नृपम् ।
पूजाभिः स्वागताद्याभिरासनेनोदकेन च ॥ ०१५ ॥

तस्योपविष्टस्य ततो विश्रान्तस्योपशृण्वतः ।
पुनरेव कथां चक्रुः कन्यां प्रति वनौकसः ॥ ०१६ ॥

अम्बायास्तां कथां श्रुत्वा काशिराज्ञश्च भारत ।
स वेपमान उत्थाय मातुरस्याः पिता तदा ॥ ०१७ ॥

तां कन्यामङ्कमारोप्य पर्याश्वासयत प्रभो ॥ ०१७ ॥

स तामपृच्छत्कात्स्न्र्येन व्यसनोत्पत्तिमादितः ।
सा च तस्मै यथावृत्तं विस्तरेण न्यवेदयत् ॥ ०१८ ॥

ततः स राजर्षिरभूद्दुःखशोकसमन्वितः ।
कार्यं च प्रतिपेदे तन्मनसा सुमहातपाः ॥ ०१९ ॥

अब्रवीद्वेपमानश्च कन्यामार्तां सुदुःखितः ।
मा गाः पितृगृहं भद्रे मातुस्ते जनको ह्यहम् ॥ ०२० ॥

दुःखं छेत्स्यामि तेऽहं वै मयि वर्तस्व पुत्रिके ।
पर्याप्तं ते मनः पुत्रि यदेवं परिशुष्यसि ॥ ०२१ ॥

गच्छ मद्वचनाद्रामं जामदग्न्यं तपस्विनम् ।
रामस्तव महद्दुःखं शोकं चापनयिष्यति ॥ ०२२ ॥

हनिष्यति रणे भीष्मं न करिष्यति चेद्वचः ॥ ०२२ ॥

तं गच्छ भार्गवश्रेष्ठं कालाग्निसमतेजसम् ।
प्रतिष्ठापयिता स त्वां समे पथि महातपाः ॥ ०२३ ॥

ततस्तु सस्वरं बाष्पमुत्सृजन्ती पुनः पुनः ।
अब्रवीत्पितरं मातुः सा तदा होत्रवाहनम् ॥ ०२४ ॥

अभिवादयित्वा शिरसा गमिष्ये तव शासनात् ।
अपि नामाद्य पश्येयमार्यं तं लोकविश्रुतम् ॥ ०२५ ॥

कथं च तीव्रं दुःखं मे हनिष्यति स भार्गवः ।
एतदिच्छाम्यहं श्रोतुमथ यास्यामि तत्र वै ॥ ०२६ ॥

---

# अध्याय १७५

होत्रवाहन उवाच ॥

रामं द्रक्ष्यसि वत्से त्वं जामदग्न्यं महावने ।
उग्रे तपसि वर्तन्तं सत्यसंधं महाबलम् ॥ ००१ ॥

महेन्द्रे वै गिरिश्रेष्ठे रामं नित्यमुपासते ।
ऋषयो वेदविदुषो गन्धर्वाप्सरसस्तथा ॥ ००२ ॥

तत्र गच्छस्व भद्रं ते ब्रूयाश्चैनं वचो मम ।
अभिवाद्य पूर्वं शिरसा तपोवृद्धं दृढव्रतम् ॥ ००३ ॥

ब्रूयाश्चैनं पुनर्भद्रे यत्ते कार्यं मनीषितम् ।
मयि सङ्कीर्तिते रामः सर्वं तत्ते करिष्यति ॥ ००४ ॥

मम रामः सखा वत्से प्रीतियुक्तः सुहृच्च मे ।
जमदग्निसुतो वीरः सर्वशस्त्रभृतां वरः ॥ ००५ ॥

एवं ब्रुवति कन्यां तु पार्थिवे होत्रवाहने ।
अकृतव्रणः प्रादुरासीद्रामस्यानुचरः प्रियः ॥ ००६ ॥

ततस्ते मुनयः सर्वे समुत्तस्थुः सहस्रशः ।
स च राजा वयोवृद्धः सृञ्जयो होत्रवाहनः ॥ ००७ ॥

ततः पृष्ट्वा यथान्यायमन्योन्यं ते वनौकसः ।
सहिता भरतश्रेष्ठ निषेदुः परिवार्य तम् ॥ ००८ ॥

ततस्ते कथयामासुः कथास्तास्ता मनोरमाः ।
कान्ता दिव्याश्च राजेन्द्र प्रीतिहर्षमुदा युताः ॥ ००९ ॥

ततः कथान्ते राजर्षिर्महात्मा होत्रवाहनः ।
रामं श्रेष्ठं महर्षीणामपृच्छदकृतव्रणम् ॥ ०१० ॥

क्व संप्रति महाबाहो जामदग्न्यः प्रतापवान् ।
अकृतव्रण शक्यो वै द्रष्टुं वेदविदां वरः ॥ ०११ ॥

अकृतव्रण उवाच ॥

भवन्तमेव सततं रामः कीर्तयति प्रभो ।
सृञ्जयो मे प्रियसखो राजर्षिरिति पार्थिव ॥ ०१२ ॥

इह रामः प्रभाते श्वो भवितेति मतिर्मम ।
द्रष्टास्येनमिहायान्तं तव दर्शनकाङ्क्षया ॥ ०१३ ॥

इयं च कन्या राजर्षे किमर्थं वनमागता ।
कस्य चेयं तव च का भवतीच्छामि वेदितुम् ॥ ०१४ ॥

होत्रवाहन उवाच ॥

दौहित्रीयं मम विभो काशिराजसुता शुभा ।
ज्येष्ठा स्वयंवरे तस्थौ भगिनीभ्यां सहानघ ॥ ०१५ ॥

इयमम्बेति विख्याता ज्येष्ठा काशिपतेः सुता ।
अम्बिकाम्बालिके त्वन्ये यवीयस्यौ तपोधन ॥ ०१६ ॥

समेतं पार्थिवं क्षत्रं काशिपुर्यां ततोऽभवत् ।
कन्यानिमित्तं ब्रह्मर्षे तत्रासीदुत्सवो महान् ॥ ०१७ ॥

ततः किल महावीर्यो भीष्मः शांतनवो नृपान् ।
अवाक्षिप्य महातेजास्तिस्रः कन्या जहार ताः ॥ ०१८ ॥

निर्जित्य पृथिवीपालानथ भीष्मो गजाह्वयम् ।
आजगाम विशुद्धात्मा कन्याभिः सह भारत ॥ ०१९ ॥

सत्यवत्यै निवेद्याथ विवाहार्थमनन्तरम् ।
भ्रातुर्विचित्रवीर्यस्य समाज्ञापयत प्रभुः ॥ ०२० ॥

ततो वैवाहिकं दृष्ट्वा कन्येयं समुपार्जितम् ।
अब्रवीत्तत्र गाङ्गेयं मन्त्रिमध्ये द्विजर्षभ ॥ ०२१ ॥

मया शाल्वपतिर्वीर मनसाभिवृतः पतिः ।
न मामर्हसि धर्मज्ञ परचित्तां प्रदापितुम् ॥ ०२२ ॥

तच्छ्रुत्वा वचनं भीष्मः संमन्त्र्य सह मन्त्रिभिः ।
निश्चित्य विससर्जेमां सत्यवत्या मते स्थितः ॥ ०२३ ॥

अनुज्ञाता तु भीष्मेण शाल्वं सौभपतिं ततः ।

कन्येयं मुदिता विप्र काले वचनमब्रवीत् ॥ ०२४ ॥

विसर्जितास्मि भीष्मेण धर्मं मां प्रतिपादय ।
मनसाभिवृतः पूर्वं मया त्वं पार्थिवर्षभ ॥ ०२५ ॥

प्रत्याचख्यौ च शाल्वोऽपि चारित्रस्याभिशङ्कितः ।
सेयं तपोवनं प्राप्ता तापस्येऽभिरता भृशम् ॥ ०२६ ॥

मया च प्रत्यभिज्ञाता वंशस्य परिकीर्तनात् ।
अस्य दुःखस्य चोत्पत्तिं भीष्ममेवेह मन्यते ॥ ०२७ ॥

अम्बोवाच ॥

भगवन्नेवमेवैतद्यथाह पृथिवीपतिः ।
शरीरकर्ता मातुर्मे सृञ्जयो होत्रवाहनः ॥ ०२८ ॥

न ह्युत्सहे स्वनगरं प्रतियातुं तपोधन ।
अवमानभयाच्चैव व्रीडया च महामुने ॥ ०२९ ॥

यत्तु मां भगवान्रामो वक्ष्यति द्विजसत्तम ।
तन्मे कार्यतमं कार्यमिति मे भगवन्मतिः ॥ ०३० ॥

---

# अध्याय १७६

अकृतव्रण उवाच ॥

दुःखद्वयमिदं भद्रे कतरस्य चिकीर्षसि ।
प्रतिकर्तव्यमबले तत्त्वं वत्से ब्रवीहि मे ॥ ००१ ॥

यदि सौभपतिर्भद्रे नियोक्तव्यो मते तव ।
नियोक्ष्यति महात्मा तं रामस्त्वद्धितकाम्यया ॥ ००२ ॥

अथापगेयं भीष्मं तं रामेणेच्छसि धीमता ।
रणे विनिर्जितं द्रष्टुं कुर्यात्तदपि भार्गवः ॥ ००३ ॥

सृञ्जयस्य वचः श्रुत्वा तव चैव शुचिस्मिते ।
यदत्रानन्तरं कार्यं तदद्यैव विचिन्त्यताम् ॥ ००४ ॥

अम्बोवाच ॥

अपनीतास्मि भीष्मेण भगवन्नविजानता ।
न हि जानाति मे भीष्मो ब्रह्मञ्शाल्वगतं मनः ॥ ००५ ॥

एतद्विचार्य मनसा भवानेव विनिश्चयम् ।
विचिनोतु यथान्यायं विधानं क्रियतां तथा ॥ ००६ ॥

भीष्मे वा कुरुशार्दूले शाल्वराजेऽथ वा पुनः ।
उभयोरेव वा ब्रह्मन्यद्युक्तं तत्समाचर ॥ ००७ ॥

निवेदितं मया ह्येतद्दुःखमूलं यथातथम् ।
विधानं तत्र भगवन्कर्तुमर्हसि युक्तितः ॥ ००८ ॥

अकृतव्रण उवाच ॥

उपपन्नमिदं भद्रे यदेवं वरवर्णिनि ।
धर्मं प्रति वचो ब्रूयाः शृणु चेदं वचो मम ॥ ००९ ॥

यदि त्वामापगेयो वै न नयेद्गजसाह्वयम् ।
शाल्वस्त्वां शिरसा भीरु गृह्णीयाद्रामचोदितः ॥ ०१० ॥

तेन त्वं निर्जिता भद्रे यस्मान्नीतासि भामिनि ।
संशयः शाल्वराजस्य तेन त्वयि सुमध्यमे ॥ ०११ ॥

भीष्मः पुरुषमानी च जितकाशी तथैव च ।
तस्मात्प्रतिक्रिया युक्ता भीष्मे कारयितुं त्वया ॥ ०१२ ॥

अम्बोवाच ॥

ममाप्येष महान्ब्रह्मन्हृदि कामोऽभिवर्तते ।
घातयेयं यदि रणे भीष्ममित्येव नित्यदा ॥ ०१३ ॥

भीष्मं वा शाल्वराजं वा यं वा दोषेण गच्छसि ।
प्रशाधि तं महाबाहो यत्कृतेऽहं सुदुःखिता ॥ ०१४ ॥

भीष्म उवाच ॥

एवं कथयतामेव तेषां स दिवसो गतः ।
रात्रिश्च भरतश्रेष्ठ सुखशीतोष्णमारुता ॥ ०१५ ॥

ततो रामः प्रादुरासीत्प्रज्वलन्निव तेजसा ।
शिष्यैः परिवृतो राजञ्जटाचीरधरो मुनिः ॥ ०१६ ॥

धनुष्पाणिरदीनात्मा खड्गं बिभ्रत्परश्वधी ।
विरजा राजशार्दूल सोऽभ्ययात्सृञ्जयं नृपम् ॥ ०१७ ॥

ततस्तं तापसा दृष्ट्वा स च राजा महातपाः ।
तस्थुः प्राञ्जलयः सर्वे सा च कन्या तपस्विनी ॥ ०१८ ॥

पूजयामासुरव्यग्रा मधुपर्केण भार्गवम् ।
अर्चितश्च यथायोगं निषसाद सहैव तैः ॥ ०१९ ॥

ततः पूर्वव्यतीतानि कथयेते स्म तावुभौ ।
सृञ्जयश्च स राजर्षिर्जामदग्न्यश्च भारत ॥ ०२० ॥

ततः कथान्ते राजर्षिर्भृगुश्रेष्ठं महाबलम् ।
उवाच मधुरं काले रामं वचनमर्थवत् ॥ ०२१ ॥

रामेयं मम दौहित्री काशिराजसुता प्रभो ।
अस्याः शृणु यथातत्त्वं कार्यं कार्यविशारद ॥ ०२२ ॥

परमं कथ्यतां चेति तां रामः प्रत्यभाषत ।
ततः साभ्यगमद्रामं ज्वलन्तमिव पावकम् ॥ ०२३ ॥

सा चाभिवाद्य चरणौ रामस्य शिरसा शुभा ।
स्पृष्ट्वा पद्मदलाभाभ्यां पाणिभ्यामग्रतः स्थिता ॥ ०२४ ॥

रुरोद सा शोकवती बाष्पव्याकुललोचना ।
प्रपेदे शरणं चैव शरण्यं भृगुनन्दनम् ॥ ०२५ ॥

राम उवाच ॥

यथासि सृञ्जयस्यास्य तथा मम नृपात्मजे ।
ब्रूहि यत्ते मनोदुःखं करिष्ये वचनं तव ॥ ०२६ ॥

अम्बोवाच ॥

भगवञ्शरणं त्वाद्य प्रपन्नास्मि महाव्रत ।
शोकपङ्कार्णवाद्घोरादुद्धरस्व च मां विभो ॥ ०२७ ॥

भीष्म उवाच ॥

तस्याश्च दृष्ट्वा रूपं च वयश्चाभिनवं पुनः ।
सौकुमार्यं परं चैव रामश्चिन्तापरोऽभवत् ॥ ०२८ ॥

किमियं वक्ष्यतीत्येवं विमृशन्भृगुसत्तमः ।
इति दध्यौ चिरं रामः कृपयाभिपरिप्लुतः ॥ ०२९ ॥

कथ्यतामिति सा भूयो रामेणोक्ता शुचिस्मिता ।
सर्वमेव यथातत्त्वं कथयामास भार्गवे ॥ ०३० ॥

तच्छ्रुत्वा जामदग्न्यस्तु राजपुत्र्या वचस्तदा ।
उवाच तां वरारोहां निश्चित्यार्थविनिश्चयम् ॥ ०३१ ॥

प्रेषयिष्यामि भीष्माय कुरुश्रेष्ठाय भामिनि ।
करिष्यति वचो धर्म्यं श्रुत्वा मे स नराधिपः ॥ ०३२ ॥

न चेत्करिष्यति वचो मयोक्तं जाह्नवीसुतः ।
धक्ष्याम्येनं रणे भद्रे सामात्यं शस्त्रतेजसा ॥ ०३३ ॥

अथ वा ते मतिस्तत्र राजपुत्रि निवर्तते ।
तावच्छाल्वपतिं वीरं योजयाम्यत्र कर्मणि ॥ ०३४ ॥

अम्बोवाच ॥

विसर्जितास्मि भीष्मेण श्रुत्वैव भृगुनन्दन ।
शाल्वराजगतं चेतो मम पूर्वं मनीषितम् ॥ ०३५ ॥

सौभराजमुपेत्याहमब्रुवं दुर्वचं वचः ।
न च मां प्रत्यगृह्णात्स चारित्रपरिशङ्कितः ॥ ०३६ ॥

एतत्सर्वं विनिश्चित्य स्वबुद्ध्या भृगुनन्दन ।
यदत्रौपयिकं कार्यं तच्चिन्तयितुमर्हसि ॥ ०३७ ॥

ममात्र व्यसनस्यास्य भीष्मो मूलं महाव्रतः ।
येनाहं वशमानीता समुत्क्षिप्य बलात्तदा ॥ ०३८ ॥

भीष्मं जहि महाबाहो यत्कृते दुःखमीदृशम् ।
प्राप्ताहं भृगुशार्दूल चराम्यप्रियमुत्तमम् ॥ ०३९ ॥

स हि लुब्धश्च मानी च जितकाशी च भार्गव ।
तस्मात्प्रतिक्रिया कर्तुं युक्ता तस्मै त्वयानघ ॥ ०४० ॥

एष मे ह्रियमाणाया भारतेन तदा विभो ।
अभवद्धृदि सङ्कल्पो घातयेयं महाव्रतम् ॥ ०४१ ॥

तस्मात्कामं ममाद्येमं राम संवर्तयानघ ।
जहि भीष्मं महाबाहो यथा वृत्रं पुरंदरः ॥ ०४२ ॥

---

# अध्याय १७७

भीष्म उवाच ॥

एवमुक्तस्तदा रामो जहि भीष्ममिति प्रभो ।
उवाच रुदतीं कन्यां चोदयन्तीं पुनः पुनः ॥ ००१ ॥

काश्ये कामं न गृह्णामि शस्त्रं वै वरवर्णिनि ।
ऋते ब्रह्मविदां हेतोः किमन्यत्करवाणि ते ॥ ००२ ॥

वाचा भीष्मश्च शाल्वश्च मम राज्ञि वशानुगौ ।
भविष्यतोऽनवद्याङ्गि तत्करिष्यामि मा शुचः ॥ ००३ ॥

न तु शस्त्रं ग्रहीष्यामि कथञ्चिदपि भामिनि ।
ऋते नियोगाद्विप्राणामेष मे समयः कृतः ॥ ००४ ॥

अम्बोवाच ॥

मम दुःखं भगवता व्यपनेयं यतस्ततः ।
तत्तु भीष्मप्रसूतं मे तं जहीश्वर माचिरम् ॥ ००५ ॥

राम उवाच ॥

काशिकन्ये पुनर्ब्रूहि भीष्मस्ते चरणावुभौ ।
शिरसा वन्दनार्होऽपि ग्रहीष्यति गिरा मम ॥ ००६ ॥

अम्बोवाच ॥

जहि भीष्मं रणे राम मम चेदिच्छसि प्रियम् ।
प्रतिश्रुतं च यदि तत्सत्यं कर्तुमिहार्हसि ॥ ००७ ॥

भीष्म उवाच ॥

तयोः संवदतोरेवं राजन्रामाम्बयोस्तदा ।
अकृतव्रणो जामदग्न्यमिदं वचनमब्रवीत् ॥ ००८ ॥

शरणागतां महाबाहो कन्यां न त्यक्तुमर्हसि ।
जहि भीष्मं रणे राम गर्जन्तमसुरं यथा ॥ ००९ ॥

यदि भीष्मस्त्वयाहूतो रणे राम महामुने ।
निर्जितोऽस्मीति वा ब्रूयात्कुर्याद्वा वचनं तव ॥ ०१० ॥

कृतमस्या भवेत्कार्यं कन्याया भृगुनन्दन ।

वाक्यं सत्यं च ते वीर भविष्यति कृतं विभो ॥ ०११ ॥

इयं चापि प्रतिज्ञा ते तदा राम महामुने ।
जित्वा वै क्षत्रियान्सर्वान्ब्राह्मणेषु प्रतिश्रुतम् ॥ ०१२ ॥

ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव रणे यदि ।
ब्रह्मद्विड्भविता तं वै हनिष्यामीति भार्गव ॥ ०१३ ॥

शरणं हि प्रपन्नानां भीतानां जीवितार्थिनाम् ।
न शक्ष्यामि परित्यागं कर्तुं जीवन्कथञ्चन ॥ ०१४ ॥

यश्च क्षत्रं रणे कृत्स्नं विजेष्यति समागतम् ।
दृप्तात्मानमहं तं च हनिष्यामीति भार्गव ॥ ०१५ ॥

स एवं विजयी राम भीष्मः कुरुकुलोद्वहः ।
तेन युध्यस्व सङ्ग्रामे समेत्य भृगुनन्दन ॥ ०१६ ॥

राम उवाच ॥

स्मराम्यहं पूर्वकृतां प्रतिज्ञामृषिसत्तम ।
तथैव च करिष्यामि यथा साम्नैव लप्स्यते ॥ ०१७ ॥

कार्यमेतन्महद्ब्रह्मन्काशिकन्यामनोगतम् ।
गमिष्यामि स्वयं तत्र कन्यामादाय यत्र सः ॥ ०१८ ॥

यदि भीष्मो रणश्लाघी न करिष्यति मे वचः ।
हनिष्याम्येनमुद्रिक्तमिति मे निश्चिता मतिः ॥ ०१९ ॥

न हि बाणा मयोत्सृष्टाः सज्जन्तीह शरीरिणाम् ।
कायेषु विदितं तुभ्यं पुरा क्षत्रियसङ्गरे ॥ ०२० ॥

भीष्म उवाच ॥

एवमुक्त्वा ततो रामः सह तैर्ब्रह्मवादिभिः ।
प्रयाणाय मतिं कृत्वा समुत्तस्थौ महामनाः ॥ ०२१ ॥

ततस्ते तामुषित्वा तु रजनीं तत्र तापसाः ।
हुताग्नयो जप्तजप्याः प्रतस्थुर्मज्जिघांसया ॥ ०२२ ॥

अभ्यगच्छत्ततो रामः सह तैर्ब्राह्मणर्षभैः ।
कुरुक्षेत्रं महाराज कन्यया सह भारत ॥ ०२३ ॥

न्यविशन्त ततः सर्वे परिगृह्य सरस्वतीम् ।
तापसास्ते महात्मानो भृगुश्रेष्ठपुरस्कृताः ॥ ०२४ ॥

---

# अध्याय १७८

भीष्म उवाच ॥

ततस्तृतीये दिवसे समे देशे व्यवस्थितः ।
प्रेषयामास मे राजन्प्राप्तोऽस्मीति महाव्रतः ॥ ००१ ॥

तमागतमहं श्रुत्वा विषयान्तं महाबलम् ।
अभ्यगच्छं जवेनाशु प्रीत्या तेजोनिधिं प्रभुम् ॥ ००२ ॥

गां पुरस्कृत्य राजेन्द्र ब्राह्मणैः परिवारितः ।
ऋत्विग्भिर्देवकल्पैश्च तथैव च पुरोहितैः ॥ ००३ ॥

स मामभिगतं दृष्ट्वा जामदग्न्यः प्रतापवान् ।

प्रतिजग्राह तां पूजां वचनं चेदमब्रवीत् ॥ ००४ ॥

भीष्म कां बुद्धिमास्थाय काशिराजसुता त्वया ।
अकामेयमिहानीता पुनश्चैव विसर्जिता ॥ ००५ ॥

विभ्रंशिता त्वया हीयं धर्मावाप्तेः परावरात् ।
परामृष्टां त्वया हीमां को हि गन्तुमिहार्हति ॥ ००६ ॥

प्रत्याख्याता हि शाल्वेन त्वया नीतेति भारत ।
तस्मादिमां मन्नियोगात्प्रतिगृह्णीष्व भारत ॥ ००७ ॥

स्वधर्मं पुरुषव्याघ्र राजपुत्री लभत्वियम् ।
न युक्तमवमानोऽयं कर्तुं राज्ञा त्वयानघ ॥ ००८ ॥

ततस्तं नातिमनसं समुदीक्ष्याहमब्रुवम् ।
नाहमेनां पुनर्दद्यां भ्रात्रे ब्रह्मन्कथञ्चन ॥ ००९ ॥

शाल्वस्याहमिति प्राह पुरा मामिह भार्गव ।
मया चैवाभ्यनुज्ञाता गता सौभपुरं प्रति ॥ ०१० ॥

न भयान्नाप्यनुक्रोशान्न लोभान्नार्थकाम्यया ।
क्षत्रधर्ममहं जह्यामिति मे व्रतमाहितम् ॥ ०११ ॥

अथ मामब्रवीद्रामः क्रोधपर्याकुलेक्षणः ।
न करिष्यसि चेदेतद्वाक्यं मे कुरुपुङ्गव ॥ ०१२ ॥

हनिष्यामि सहामात्यं त्वामद्येति पुनः पुनः ।
संरम्भादब्रवीद्रामः क्रोधपर्याकुलेक्षणः ॥ ०१३ ॥

तमहं गीर्भिरिष्टाभिः पुनः पुनररिंदमम् ।
अयाचं भृगुशार्दूलं न चैव प्रशशाम सः ॥ ०१४ ॥

तमहं प्रणम्य शिरसा भूयो ब्राह्मणसत्तमम् ।
अब्रुवं कारणं किं तद्यत्त्वं योद्धुमिहेच्छसि ॥ ०१५ ॥

इष्वस्त्रं मम बालस्य भवतैव चतुर्विधम् ।
उपदिष्टं महाबाहो शिष्योऽस्मि तव भार्गव ॥ ०१६ ॥

ततो मामब्रवीद्रामः क्रोधसंरक्तलोचनः ।
जानीषे मां गुरुं भीष्म न चेमां प्रतिगृह्णसे ॥ ०१७ ॥

सुतां काश्यस्य कौरव्य मत्प्रियार्थं महीपते ॥ ०१७ ॥

न हि ते विद्यते शान्तिरन्यथा कुरुनन्दन ।
गृहाणेमां महाबाहो रक्षस्व कुलमात्मनः ॥ ०१८ ॥

त्वया विभ्रंशिता हीयं भर्तारं नाभिगच्छति ॥ ०१८ ॥

तथा ब्रुवन्तं तमहं रामं परपुरञ्जयम् ।
नैतदेवं पुनर्भावि ब्रह्मर्षे किं श्रमेण ते ॥ ०१९ ॥

गुरुत्वं त्वयि संप्रेक्ष्य जामदग्न्य पुरातनम् ।
प्रसादये त्वां भगवंस्त्यक्तैषा हि पुरा मया ॥ ०२० ॥

को जातु परभावां हि नारीं व्यालीमिव स्थिताम् ।
वासयेत गृहे जानन्स्त्रीणां दोषान्महात्ययान् ॥ ०२१ ॥

न भयाद्वासवस्यापि धर्मं जह्यां महाद्युते ।
प्रसीद मा वा यद्वा ते कार्यं तत्कुरु माचिरम् ॥ ०२२ ॥

अयं चापि विशुद्धात्मन्पुराणे श्रूयते विभो ।
मरुत्तेन महाबुद्धे गीतः श्लोको महात्मना ॥ ०२३ ॥

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य कार्यं भवति शासनम्  ॥ ०२४  ॥

स त्वं गुरुरिति प्रेम्णा मया संमानितो भृशम् ।
गुरुवृत्तं न जानीषे तस्माद्योत्स्याम्यहं त्वया  ॥ ०२५  ॥

गुरुं न हन्यां समरे ब्राह्मणं च विशेषतः ।
विशेषतस्तपोवृद्धमेवं क्षान्तं मया तव  ॥ ०२६  ॥

उद्यतेषुमथो दृष्ट्वा ब्राह्मणं क्षत्रबन्धुवत् ।
यो हन्यात्समरे क्रुद्धो युध्यन्तमपलायिनम्  ॥ ०२७  ॥

ब्रह्महत्या न तस्य स्यादिति धर्मेषु निश्चयः  ॥ ०२७  ॥

क्षत्रियाणां स्थितो धर्मे क्षत्रियोऽस्मि तपोधन ।
यो यथा वर्तते यस्मिंस्तथा तस्मिन्प्रवर्तयन्  ॥ ०२८  ॥

नाधर्मं समवाप्नोति नरः श्रेयश्च विन्दति  ॥ ०२८  ॥

अर्थे वा यदि वा धर्मे समर्थो देशकालवित् ।
अनर्थसंशयापन्नः श्रेयान्निःसंशयेन च  ॥ ०२९  ॥

यस्मात्संशयितेऽर्थेऽस्मिन्यथान्यायं प्रवर्तसे ।
तस्माद्योत्स्यामि सहितस्त्वया राम महाहवे  ॥ ०३०  ॥

पश्य मे बाहुवीर्यं च विक्रमं चातिमानुषम्  ॥ ०३०  ॥

एवं गतेऽपि तु मया यच्छक्यं भृगुनन्दन ।
तत्करिष्ये कुरुक्षेत्रे योत्स्ये विप्र त्वया सह  ॥ ०३१  ॥

द्वंद्वे राम यथेष्टं ते सज्जो भव महामुने ॥ ०३१ ॥

तत्र त्वं निहतो राम मया शरशताचितः ।
लप्स्यसे निर्जिता.ण्ल्लोकाञ्शस्त्रपूतो महारणे ॥ ०३२ ॥

स गच्छ विनिवर्तस्व कुरुक्षेत्रं रणप्रिय ।
तत्रैष्यामि महाबाहो युद्धाय त्वां तपोधन ॥ ०३३ ॥

अपि यत्र त्वया राम कृतं शौचं पुरा पितुः ।
तत्राहमपि हत्वा त्वां शौचं कर्तास्मि भार्गव ॥ ०३४ ॥

तत्र गच्छस्व राम त्वं त्वरितं युद्धदुर्मद ।
व्यपनेष्यामि ते दर्पं पौराणं ब्राह्मणब्रुव ॥ ०३५ ॥

यच्चापि कत्थसे राम बहुशः परिषत्सु वै ।
निर्जिताः क्षत्रिया लोके मयैकेनेति तच्छृणु ॥ ०३६ ॥

न तदा जायते भीष्मो मद्विधः क्षत्रियोऽपि वा ।
यस्ते युद्धमयं दर्पं कामं च व्यपनाशयेत् ॥ ०३७ ॥

सोऽहं जातो महाबाहो भीष्मः परपुरञ्जयः ।
व्यपनेष्यामि ते दर्पं युद्धे राम न संशयः ॥ ०३८ ॥

---

# अध्याय १७९

भीष्म उवाच ॥

ततो मामब्रवीद्रामः प्रहसन्निव भारत ।
दिष्ट्या भीष्म मया सार्धं योद्धुमिच्छसि सङ्गरे ॥ ००१ ॥

अयं गच्छामि कौरव्य कुरुक्षेत्रं त्वया सह ।
भाषितं तत्करिष्यामि तत्रागच्छेः परंतप ॥ ००२ ॥

तत्र त्वां निहतं माता मया शरशताचितम् ।
जाह्नवी पश्यतां भीष्म गृध्रकङ्कबडाशनम् ॥ ००३ ॥

कृपणं त्वामभिप्रेक्ष्य सिद्धचारणसेविता ।
मया विनिहतं देवी रोदतामद्य पार्थिव ॥ ००४ ॥

अतदर्हा महाभागा भगीरथसुता नदी ।
या त्वामजीजनन्मन्दं युद्धकामुकमातुरम् ॥ ००५ ॥

एहि गच्छ मया भीष्म युद्धमद्यैव वर्तताम् ।
गृहाण सर्वं कौरव्य रथादि भरतर्षभ ॥ ००६ ॥

इति ब्रुवाणं तमहं रामं परपुरञ्जयम् ।
प्रणम्य शिरसा राजन्नेवमस्त्वित्यथाब्रुवम् ॥ ००७ ॥

एवमुक्त्वा ययौ रामः कुरुक्षेत्रं युयुत्सया ।
प्रविश्य नगरं चाहं सत्यवत्यै न्यवेदयम् ॥ ००८ ॥

ततः कृतस्वस्त्ययनो मात्रा प्रत्यभिनन्दितः ।
द्विजातीन्वाच्य पुण्याहं स्वस्ति चैव महाद्युते ॥ ००९ ॥

रथमास्थाय रुचिरं राजतं पाण्डुरैर्हयैः ।
सूपस्करं स्वधिष्ठानं वैयाघ्रपरिवारणम् ॥ ०१० ॥

उपपन्नं महाशस्त्रैः सर्वोपकरणान्वितम् ।

तत्कुलीनेन वीरेण हयशास्त्रविदा नृप ॥ ०११ ॥

युक्तं सूतेन शिष्टेन बहुशो दृष्टकर्मणा ।
दंशितः पाण्डुरेणाहं कवचेन वपुष्मता ॥ ०१२ ॥

पाण्डुरं कार्मुकं गृह्य प्रायां भरतसत्तम ।
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ॥ ०१३ ॥

पाण्डुरैश्चामरैश्चापि वीज्यमानो नराधिप ।
शुक्लवासाः सितोष्णीषः सर्वशुक्लविभूषणः ॥ ०१४ ॥

स्तूयमानो जयाशीर्भिर्निष्क्रम्य गजसाह्वयात् ।
कुरुक्षेत्रं रणक्षेत्रमुपायां भरतर्षभ ॥ ०१५ ॥

ते हयाश्चोदितास्तेन सूतेन परमाहवे ।
अवहन्मां भृशं राजन्मनोमारुतरंहसः ॥ ०१६ ॥

गत्वाहं तत्कुरुक्षेत्रं स च रामः प्रतापवान् ।
युद्धाय सहसा राजन्पराक्रान्तौ परस्परम् ॥ ०१७ ॥

ततः संदर्शनेऽतिष्ठं रामस्यातितपस्विनः ।
प्रगृह्य शङ्खप्रवरं ततः प्राधममुत्तमम् ॥ ०१८ ॥

ततस्तत्र द्विजा राजंस्तापसाश्च वनौकसः ।
अपश्यन्त रणं दिव्यं देवाः सर्षिगणास्तदा ॥ ०१९ ॥

ततो दिव्यानि माल्यानि प्रादुरासन्मुहुर्मुहुः ।
वादित्राणि च दिव्यानि मेघवृन्दानि चैव ह ॥ ०२० ॥

ततस्ते तापसाः सर्वे भार्गवस्यानुयायिनः ।
प्रेक्षकाः समपद्यन्त परिवार्य रणाजिरम् ॥ ०२१ ॥

ततो मामब्रवीद्देवी सर्वभूतहितैषिणी ।
माता स्वरूपिणी राजन्किमिदं ते चिकीर्षितम् ॥ ०२२ ॥

गत्वाहं जामदग्न्यं तं प्रयाचिष्ये कुरूद्वह ।
भीष्मेण सह मा योत्सीः शिष्येणेति पुनः पुनः ॥ ०२३ ॥

मा मैवं पुत्र निर्बन्धं कुरु विप्रेण पार्थिव ।
जामदग्न्येन समरे योद्धुमित्यवभर्त्सयत् ॥ ०२४ ॥

किं न वै क्षत्रियहरो हरतुल्यपराक्रमः ।
विदितः पुत्र रामस्ते यतस्त्वं योद्धुमिच्छसि ॥ ०२५ ॥

ततोऽहमब्रुवं देवीमभिवाद्य कृताञ्जलिः ।
सर्वं तद्भरतश्रेष्ठ यथावृत्तं स्वयंवरे ॥ ०२६ ॥

यथा च रामो राजेन्द्र मया पूर्वं प्रसादितः ।
काशिराजसुतायाश्च यथा कामः पुरातनः ॥ ०२७ ॥

ततः सा राममभ्येत्य जननी मे महानदी ।
मदर्थं तमृषिं देवी क्षमयामास भार्गवम् ॥ ०२८ ॥

भीष्मेण सह मा योत्सीः शिष्येणेति वचोऽब्रवीत् ॥ ०२८ ॥

स च तामाह याचन्तीं भीष्ममेव निवर्तय ।
न हि मे कुरुते काममित्यहं तमुपागमम् ॥ ०२९ ॥

सञ्जय उवाच ॥

ततो गङ्गा सुतस्नेहाद्भीष्मं पुनरुपागमत् ।
न चास्याः सोऽकरोद्वाक्यं क्रोधपर्याकुलेक्षणः ॥ ०३० ॥

अथादृश्यत धर्मात्मा भृगुश्रेष्ठो महातपाः ।
आह्वयामास च पुनर्युद्धाय द्विजसत्तमः  ॥ ०३१  ॥

---

# अध्याय १८०

भीष्म उवाच  ॥

तमहं स्मयन्निव रणे प्रत्यभाषं व्यवस्थितम् ।
भूमिष्ठं नोत्सहे योद्धुं भवन्तं रथमास्थितः  ॥ ००१  ॥

आरोह स्यन्दनं वीर कवचं च महाभुज ।
बधान समरे राम यदि योद्धुं मयेच्छसि  ॥ ००२  ॥

ततो मामब्रवीद्रामः स्मयमानो रणाजिरे ।
रथो मे मेदिनी भीष्म वाहा वेदाः सदश्ववत्  ॥ ००३  ॥

सूतो मे मातरिश्वा वै कवचं वेदमातरः ।
सुसंवीतो रणे ताभिर्योत्स्येऽहं कुरुनन्दन  ॥ ००४  ॥

एवं ब्रुवाणो गान्धारे रामो मां सत्यविक्रमः ।
शरव्रातेन महता सर्वतः पर्यवारयत्  ॥ ००५  ॥

ततोऽपश्यं जामदग्न्यं रथे दिव्ये व्यवस्थितम् ।
सर्वायुधधरे श्रीमत्यद्भुतोपमदर्शने  ॥ ००६  ॥

मनसा विहिते पुण्ये विस्तीर्णे नगरोपमे ।
दिव्याश्वयुजि संनद्धे काञ्चनेन विभूषिते  ॥ ००७  ॥

ध्वजेन च महाबाहो सोमालङ्कृतलक्ष्मणा ।
धनुर्धरो बद्धतूणो बद्धगोधाङ्गुलित्रवान्  ॥ ००८  ॥

सारथ्यं कृतवांस्तत्र युयुत्सोरकृतव्रणः ।
सखा वेदविदत्यन्तं दयितो भार्गवस्य ह  ॥ ००९  ॥

आह्वयानः स मां युद्धे मनो हर्षयतीव मे ।
पुनः पुनरभिक्रोशन्नभियाहीति भार्गवः  ॥ ०१०  ॥

तमादित्यमिवोद्यन्तमनाधृष्यं महाबलम् ।
क्षत्रियान्तकरं राममेकमेकः समासदम्  ॥ ०११  ॥

ततोऽहं बाणपातेषु त्रिषु वाहान्निगृह्य वै ।
अवतीर्य धनुर्न्यस्य पदातिर्ऋषिसत्तमम्  ॥ ०१२  ॥

अभ्यगच्छं तदा राममर्चिष्यन्द्विजसत्तमम् ।
अभिवाद्य चैनं विधिवदब्रुवं वाक्यमुत्तमम्  ॥ ०१३  ॥

योत्स्ये त्वया रणे राम विशिष्टेनाधिकेन च ।
गुरुणा धर्मशीलेन जयमाशास्स्व मे विभो  ॥ ०१४  ॥

राम उवाच  ॥

एवमेतत्कुरुश्रेष्ठ कर्तव्यं भूतिमिच्छता ।
धर्मो ह्येष महाबाहो विशिष्टैः सह युध्यताम्  ॥ ०१५  ॥

शपेयं त्वां न चेदेवमागच्छेथा विशां पते ।
युध्यस्व त्वं रणे यत्तो धैर्यमालम्ब्य कौरव  ॥ ०१६  ॥

न तु ते जयमाशासे त्वां हि जेतुमहं स्थितः ।

गच्छ युध्यस्व धर्मेण प्रीतोऽस्मि चरितेन ते ॥ ०१७ ॥

भीष्म उवाच ॥

ततोऽहं तं नमस्कृत्य रथमारुह्य सत्वरः ।
प्राध्मापयं रणे शङ्खं पुनर्हेमविभूषितम् ॥ ०१८ ॥

ततो युद्धं समभवन्मम तस्य च भारत ।
दिवसान्सुबहून्राजन्परस्परजिगीषया ॥ ०१९ ॥

स मे तस्मिन्रणे पूर्वं प्राहरत्कङ्कपत्रिभिः ।
षष्ट्या शतैश्च नवभिः शराणामग्निवर्चसाम् ॥ ०२० ॥

चत्वारस्तेन मे वाहाः सूतश्चैव विशां पते ।
प्रतिरुद्धास्तथैवाहं समरे दंशितः स्थितः ॥ ०२१ ॥

नमस्कृत्य च देवेभ्यो ब्राह्मणेभ्यश्च भारत ।
तमहं स्मयन्निव रणे प्रत्यभाषं व्यवस्थितम् ॥ ०२२ ॥

आचार्यता मानिता मे निर्मर्यादे ह्यपि त्वयि ।
भूयस्तु श्णु मे ब्रह्मन्संपदं धर्मसङ्ग्रहे ॥ ०२३ ॥

ये ते वेदाः शरीरस्था ब्राह्मण्यं यच्च ते महत् ।
तपश्च सुमहत्तप्तं न तेभ्यः प्रहराम्यहम् ॥ ०२४ ॥

प्रहरे क्षत्रधर्मस्य यं त्वं राम समास्थितः ।
ब्राह्मणः क्षत्रियत्वं हि याति शस्त्रसमुद्यमात् ॥ ०२५ ॥

पश्य मे धनुषो वीर्यं पश्य बाह्वोर्बलं च मे ।
एष ते कार्मुकं वीर द्विधा कुर्मि ससायकम् ॥ ०२६ ॥

तस्याहं निशितं भल्लं प्राहिण्वं भरतर्षभ ।
तेनास्य धनुषः कोटिश्छिन्ना भूमिमथागमत् ॥ ०२७ ॥

नव चापि पृषत्कानां शतानि नतपर्वणाम् ।
प्राहिण्वं कङ्कपत्राणां जामदग्न्यरथं प्रति ॥ ०२८ ॥

काये विषक्तास्तु तदा वायुनाभिसमीरिताः ।
चेलुः क्षरन्तो रुधिरं नागा इव च ते शराः ॥ ०२९ ॥

क्षतजोक्षितसर्वाङ्गः क्षरन्स रुधिरं व्रणैः ।
बभौ रामस्तदा राजन्मेरुर्धातूनिवोत्सृजन् ॥ ०३० ॥

हेमन्तान्तेऽशोक इव रक्तस्तबकमण्डितः ।
बभौ रामस्तदा राजन्क्वचित्किंशुकसंनिभः ॥ ०३१ ॥

ततोऽन्यद्धनुरादाय रामः क्रोधसमन्वितः ।
हेमपुङ्खान्सुनिशिताञ्शरांस्तान्हि ववर्ष सः ॥ ०३२ ॥

ते समासाद्य मां रौद्रा बहुधा मर्मभेदिनः ।
अकम्पयन्महावेगाः सर्पानलविषोपमाः ॥ ०३३ ॥

ततोऽहं समवष्टभ्य पुनरात्मानमाहवे ।
शतसंख्यैः शरैः क्रुद्धस्तदा राममवाकिरम् ॥ ०३४ ॥

स तैरग्न्यर्कसङ्काशैः शरैराशीविषोपमैः ।
शितैरभ्यर्दितो रामो मन्दचेता इवाभवत् ॥ ०३५ ॥

ततोऽहं कृपयाविष्टो विनिन्द्यात्मानमात्मना ।
धिग्धिगित्यब्रुवं युद्धं क्षत्रं च भरतर्षभ ॥ ०३६ ॥

असकृच्चाब्रुवं राजञ्शोकवेगपरिप्लुतः ।

अहो बत कृतं पापं मयेदं क्षत्रकर्मणा ॥ ०३७ ॥

गुरुर्द्विजातिर्धर्मात्मा यदेवं पीडितः शरैः ।
ततो न प्राहरं भूयो जामदग्न्याय भारत ॥ ०३८ ॥

अथावताप्य पृथिवीं पूषा दिवससङ्क्षये ।
जगामास्तं सहस्रांशुस्ततो युद्धमुपारमत् ॥ ०३९ ॥

---

# अध्याय १८१

भीष्म उवाच ॥

आत्मनस्तु ततः सूतो हयानां च विशां पते ।
मम चापनयामास शल्यान्कुशलसंमतः ॥ ००१ ॥

स्नातोपवृत्तैस्तुरगैर्लब्धतोयैरविह्वलैः ।
प्रभात उदिते सूर्ये ततो युद्धमवर्तत ॥ ००२ ॥

दृष्ट्वा मां तूर्णमायान्तं दंशितं स्यन्दने स्थितम् ।
अकरोद्रथमत्यर्थं रामः सज्जं प्रतापवान् ॥ ००३ ॥

ततोऽहं राममायान्तं दृष्ट्वा समरकाङ्क्षिणम् ।
धनुःश्रेष्ठं समुत्सृज्य सहसावतरं रथात् ॥ ००४ ॥

अभिवाद्य तथैवाहं रथमारुह्य भारत ।
युयुत्सुर्जामदग्न्यस्य प्रमुखे वीतभीः स्थितः ॥ ००५ ॥

ततो मां शरवर्षेण महता समवाकिरत् ।
अहं च शरवर्षेण वर्षन्तं समवाकिरम् ॥ ००६ ॥

सङ्क्रुद्धो जामदग्न्यस्तु पुनरेव पतत्रिणः ।
प्रेषयामास मे राजन्दीप्तास्यानुरगानिव ॥ ००७ ॥

तानहं निशितैर्भल्लैः शतशोऽथ सहस्रशः ।
अच्छिदं सहसा राजन्नन्तरिक्षे पुनः पुनः ॥ ००८ ॥

ततस्त्वस्त्राणि दिव्यानि जामदग्न्यः प्रतापवान् ।
मयि प्रचोदयामास तान्यहं प्रत्यषेधयम् ॥ ००९ ॥

अस्त्रैरेव महाबाहो चिकीर्षन्नधिकां क्रियाम् ।
ततो दिवि महान्नादः प्रादुरासीत्समन्ततः ॥ ०१० ॥

ततोऽहमस्त्रं वायव्यं जामदग्न्ये प्रयुक्तवान् ।
प्रत्याजघ्ने च तद्रामो गुह्यकास्त्रेण भारत ॥ ०११ ॥

ततोऽस्त्रमहमाग्नेयमनुमन्त्र्य प्रयुक्तवान् ।
वारुणेनैव रामस्तद्वारयामास मे विभुः ॥ ०१२ ॥

एवमस्त्राणि दिव्यानि रामस्याहमवारयम् ।
रामश्च मम तेजस्वी दिव्यास्त्रविदरिंदमः ॥ ०१३ ॥

ततो मां सव्यतो राजन्रामः कुर्वन्द्विजोत्तमः ।
उरस्यविध्यत्सङ्क्रुद्धो जामदग्न्यो महाबलः ॥ ०१४ ॥

ततोऽहं भरतश्रेष्ठ संन्यषीदं रथोत्तमे ।
अथ मां कश्मलाविष्टं सूतस्तूर्णमपावहत् ॥ ०१५ ॥

गोरुतं भरतश्रेष्ठ रामबाणप्रपीडितम् ॥ ०१५ ॥

ततो मामपयातं वै भृशं विद्धमचेतसम् ।
रामस्यानुचरा हृष्टाः सर्वे दृष्ट्वा प्रचुक्रुशुः ॥ ०१६ ॥

अकृतव्रणप्रभृतयः काशिकन्या च भारत ॥ ०१६ ॥

ततस्तु लब्धसञ्ज्ञोऽहं ज्ञात्वा सूतमथाब्रुवम् ।
याहि सूत यतो रामः सज्जोऽहं गतवेदनः ॥ ०१७ ॥

ततो मामवहत्सूतो हयैः परमशोभितैः ।
नृत्यद्भिरिव कौरव्य मारुतप्रतिमैर्गतौ ॥ ०१८ ॥

ततोऽहं राममासाद्य बाणजालेन कौरव ।
अवाकिरं सुसंरब्धः संरब्धं विजिगीषया ॥ ०१९ ॥

तानापतत एवासौ रामो बाणानजिह्मगान् ।
बाणैरेवाच्छिनत्तूर्णमेकैकं त्रिभिराहवे ॥ ०२० ॥

ततस्ते मृदिताः सर्वे मम बाणाः सुसंशिताः ।
रामबाणैर्द्विधा छिन्नाः शतशोऽथ महाहवे ॥ ०२१ ॥

ततः पुनः शरं दीप्तं सुप्रभं कालसंमितम् ।
असृजं जामदग्न्याय रामायाहं जिघांसया ॥ ०२२ ॥

तेन त्वभिहतो गाढं बाणच्छेदवशं गतः ।
मुमोह सहसा रामो भूमौ च निपपात ह ॥ ०२३ ॥

ततो हाहाकृतं सर्वं रामे भूतलमाश्रिते ।
जगद्भारत संविग्नं यथार्कपतनेऽभवत् ॥ ०२४ ॥

तत एनं सुसंविग्नाः सर्व एवाभिदुद्रुवुः ।

तपोधनास्ते सहसा काश्या च भृगुनन्दनम्  ॥ ०२५  ॥

त एनं संपरिष्वज्य शनैराश्वासयंस्तदा ।
पाणिभिर्जलशीतैश्च जयाशीर्भिश्च कौरव  ॥ ०२६  ॥

ततः स विह्वलो वाक्यं राम उत्थाय माब्रवीत् ।
तिष्ठ भीष्म हतोऽसीति बाणं संधाय कार्मुके  ॥ ०२७  ॥

स मुक्तो न्यपतत्तूर्णं पार्श्वे सव्ये महाहवे ।
येनाहं भृशसंविग्नो व्याघूर्णित इव द्रुमः  ॥ ०२८  ॥

हत्वा हयांस्ततो राजञ्शीघ्रास्त्रेण महाहवे ।
अवाकिरन्मां विश्रब्धो बाणैस्तैर्लोमवाहिभिः  ॥ ०२९  ॥

ततोऽहमपि शीघ्रास्त्रं समरेऽप्रतिवारणम् ।
अवासृजं महाबाहो तेऽन्तराधिष्ठिताः शराः  ॥ ०३०  ॥

रामस्य मम चैवाशु व्योमावृत्य समन्ततः  ॥ ०३०  ॥

न स्म सूर्यः प्रतपति शरजालसमावृतः ।
मातरिश्वान्तरे तस्मिन्मेघरुद्ध इवानदत्  ॥ ०३१  ॥

ततो वायोः प्रकम्पाच्च सूर्यस्य च मरीचिभिः ।
अभितापात्स्वभावाच्च पावकः समजायत  ॥ ०३२  ॥

ते शराः स्वसमुत्थेन प्रदीप्ताश्चित्रभानुना ।
भूमौ सर्वे तदा राजन्भस्मभूताः प्रपेदिरे  ॥ ०३३  ॥

तदा शतसहस्राणि प्रयुतान्यर्बुदानि च ।
अयुतान्यथ खर्वाणि निखर्वाणि च कौरव  ॥ ०३४  ॥

रामः शराणां सङ्क्रुद्धो मयि तूर्णमपातयत्  ॥ ०३४  ॥

ततोऽहं तानपि रणे शरैराशीविषोपमैः ।
संछिद्य भूमौ नृपतेऽपातयं पन्नगानिव  ॥ ०३५  ॥

एवं तदभवद्युद्धं तदा भरतसत्तम ।
संध्याकाले व्यतीते तु व्यपायात्स च मे गुरुः  ॥ ०३६  ॥

---

# अध्याय १८२

भीष्म उवाच  ॥

समागतस्य रामेण पुनरेवातिदारुणम् ।
अन्येद्युस्तुमुलं युद्धं तदा भरतसत्तम  ॥ ००१  ॥

ततो दिव्यास्त्रविच्छूरो दिव्यान्यस्त्राण्यनेकशः ।
अयोजयत धर्मात्मा दिवसे दिवसे विभुः  ॥ ००२  ॥

तान्यहं तत्प्रतीघातैरस्त्रैरस्त्राणि भारत ।
व्यधमं तुमुले युद्धे प्राणांस्त्यक्त्वा सुदुस्त्यजान्  ॥ ००३  ॥

अस्त्रैरस्त्रेषु बहुधा हतेष्वथ च भार्गवः ।
अक्रुध्यत महातेजास्त्यक्तप्राणः स संयुगे  ॥ ००४  ॥

ततः शक्तिं प्राहिणोद्घोररूपा ;मस्त्रै रुद्धो जामदग्न्यो महात्मा ।
कालोत्सृष्टां प्रज्वलितामिवोल्कां ; संदीप्ताग्रां तेजसावृत्य लोकान्  ॥ ००५  ॥

ततोऽहं तामिषुभिर्दीप्यमानैः ; समायान्तीमन्तकालार्कदीप्ताम् ।

छित्त्वा त्रिधा पातयामास भूमौ ; ततो ववौ पवनः पुण्यगन्धिः ॥ ००६ ॥

तस्यां छिन्नायां क्रोधदीप्तोऽथ रामः ; शक्तीर्घोराः प्राहिणोद्द्वादशान्याः ।
तासां रूपं भारत नोत शक्यं ; तेजस्वित्वाल्लाघवाच्चैव वक्तुम् ॥ ००७ ॥

किं त्वेवाहं विह्वलः संप्रदृश्य ; दिग्भ्यः सर्वास्ता महोल्का इवाग्नेः ।
नानारूपास्तेजसोग्रेण दीप्ता ; यथादित्या द्वादश लोकसङ्क्षये ॥ ००८ ॥

ततो जालं बाणमयं विवृत्य ; संदृश्य भित्त्वा शरजालेन राजन् ।
द्वादशेषून्प्राहिणवं रणेऽहं ; ततः शक्तीर्व्यधमं घोररूपाः ॥ ००९ ॥

ततोऽपरा जामदग्न्यो महात्मा ; शक्तीर्घोराः प्राक्षिपद्धेमदण्डाः ।
विचित्रिताः काञ्चनपट्टनद्धा ; यथा महोल्का ज्वलितास्तथा ताः ॥ ०१० ॥

ताश्चाप्युग्राश्चर्मणा वारयित्वा ; खड्गेनाजौ पातिता मे नरेन्द्र ।
बाणैर्दिव्यैर्जामदग्न्यस्य संख्ये ; दिव्यांश्चाश्वानभ्यवर्षं ससूतान् ॥ ०११ ॥

निर्मुक्तानां पन्नगानां सरूपा ; दृष्ट्वा शक्तीर्हेमचित्रा निकृत्ताः ।
प्रादुश्चक्रे दिव्यमस्त्रं महात्मा ; क्रोधाविष्टो हैहयेशप्रमाथी ॥ ०१२ ॥

ततः श्रेण्यः शलभानामिवोग्राः ; समापेतुर्विशिखानां प्रदीप्ताः ।
समाचिनोच्चापि भृशं शरीरं ; हयान्सूतं सरथं चैव मह्यम् ॥ ०१३ ॥

रथः शरैर्मे निचितः सर्वतोऽभू ;त्तथा हयाः सारथिश्चैव राजन् ।
युगं रथेषा च तथैव चक्रे ; तथैवाक्षः शरकृत्तोऽथ भग्नः ॥ ०१४ ॥

ततस्तस्मिन्बाणवर्षे व्यतीते ; शरौघेण प्रत्यवर्षं गुरुं तम् ।
स विक्षतो मार्गणैर्ब्रह्मराशि ;र्देहादजस्रं मुमुचे भूरि रक्तम् ॥ ०१५ ॥

यथा रामो बाणजालाभितप्त ;स्तथैवाहं सुभृशं गाढविद्धः ।
ततो युद्धं व्यरमच्चापराह्णे ; भानावस्तं प्रार्थयाने महीध्रम् ॥ ०१६ ॥

# अध्याय १८३

भीष्म उवाच ॥

ततः प्रभाते राजेन्द्र सूर्ये विमल उद्गते ।
भार्गवस्य मया सार्धं पुनर्युद्धमवर्तत ॥ ००१ ॥

ततो भ्रान्ते रथे तिष्ठन्रामः प्रहरतां वरः ।
ववर्ष शरवर्षाणि मयि शक्र इवाचले ॥ ००२ ॥

तेन सूतो मम सुहृच्छरवर्षेण ताडितः ।
निपपात रथोपस्थे मनो मम विषादयन् ॥ ००३ ॥

ततः सूतः स मेऽत्यर्थं कश्मलं प्राविशन्महत् ।
पृथिव्यां च शराघातान्निपपात मुमोह च ॥ ००४ ॥

ततः सूतोऽजहात्प्राणान्रामबाणप्रपीडितः ।
मुहूर्तादिव राजेन्द्र मां च भीराविशत्तदा ॥ ००५ ॥

ततः सूते हते राजन्क्षिपतस्तस्य मे शरान् ।
प्रमत्तमनसो रामः प्राहिणोन्मृत्युसंमितान् ॥ ००६ ॥

ततः सूतव्यसनिनं विप्लुतं मां स भार्गवः ।
शरेणाभ्यहनद्गाढं विकृष्य बलवद्धनुः ॥ ००७ ॥

स मे जत्र्वन्तरे राजन्निपत्य रुधिराशनः ।
मयैव सह राजेन्द्र जगाम वसुधातलम् ॥ ००८ ॥

मत्वा तु निहतं रामस्ततो मां भरतर्षभ ।
मेघवद्व्यनदच्चोच्चैर्जहृषे च पुनः पुनः ॥ ००९ ॥

तथा तु पतिते राजन्मयि रामो मुदा युतः ।
उदक्रोशन्महानादं सह तैरनुयायिभिः ॥ ०१० ॥

मम तत्राभवन्ये तु कौरवाः पार्श्वतः स्थिताः ।
आगता ये च युद्धं तज्जनास्तत्र दिदृक्षवः ॥ ०११ ॥

आर्तिं परमिकां जग्मुस्ते तदा मयि पातिते ॥ ०११ ॥

ततोऽपश्यं पातितो राजसिंह ; द्विजानष्टौ सूर्यहुताशनाभान् ।
ते मां समन्तात्परिवार्य तस्थुः ; स्वबाहुभिः परिगृह्याजिमध्ये ॥ ०१२ ॥

रक्ष्यमाणश्च तैर्विप्रैर्नाहं भूमिमुपास्पृशम् ।
अन्तरिक्षे स्थितो ह्यस्मि तैर्विप्रैर्बान्धवैरिव ॥ ०१३ ॥

स्वपन्निवान्तरिक्षे च जलबिन्दुभिरुक्षितः ॥ ०१३ ॥

ततस्ते ब्राह्मणा राजन्नब्रुवन्परिगृह्य माम् ।
मा भैरिति समं सर्वे स्वस्ति तेऽस्त्विति चासकृत् ॥ ०१४ ॥

ततस्तेषामहं वाग्भिस्तर्पितः सहसोत्थितः ।
मातरं सरितां श्रेष्ठामपश्यं रथमास्थिताम् ॥ ०१५ ॥

हयाश्च मे सङ्गृहीतास्तया वै ; महानद्या संयति कौरवेन्द्र ।
पादौ जनन्याः प्रतिपूज्य चाहं ; तथार्ष्टिषेणं रथमभ्यरोहम् ॥ ०१६ ॥

ररक्ष सा मम रथं हयांश्चोपस्कराणि च ।
तामहं प्राञ्जलिर्भूत्वा पुनरेव व्यसर्जयम् ॥ ०१७ ॥

ततोऽहं स्वयमुद्यम्य हयांस्तान्वातरंहसः ।
अयुध्यं जामदग्न्येन निवृत्तेऽहनि भारत ॥ ०१८ ॥

ततोऽहं भरतश्रेष्ठ वेगवन्तं महाबलम् ।
अमुञ्चं समरे बाणं रामाय हृदयच्छिदम् ॥ ०१९ ॥

ततो जगाम वसुधां बाणवेगप्रपीडितः ।
जानुभ्यां धनुरुत्सृज्य रामो मोहवशं गतः ॥ ०२० ॥

ततस्तस्मिन्निपतिते रामे भूरिसहस्रदे ।
आवव्रुर्जलदा व्योम क्षरन्तो रुधिरं बहु ॥ ०२१ ॥

उल्काश्च शतशः पेतुः सनिर्घाताः सकम्पनाः ।
अर्कं च सहसा दीप्तं स्वर्भानुरभिसंवृणोत् ॥ ०२२ ॥

ववुश्च वाताः परुषाश्चलिता च वसुंधरा ।
गृध्रा बडाश्च कङ्काश्च परिपेतुर्मुदा युताः ॥ ०२३ ॥

दीप्तायां दिशि गोमायुर्दारुणं मुहुरुन्नदत् ।
अनाहता दुन्दुभयो विनेदुर्भृशनिस्वनाः ॥ ०२४ ॥

एतदौत्पातिकं घोरमासीद्भरतसत्तम ।
विसञ्ज्ञकल्पे धरणीं गते रामे महात्मनि ॥ ०२५ ॥

ततो रविर्मन्दमरीचिमण्डलो ; जगामास्तं पांसुपुञ्जावगाढः ।
निशा व्यगाहत्सुखशीतमारुता ; ततो युद्धं प्रत्यवहारयावः ॥ ०२६ ॥

एवं राजन्नवहारो बभूव ; ततः पुनर्विमलेऽभूत्सुघोरम् ।
काल्यं काल्यं विंशतिं वै दिनानि ; तथैव चान्यानि दिनानि त्रीणि ॥ ०२७ ॥

# अध्याय १८४

भीष्म उवाच ॥

ततोऽहं निशि राजेन्द्र प्रणम्य शिरसा तदा ।
ब्राह्मणानां पितॄणां च देवतानां च सर्वशः ॥ ००१ ॥

नक्तञ्चराणां भूतानां रजन्याश्च विशां पते ।
शयनं प्राप्य रहिते मनसा समचिन्तयम् ॥ ००२ ॥

जामदग्न्येन मे युद्धमिदं परमदारुणम् ।
अहानि सुबहून्यद्य वर्तते सुमहात्ययम् ॥ ००३ ॥

न च रामं महावीर्यं शक्नोमि रणमूर्धनि ।
विजेतुं समरे विप्रं जामदग्न्यं महाबलम् ॥ ००४ ॥

यदि शक्यो मया जेतुं जामदग्न्यः प्रतापवान् ।
दैवतानि प्रसन्नानि दर्शयन्तु निशां मम ॥ ००५ ॥

ततोऽहं निशि राजेन्द्र प्रसुप्तः शरविक्षतः ।
दक्षिणेनैव पार्श्वेन प्रभातसमये इव ॥ ००६ ॥

ततोऽहं विप्रमुख्यैस्तैर्यैरस्मि पतितो रथात् ।
उत्थापितो धृतश्चैव मा भैरिति च सान्त्वितः ॥ ००७ ॥

त एव मां महाराज स्वप्नदर्शनमेत्य वै ।
परिवार्याब्रुवन्वाक्यं तन्निबोध कुरूद्वह ॥ ००८ ॥

उत्तिष्ठ मा भैर्गाङ्गेय भयं ते नास्ति किञ्चन ।
रक्षामहे नरव्याघ्र स्वशरीरं हि नो भवान्  ॥ ००९  ॥

न त्वां रामो रणे जेता जामदग्न्यः कथञ्चन ।
त्वमेव समरे रामं विजेता भरतर्षभ  ॥ ०१०  ॥

इदमस्त्रं सुदयितं प्रत्यभिज्ञास्यते भवान् ।
विदितं हि तवाप्येतत्पूर्वस्मिन्देहधारणे  ॥ ०११  ॥

प्राजापत्यं विश्वकृतं प्रस्वापं नाम भारत ।
न हीदं वेद रामोऽपि पृथिव्यां वा पुमान्कचित्  ॥ ०१२  ॥

तत्स्मरस्व महाबाहो भृशं संयोजयस्व च ।
न च रामः क्षयं गन्ता तेनास्त्रेण नराधिप  ॥ ०१३  ॥

एनसा च न योगं त्वं प्राप्स्यसे जातु मानद ।
स्वप्स्यते जामदग्न्योऽसौ त्वद्बाणबलपीडितः  ॥ ०१४  ॥

ततो जित्वा त्वमेवैनं पुनरुत्थापयिष्यसि ।
अस्त्रेण दयितेनाजौ भीष्म संबोधनेन वै  ॥ ०१५  ॥

एवं कुरुष्व कौरव्य प्रभाते रथमास्थितः ।
प्रसुप्तं वा मृतं वापि तुल्यं मन्यामहे वयम्  ॥ ०१६  ॥

न च रामेण मर्तव्यं कदाचिदपि पार्थिव ।
ततः समुत्पन्नमिदं प्रस्वापं युज्यतामिति  ॥ ०१७  ॥

इत्युक्त्वान्तर्हिता राजन्सर्व एव द्विजोत्तमाः ।
अष्टौ सदृशरूपास्ते सर्वे भास्वरमूर्तयः  ॥ ०१८  ॥

# अध्याय १८५

भीष्म उवाच ॥

ततो रात्र्यां व्यतीतायां प्रतिबुद्धोऽस्मि भारत ।
तं च सञ्चिन्त्य वै स्वप्नमवापं हर्षमुत्तमम् ॥ ००१ ॥

ततः समभवद्युद्धं मम तस्य च भारत ।
तुमुलं सर्वभूतानां लोमहर्षणमद्भुतम् ॥ ००२ ॥

ततो बाणमयं वर्षं ववर्ष मयि भार्गवः ।
न्यवारयमहं तं च शरजालेन भारत ॥ ००३ ॥

ततः परमसङ्क्रुद्धः पुनरेव महातपाः ।
ह्यस्तनेनैव कोपेन शक्तिं वै प्राहिणोन्मयि ॥ ००४ ॥

इन्द्राशनिसमस्पर्शां यमदण्डोपमप्रभाम् ।
ज्वलन्तीमग्निवत्संख्ये लेलिहानां समन्ततः ॥ ००५ ॥

ततो भरतशार्दूल धिष्ण्यमाकाशगं यथा ।
सा मामभ्यहनत्तूर्णमंसदेशे च भारत ॥ ००६ ॥

अथासृङ्मेऽस्रवद्घोरं गिरेर्गैरिकधातुवत् ।
रामेण सुमहाबाहो क्षतस्य क्षतजेक्षण ॥ ००७ ॥

ततोऽहं जामदग्न्याय भृशं क्रोधसमन्वितः ।
प्रेषयं मृत्युसङ्काशं बाणं सर्पविषोपमम् ॥ ००८ ॥

स तेनाभिहतो वीरो ललाटे द्विजसत्तमः ।
अशोभत महाराज सश्रृङ्ग इव पर्वतः ॥ ००९ ॥

स संरब्धः समावृत्य बाणं कालान्तकोपमम् ।
संदधे बलवत्कृष्य घोरं शत्रुनिबर्हणम् ॥ ०१० ॥

स वक्षसि पपातोग्रः शरो व्याल इव श्वसन् ।
महीं राजंस्ततश्चाहमगच्छं रुधिराविलः ॥ ०११ ॥

अवाप्य तु पुनः सञ्ज्ञां जामदग्न्याय धीमते ।
प्राहिण्वं विमलां शक्तिं ज्वलन्तीमशनीमिव ॥ ०१२ ॥

सा तस्य द्विजमुख्यस्य निपपात भुजान्तरे ।
विह्वलश्चाभवद्राजन्वेपथुश्चैनमाविशत् ॥ ०१३ ॥

तत एनं परिष्वज्य सखा विप्रो महातपाः ।
अकृतव्रणः शुभैर्वाक्यैराश्वासयदनेकधा ॥ ०१४ ॥

समाश्वस्तस्तदा रामः क्रोधामर्षसमन्वितः ।
प्रादुश्चक्रे तदा ब्राह्मं परमास्त्रं महाव्रतः ॥ ०१५ ॥

ततस्तत्प्रतिघातार्थं ब्राह्ममेवास्त्रमुत्तमम् ।
मया प्रयुक्तं जज्वाल युगान्तमिव दर्शयत् ॥ ०१६ ॥

तयोर्ब्रह्मास्त्रयोरासीदन्तरा वै समागमः ।
असंप्राप्यैव रामं च मां च भारतसत्तम ॥ ०१७ ॥

ततो व्योम्नि प्रादुरभूत्तेज एव हि केवलम् ।
भूतानि चैव सर्वाणि जग्मुरार्तिं विशां पते ॥ ०१८ ॥

ऋषयश्च सगन्धर्वा देवताश्चैव भारत ।

संतापं परमं जग्मुरस्त्रतेजोभिपीडिताः ॥ ०१९ ॥

ततश्चचाल पृथिवी सपर्वतवनद्रुमा ।
संतप्तानि च भूतानि विषादं जग्मुरुत्तमम् ॥ ०२० ॥

प्रजज्वाल नभो राजन्धूमायन्ते दिशो दश ।
न स्थातुमन्तरिक्षे च शेकुराकाशगास्तदा ॥ ०२१ ॥

ततो हाहाकृते लोके सदेवासुरराक्षसे ।
इदमन्तरमित्येव योक्तुकामोऽस्मि भारत ॥ ०२२ ॥

प्रस्वापमस्त्रं दयितं वचनाद्ब्रह्मवादिनाम् ।
चिन्तितं च तदस्त्रं मे मनसि प्रत्यभात्तदा ॥ ०२३ ॥

---

# अध्याय १८६

भीष्म उवाच ॥

ततो हलहलाशब्दो दिवि राजन्महानभूत् ।
प्रस्वापं भीष्म मा स्राक्षीरिति कौरवनन्दन ॥ ००१ ॥

अयुञ्जमेव चैवाहं तदस्त्रं भृगुनन्दने ।
प्रस्वापं मां प्रयुञ्जानं नारदो वाक्यमब्रवीत् ॥ ००२ ॥

एते वियति कौरव्य दिवि देवगणाः स्थिताः ।
ते त्वां निवारयन्त्यद्य प्रस्वापं मा प्रयोजय ॥ ००३ ॥

रामस्तपस्वी ब्रह्मण्यो ब्राह्मणश्च गुरुश्च ते ।

तस्यावमानं कौरव्य मा स्म कार्षीः कथञ्चन ॥ ००४ ॥

ततोऽपश्यं दिविष्ठान्वै तानष्टौ ब्रह्मवादिनः ।
ते मां स्मयन्तो राजेन्द्र शनकैरिदमब्रुवन् ॥ ००५ ॥

यथाह भरतश्रेष्ठ नारदस्तत्तथा कुरु ।
एतद्धि परमं श्रेयो लोकानां भरतर्षभ ॥ ००६ ॥

ततश्च प्रतिसंहृत्य तदस्त्रं स्वापनं मृधे ।
ब्रह्मास्त्रं दीपयां चक्रे तस्मिन्युधि यथाविधि ॥ ००७ ॥

ततो रामो रुषितो राजपुत्र ; दृष्ट्वा तदस्त्रं विनिवर्तितं वै ।
जितोऽस्मि भीष्मेण सुमन्दबुद्धि ;रित्येव वाक्यं सहसा व्यमुञ्चत् ॥ ००८ ॥

ततोऽपश्यत्पितरं जामदग्न्यः ; पितुस्तथा पितरं तस्य चान्यम् ।
त एवैनं संपरिवार्य तस्थु ;रूचुश्चैनं सान्त्वपूर्वं तदानीम् ॥ ००९ ॥

मा स्मैवं साहसं वत्स पुनः कार्षीः कथञ्चन ।
भीष्मेण संयुगं गन्तुं क्षत्रियेण विशेषतः ॥ ०१० ॥

क्षत्रियस्य तु धर्मोऽयं यद्युद्धं भृगुनन्दन ।
स्वाध्यायो व्रतचर्या च ब्राह्मणानां परं धनम् ॥ ०११ ॥

इदं निमित्ते कस्मिंश्चिदस्माभिरुपमन्त्रितम् ।
शस्त्रधारणमत्युग्रं तच्च कार्यं कृतं त्वया ॥ ०१२ ॥

वत्स पर्याप्तमेतावद्भीष्मेण सह संयुगे ।
विमर्दस्ते महाबाहो व्यपयाहि रणादितः ॥ ०१३ ॥

पर्याप्तमेतद्भद्रं ते तव कार्मुकधारणम् ।
विसर्जयैतद्दुर्धर्ष तपस्तप्यस्व भार्गव ॥ ०१४ ॥

एष भीष्मः शांतनवो देवैः सर्वैर्निवारितः ।
निवर्तस्व रणादस्मादिति चैव प्रचोदितः ॥ ०१५ ॥

रामेण सह मा योत्सीर्गुरुणेति पुनः पुनः ।
न हि रामो रणे जेतुं त्वया न्याय्यः कुरूद्वह ॥ ०१६ ॥

मानं कुरुष्व गाङ्गेय ब्राह्मणस्य रणाजिरे ॥ ०१६ ॥

वयं तु गुरवस्तुभ्यं ततस्त्वां वारयामहे ।
भीष्मो वसूनामन्यतमो दिष्ट्या जीवसि पुत्रक ॥ ०१७ ॥

गाङ्गेयः शंतनोः पुत्रो वसुरेष महायशाः ।
कथं त्वया रणे जेतुं राम शक्यो निवर्त वै ॥ ०१८ ॥

अर्जुनः पाण्डवश्रेष्ठः पुरंदरसुतो बली ।
नरः प्रजापतिर्वीरः पूर्वदेवः सनातनः ॥ ०१९ ॥

सव्यसाचीति विख्यातस्त्रिषु लोकेषु वीर्यवान् ।
भीष्ममृत्युर्यथाकालं विहितो वै स्वयंभुवा ॥ ०२० ॥

एवमुक्तः स पितृभिः पितॄन्रामोऽब्रवीदिदम् ।
नाहं युधि निवर्तेयमिति मे व्रतमाहितम् ॥ ०२१ ॥

न निवर्तितपूर्वं च कदाचिद्रणमूर्धनि ।
निवर्त्यतामापगेयः कामं युद्धात्पितामहाः ॥ ०२२ ॥

न त्वहं विनिवर्तिष्ये युद्धादस्मात्कथञ्चन ॥ ०२२ ॥

ततस्ते मुनयो राजन्नृचीकप्रमुखास्तदा ।
नारदेनैव सहिताः समागम्येदमब्रुवन् ॥ ०२३ ॥

निवर्तस्व रणात्तात मानयस्व द्विजोत्तमान् ।
नेत्यवोचमहं तांश्च क्षत्रधर्मव्यपेक्षया ॥ ०२४ ॥

मम व्रतमिदं लोके नाहं युद्धात्कथञ्चन ।
विमुखो विनिवर्तेयं पृष्ठतोऽभ्याहतः शरैः ॥ ०२५ ॥

नाहं लोभान्न कार्पण्यान्न भयान्नार्थकारणात् ।
त्यजेयं शाश्वतं धर्ममिति मे निश्चिता मतिः ॥ ०२६ ॥

ततस्ते मुनयः सर्वे नारदप्रमुखा नृप ।
भागीरथी च मे माता रणमध्यं प्रपेदिरे ॥ ०२७ ॥

तथैवात्तशरो धन्वी तथैव दृढनिश्चयः ।
स्थितोऽहमाहवे योद्धुं ततस्ते राममब्रुवन् ॥ ०२८ ॥

समेत्य सहिता भूयः समरे भृगुनन्दनम् ॥ ०२८ ॥

नावनीतं हि हृदयं विप्राणां शाम्य भार्गव ।
राम राम निवर्तस्व युद्धादस्माद्द्विजोत्तम ॥ ०२९ ॥

अवध्यो हि त्वया भीष्मस्त्वं च भीष्मस्य भार्गव ॥ ०२९ ॥

एवं ब्रुवन्तस्ते सर्वे प्रतिरुध्य रणाजिरम् ।
न्यासयां चक्रिरे शस्त्रं पितरो भृगुनन्दनम् ॥ ०३० ॥

ततोऽहं पुनरेवाथ तानष्टौ ब्रह्मवादिनः ।
अद्राक्षं दीप्यमानान्वै ग्रहानष्टाविवोदितान् ॥ ०३१ ॥

ते मां सप्रणयं वाक्यमब्रुवन्समरे स्थितम् ।
प्रैहि रामं महाबाहो गुरुं लोकहितं कुरु ॥ ०३२ ॥

दृष्ट्वा निवर्तितं रामं सुहृद्वाक्येन तेन वै ।
लोकानां च हितं कुर्वन्नहमप्याददे वचः ॥ ०३३ ॥

ततोऽहं राममासाद्य ववन्दे भृशविक्षतः ।
रामश्चाभ्युत्स्मयन्प्रेम्णा मामुवाच महातपाः ॥ ०३४ ॥

त्वत्समो नास्ति लोकेऽस्मिन्क्षत्रियः पृथिवीचरः ।
गम्यतां भीष्म युद्धेऽस्मिंस्तोषितोऽहं भृशं त्वया ॥ ०३५ ॥

मम चैव समक्षं तां कन्यामाहूय भार्गवः ।
उवाच दीनया वाचा मध्ये तेषां तपस्विनाम् ॥ ०३६ ॥

---

# अध्याय १८७

राम उवाच ॥

प्रत्यक्षमेतल्लोकानां सर्वेषामेव भामिनि ।
यथा मया परं शक्त्या कृतं वै पौरुषं महत् ॥ ००१ ॥

न चैव युधि शक्नोमि भीष्मं शस्त्रभृतां वरम् ।
विशेषयितुमत्यर्थमुत्तमास्त्राणि दर्शयन् ॥ ००२ ॥

एषा मे परमा शक्तिरेतन्मे परमं बलम् ।
यथेष्टं गम्यतां भद्रे किमन्यद्वा करोमि ते ॥ ००३ ॥

भीष्ममेव प्रपद्यस्व न तेऽन्या विद्यते गतिः ।
निर्जितो ह्यस्मि भीष्मेण महास्त्राणि प्रमुञ्चता ॥ ००४ ॥

भीष्म उवाच ॥

एवमुक्त्वा ततो रामो विनिःश्वस्य महामनाः ।
तूष्णीमासीत्तदा कन्या प्रोवाच भृगुनन्दनम् ॥ ००५ ॥

भगवन्नेवमेवैतद्यथाह भगवांस्तथा ।
अजेयो युधि भीष्मोऽयमपि देवैरुदारधीः ॥ ००६ ॥

यथाशक्ति यथोत्साहं मम कार्यं कृतं त्वया ।
अनिधाय रणे वीर्यमस्त्राणि विविधानि च ॥ ००७ ॥

न चैष शक्यते युद्धे विशेषयितुमन्ततः ।
न चाहमेनं यास्यामि पुनर्भीष्मं कथञ्चन ॥ ००८ ॥

गमिष्यामि तु तत्राहं यत्र भीष्मं तपोधन ।
समरे पातयिष्यामि स्वयमेव भृगूद्वह ॥ ००९ ॥

एवमुक्त्वा ययौ कन्या रोषव्याकुललोचना ।
तपसे धृतसङ्कल्पा मम चिन्तयती वधम् ॥ ०१० ॥

ततो महेन्द्रं सह तैर्मुनिभिर्भृगुसत्तमः ।
यथागतं ययौ रामो मामुपामन्त्र्य भारत ॥ ०११ ॥

ततोऽहं रथमारुह्य स्तूयमानो द्विजातिभिः ।
प्रविश्य नगरं मात्रे सत्यवत्यै न्यवेदयम् ॥ ०१२ ॥

यथावृत्तं महाराज सा च मां प्रत्यनन्दत ॥ ०१२ ॥

पुरुषांश्चादिशं प्राज्ञान्कन्यावृत्तान्तकर्मणि ।
दिवसे दिवसे ह्यस्या गतजल्पितचेष्टितम् ॥ ०१३ ॥

प्रत्याहरंश्च मे युक्ताः स्थिताः प्रियहिते मम  ॥ ०१३  ॥

यदैव हि वनं प्रायात्कन्या सा तपसे धृता ।
तदैव व्यथितो दीनो गतचेता इवाभवम्  ॥ ०१४  ॥

न हि मां क्षत्रियः कश्चिद्वीर्येण विजयेद्युधि ।
ऋते ब्रह्मविदस्तात तपसा संशितव्रतात्  ॥ ०१५  ॥

अपि चैतन्मया राजन्नारदेऽपि निवेदितम् ।
व्यासे चैव भयात्कार्यं तौ चोभौ मामवोचताम्  ॥ ०१६  ॥

न विषादस्त्वया कार्यो भीष्म काशिसुतां प्रति ।
दैवं पुरुषकारेण को निवर्तितुमुत्सहेत्  ॥ ०१७  ॥

सा तु कन्या महाराज प्रविश्याश्रममण्डलम् ।
यमुनातीरमाश्रित्य तपस्तेपेऽतिमानुषम्  ॥ ०१८  ॥

निराहारा कृशा रूक्षा जटिला मलपङ्किनी ।
षण्मासान्वायुभक्षा च स्थाणुभूता तपोधना  ॥ ०१९  ॥

यमुनातीरमासाद्य संवत्सरमथापरम् ।
उदवासं निराहारा पारयामास भामिनी  ॥ ०२०  ॥

शीर्णपर्णेन चैकेन पारयामास चापरम् ।
संवत्सरं तीव्रकोपा पादाङ्गुष्ठाग्रधिष्ठिता  ॥ ०२१  ॥

एवं द्वादश वर्षाणि तापयामास रोदसी ।
निवर्त्यमानापि तु सा ज्ञातिभिर्नैव शक्यते  ॥ ०२२  ॥

ततोऽगमद्वत्सभूमिं सिद्धचारणसेविताम् ।

आश्रमं पुण्यशीलानां तापसानां महात्मनाम्  ॥ ०२३  ॥

तत्र पुण्येषु देशेषु साप्लुताङ्गी दिवानिशम् ।
व्यचरत्काशिकन्या सा यथाकामविचारिणी  ॥ ०२४  ॥

नन्दाश्रमे महाराज ततोलूकाश्रमे शुभे ।
च्यवनस्याश्रमे चैव ब्रह्मणः स्थान एव च  ॥ ०२५  ॥

प्रयागे देवयजने देवारण्येषु चैव ह ।
भोगवत्यां तथा राजन्कौशिकस्याश्रमे तथा  ॥ ०२६  ॥

माण्डव्यस्याश्रमे राजन्दिलीपस्याश्रमे तथा ।
रामह्रदे च कौरव्य पैलगार्ग्यस्य चाश्रमे  ॥ ०२७  ॥

एतेषु तीर्थेषु तदा काशिकन्या विशां पते ।
आप्लावयत गात्राणि तीव्रमास्थाय वै तपः  ॥ ०२८  ॥

तामब्रवीत्कौरवेय मम माता जलोत्थिता ।
किमर्थं क्लिश्यसे भद्रे तथ्यमेतद्ब्रवीहि मे  ॥ ०२९  ॥

सैनामथाब्रवीद्राजन्कृताञ्जलिरनिन्दिता ।
भीष्मो रामेण समरे न जितश्चारुलोचने  ॥ ०३०  ॥

कोऽन्यस्तमुत्सहेज्जेतुमुद्यतेषुं महीपतिम् ।
साहं भीष्मविनाशाय तपस्तप्स्ये सुदारुणम्  ॥ ०३१  ॥

चरामि पृथिवीं देवि यथा हन्यामहं नृपम् ।
एतद्व्रतफलं देहे परस्मिन्स्याद्यथा हि मे  ॥ ०३२  ॥

ततोऽब्रवीत्सागरगा जिह्मं चरसि भामिनि ।
नैष कामोऽनवद्याङ्गि शक्यः प्राप्तुं त्वयाबले  ॥ ०३३  ॥

यदि भीष्मविनाशाय काश्ये चरसि वै व्रतम् ।
व्रतस्था च शरीरं त्वं यदि नाम विमोक्ष्यसि ॥ ०३४ ॥

नदी भविष्यसि शुभे कुटिला वार्षिकोदका ॥ ०३४ ॥

दुस्तीर्था चानभिज्ञेया वार्षिकी नाष्टमासिकी ।
भीमग्राहवती घोरा सर्वभूतभयङ्करी ॥ ०३५ ॥

एवमुक्त्वा ततो राजन्काशिकन्यां न्यवर्तत ।
माता मम महाभागा स्मयमानेव भामिनी ॥ ०३६ ॥

कदाचिदष्टमे मासि कदाचिद्दशमे तथा ।
न प्राश्नीतोदकमपि पुनः सा वरवर्णिनी ॥ ०३७ ॥

सा वत्सभूमिं कौरव्य तीर्थलोभात्ततस्ततः ।
पतिता परिधावन्ती पुनः काशिपतेः सुता ॥ ०३८ ॥

सा नदी वत्सभूम्यां तु प्रथिताम्बेति भारत ।
वार्षिकी ग्राहबहुला दुस्तीर्था कुटिला तथा ॥ ०३९ ॥

सा कन्या तपसा तेन भागार्धेन व्यजायत ।
नदी च राजन्वत्सेषु कन्या चैवाभवत्तदा ॥ ०४० ॥

---

# अध्याय १८८

भीष्म उवाच ॥

ततस्ते तापसाः सर्वे तपसे धृतनिश्चयाम् ।
दृष्ट्वा न्यवर्तयंस्तात किं कार्यमिति चाब्रुवन्  ॥ ००१  ॥

तानुवाच ततः कन्या तपोवृद्धानृषींस्तदा ।
निराकृतास्मि भीष्मेण भ्रंशिता पतिधर्मतः  ॥ ००२  ॥

वधार्थं तस्य दीक्षा मे न लोकार्थं तपोधनाः ।
निहत्य भीष्मं गच्छेयं शान्तिमित्येव निश्चयः  ॥ ००३  ॥

यत्कृते दुःखवसतिमिमां प्राप्तास्मि शाश्वतीम् ।
पतिलोकाद्विहीना च नैव स्त्री न पुमानिह  ॥ ००४  ॥

नाहत्वा युधि गाङ्गेयं निवर्तेयं तपोधनाः ।
एष मे हृदि सङ्कल्पो यदर्थमिदमुद्यतम्  ॥ ००५  ॥

स्त्रीभावे परिनिर्विण्णा पुंस्त्वार्थे कृतनिश्चया ।
भीष्मे प्रतिचिकीर्षामि नास्मि वार्येति वै पुनः  ॥ ००६  ॥

तां देवो दर्शयामास शूलपाणिरुमापतिः ।
मध्ये तेषां महर्षीणां स्वेन रूपेण भामिनीम्  ॥ ००७  ॥

छन्द्यमाना वरेणाथ सा वव्रे मत्पराजयम् ।
वधिष्यसीति तां देवः प्रत्युवाच मनस्विनीम्  ॥ ००८  ॥

ततः सा पुनरेवाथ कन्या रुद्रमुवाच ह ।
उपपद्येत्कथं देव स्त्रियो मम जयो युधि  ॥ ००९  ॥

स्त्रीभावेन च मे गाढं मनः शान्तमुमापते  ॥ ००९  ॥

प्रतिश्रुतश्च भूतेश त्वया भीष्मपराजयः ।
यथा स सत्यो भवति तथा कुरु वृषध्वज  ॥ ०१०  ॥

यथा हन्यां समागम्य भीष्मं शांतनवं युधि ॥ ०१० ॥

तामुवाच महादेवः कन्यां किल वृषध्वजः ।
न मे वागनृतं भद्रे प्राह सत्यं भविष्यति ॥ ०११ ॥

वधिष्यसि रणे भीष्मं पुरुषत्वं च लप्स्यसे ।
स्मरिष्यसि च तत्सर्वं देहमन्यं गता सती ॥ ०१२ ॥

द्रुपदस्य कुले जाता भविष्यसि महारथः ।
शीघ्रास्त्रश्चित्रयोधी च भविष्यसि सुसंमतः ॥ ०१३ ॥

यथोक्तमेव कल्याणि सर्वमेतद्भविष्यति ।
भविष्यसि पुमान्पश्चात्कस्माच्चित्कालपर्ययात् ॥ ०१४ ॥

एवमुक्त्वा महातेजाः कपर्दी वृषभध्वजः ।
पश्यतामेव विप्राणां तत्रैवान्तरधीयत ॥ ०१५ ॥

ततः सा पश्यतां तेषां महर्षीणामनिन्दिता ।
समाहृत्य वनात्तस्मात्काष्ठानि वरवर्णिनी ॥ ०१६ ॥

चितां कृत्वा सुमहतीं प्रदाय च हुताशनम् ।
प्रदीप्तेऽग्नौ महाराज रोषदीप्तेन चेतसा ॥ ०१७ ॥

उक्त्वा भीष्मवधायेति प्रविवेश हुताशनम् ।
ज्येष्ठा काशिसुता राजन्यमुनामभितो नदीम् ॥ ०१८ ॥

# अध्याय १८९

दुर्योधन उवाच ॥

कथं शिखण्डी गाङ्गेय कन्या भूत्वा सती तदा ।
पुरुषोऽभवद्युधि श्रेष्ठ तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

भार्या तु तस्य राजेन्द्र द्रुपदस्य महीपतेः ।
महिषी दयिता ह्यासीदपुत्रा च विशां पते ॥ ००२ ॥

एतस्मिन्नेव काले तु द्रुपदो वै महीपतिः ।
अपत्यार्थं महाराज तोषयामास शङ्करम् ॥ ००३ ॥

अस्मद्वधार्थं निश्चित्य तपो घोरं समास्थितः ।
लेभे कन्यां महादेवात्पुत्रो मे स्यादिति ब्रुवन् ॥ ००४ ॥

भगवन्पुत्रमिच्छामि भीष्मं प्रतिचिकीर्षया ।
इत्युक्तो देवदेवेन स्त्रीपुमांस्ते भविष्यति ॥ ००५ ॥

निवर्तस्व महीपाल नैतज्जात्वन्यथा भवेत् ।
स तु गत्वा च नगरं भार्यामिदमुवाच ह ॥ ००६ ॥

कृतो यत्नो मया देवि पुत्रार्थे तपसा महान् ।
कन्या भूत्वा पुमान्भावी इति चोक्तोऽस्मि शंभुना ॥ ००७ ॥

पुनः पुनर्याच्यमानो दिष्टमित्यब्रवीच्छिवः ।
न तदन्यद्धि भविता भवितव्यं हि तत्तथा ॥ ००८ ॥

ततः सा नियता भूत्वा ऋतुकाले मनस्विनी ।

पत्नी द्रुपदराजस्य द्रुपदं संविवेश ह ॥ ००९ ॥

लेभे गर्भं यथाकालं विधिदृष्टेन हेतुना ।
पार्षतात्सा महीपाल यथा मां नारदोऽब्रवीत् ॥ ०१० ॥

ततो दधार तं गर्भं देवी राजीवलोचना ।
तां स राजा प्रियां भार्यां द्रुपदः कुरुनन्दन ॥ ०११ ॥

पुत्रस्नेहान्महाबाहुः सुखं पर्यचरत्तदा ॥ ०११ ॥

अपुत्रस्य ततो राज्ञो द्रुपदस्य महीपतेः ।
कन्यां प्रवररूपां तां प्राजायत नराधिप ॥ ०१२ ॥

अपुत्रस्य तु राज्ञः सा द्रुपदस्य यशस्विनी ।
ख्यापयामास राजेन्द्र पुत्रो जातो ममेति वै ॥ ०१३ ॥

ततः स राजा द्रुपदः प्रच्छन्नाया नराधिप ।
पुत्रवत्पुत्रकार्याणि सर्वाणि समकारयत् ॥ ०१४ ॥

रक्षणं चैव मन्त्रस्य महिषी द्रुपदस्य सा ।
चकार सर्वयत्नेन ब्रुवाणा पुत्र इत्युत ॥ ०१५ ॥

न हि तां वेद नगरे कश्चिदन्यत्र पार्षतात् ॥ ०१५ ॥

श्रद्दधानो हि तद्वाक्यं देवस्याद्भुततेजसः ।
छादयामास तां कन्यां पुमानिति च सोऽब्रवीत् ॥ ०१६ ॥

जातकर्माणि सर्वाणि कारयामास पार्थिवः ।
पुंवद्विधानयुक्तानि शिखण्डीति च तां विदुः ॥ ०१७ ॥

अहमेकस्तु चारेण वचनान्नारदस्य च ।

ज्ञातवान्देववाक्येन अम्बायास्तपसा तथा ॥ ०१८ ॥

---

# अध्याय १९०

भीष्म उवाच ॥

चकार यत्नं द्रुपदः सर्वस्मिन्स्वजने महत् ।
ततो लेख्यादिषु तथा शिल्पेषु च परं गता ॥ ००१ ॥

इष्वस्त्रे चैव राजेन्द्र द्रोणशिष्यो बभूव ह ॥ ००१ ॥

तस्य माता महाराज राजानं वरवर्णिनी ।
चोदयामास भार्यार्थं कन्यायाः पुत्रवत्तदा ॥ ००२ ॥

ततस्तां पार्षतो दृष्ट्वा कन्यां संप्राप्तयौवनाम् ।
स्त्रियं मत्वा तदा चिन्तां प्रपेदे सह भार्यया ॥ ००३ ॥

द्रुपद उवाच ॥

कन्या ममेयं संप्राप्ता यौवनं शोकवर्धिनी ।
मया प्रच्छादिता चेयं वचनाच्छूलपाणिनः ॥ ००४ ॥

न तन्मिथ्या महाराज्ञि भविष्यति कथञ्चन ।
त्रैलोक्यकर्ता कस्माद्धि तन्मृषा कर्तुमर्हति ॥ ००५ ॥

भार्योवाच ॥

यदि ते रोचते राजन्वक्ष्यामि शृणु मे वचः ।

श्रुत्वेदानीं प्रपद्येथाः स्वकार्यं पृषतात्मज ॥ ००६ ॥

क्रियतामस्य नृपते विधिवद्दारसङ्ग्रहः ।
सत्यं भवति तद्वाक्यमिति मे निश्चिता मतिः ॥ ००७ ॥

भीष्म उवाच ॥

ततस्तौ निश्चयं कृत्वा तस्मिन्कार्येऽथ दम्पती ।
वरयां चक्रतुः कन्यां दशार्णाधिपतेः सुताम् ॥ ००८ ॥

ततो राजा द्रुपदो राजसिंहः ; सर्वान्राज्ञः कुलतः संनिशाम्य ।
दाशार्णकस्य नृपतेस्तनूजां ; शिखण्डिने वरयामास दारान् ॥ ००९ ॥

हिरण्यवर्मेति नृपो योऽसौ दाशार्णकः स्मृतः ।
स च प्रादान्महीपालः कन्यां तस्मै शिखण्डिने ॥ ०१० ॥

स च राजा दशार्णेषु महानासीन्महीपतिः ।
हिरण्यवर्मा दुर्धर्षो महासेनो महामनाः ॥ ०११ ॥

कृते विवाहे तु तदा सा कन्या राजसत्तम ।
यौवनं समनुप्राप्ता सा च कन्या शिखण्डिनी ॥ ०१२ ॥

कृतदारः शिखण्डी तु काम्पिल्यं पुनरागमत् ।
न च सा वेद तां कन्यां कञ्चित्कालं स्त्रियं किल ॥ ०१३ ॥

हिरण्यवर्मणः कन्या ज्ञात्वा तां तु शिखण्डिनीम् ।
धात्रीणां च सखीनां च व्रीडमाना न्यवेदयत् ॥ ०१४ ॥

कन्यां पञ्चालराजस्य सुतां तां वै शिखण्डिनीम् ॥ ०१४ ॥

ततस्ता राजशार्दूल धात्र्यो दाशार्णिकास्तदा ।

जग्मुरार्तिं परां दुःखात्प्रेषयामासुरेव च ॥ ०१५ ॥

ततो दशार्णाधिपतेः प्रेष्याः सर्वं न्यवेदयन् ।
विप्रलम्भं यथावृत्तं स च चुक्रोध पार्थिवः ॥ ०१६ ॥

शिखण्ड्यपि महाराज पुंवद्राजकुले तदा ।
विजहार मुदा युक्तः स्त्रीत्वं नैवातिरोचयन् ॥ ०१७ ॥

ततः कतिपयाहस्य तच्छ्रुत्वा भरतर्षभ ।
हिरण्यवर्मा राजेन्द्र रोषादार्तिं जगाम ह ॥ ०१८ ॥

ततो दाशार्णको राजा तीव्रकोपसमन्वितः ।
दूतं प्रस्थापयामास द्रुपदस्य निवेशने ॥ ०१९ ॥

ततो द्रुपदमासाद्य दूतः काञ्चनवर्मणः ।
एक एकान्तमुत्सार्य रहो वचनमब्रवीत् ॥ ०२० ॥

दशार्णराजो राजंस्त्वामिदं वचनमब्रवीत् ।
अभिषङ्गात्प्रकुपितो विप्रलब्धस्त्वयानघ ॥ ०२१ ॥

अवमन्यसे मां नृपते नूनं दुर्मन्त्रितं तव ।
यन्मे कन्यां स्वकन्यार्थे मोहाद्याचितवानसि ॥ ०२२ ॥

तस्याद्य विप्रलम्भस्य फलं प्राप्नुहि दुर्मते ।
एष त्वां सजनामात्यमुद्धरामि स्थिरो भव ॥ ०२३ ॥

# अध्याय १९१

भीष्म उवाच ॥

एवमुक्तस्य दूतेन द्रुपदस्य तदा नृप ।
चोरस्येव गृहीतस्य न प्रावर्तत भारती ॥ ००१ ॥

स यत्नमकरोत्तीव्रं संबन्धैरनुसान्त्वनैः ।
दूतैर्मधुरसंभाषैर्नैतदस्तीति संदिशन् ॥ ००२ ॥

स राजा भूय एवाथ कृत्वा तत्त्वत आगमम् ।
कन्येति पाञ्चालसुतां त्वरमाणोऽभिनिर्ययौ ॥ ००३ ॥

ततः संप्रेषयामास मित्राणाममितौजसाम् ।
दुहितुर्विप्रलम्भं तं धात्रीणां वचनात्तदा ॥ ००४ ॥

ततः समुदयं कृत्वा बलानां राजसत्तमः ।
अभियाने मतिं चक्रे द्रुपदं प्रति भारत ॥ ००५ ॥

ततः संमन्त्रयामास मित्रैः सह महीपतिः ।
हिरण्यवर्मा राजेन्द्र पाञ्चाल्यं पार्थिवं प्रति ॥ ००६ ॥

तत्र वै निश्चितं तेषामभूद्राज्ञां महात्मनाम् ।
तथ्यं चेद्भवति ह्येतत्कन्या राजञ्शिखण्डिनी ॥ ००७ ॥

बद्ध्वा पाञ्चालराजानमानयिष्यामहे गृहान् ॥ ००७ ॥

अन्यं राजानमाधाय पाञ्चालेषु नरेश्वरम् ।
घातयिष्याम नृपतिं द्रुपदं सशिखण्डिनम् ॥ ००८ ॥

स तदा दूतमाज्ञाय पुनः क्षत्तारमीश्वरः ।

प्रास्थापयत्पार्षताय हन्मीति त्वां स्थिरो भव ॥ ००९ ॥

स प्रकृत्या च वै भीरुः किल्बिषी च नराधिपः ।
भयं तीव्रमनुप्राप्तो द्रुपदः पृथिवीपतिः ॥ ०१० ॥

विसृज्य दूतं दाशार्णं द्रुपदः शोककर्शितः ।
समेत्य भार्यां रहिते वाक्यमाह नराधिपः ॥ ०११ ॥

भयेन महताविष्टो हृदि शोकेन चाहतः ।
पाञ्चालराजो दयितां मातरं वै शिखण्डिनः ॥ ०१२ ॥

अभियास्यति मां कोपात्संबन्धी सुमहाबलः ।
हिरण्यवर्मा नृपतिः कर्षमाणो वरूथिनीम् ॥ ०१३ ॥

किमिदानीं करिष्यामि मूढः कन्यामिमां प्रति ।
शिखण्डी किल पुत्रस्ते कन्येति परिशङ्कितः ॥ ०१४ ॥

इति निश्चित्य तत्त्वेन समित्रः सबलानुगः ।
वञ्चितोऽस्मीति मन्वानो मां किलोद्धर्तुमिच्छति ॥ ०१५ ॥

किमत्र तथ्यं सुश्रोणि किं मिथ्या ब्रूहि शोभने ।
श्रुत्वा त्वत्तः शुभे वाक्यं संविधास्याम्यहं तथा ॥ ०१६ ॥

अहं हि संशयं प्राप्तो बाला चेयं शिखण्डिनी ।
त्वं च राज्ञि महत्कृच्छ्रं संप्राप्ता वरवर्णिनि ॥ ०१७ ॥

सा त्वं सर्वविमोक्षाय तत्त्वमाख्याहि पृच्छतः ।
तथा विदध्यां सुश्रोणि कृत्यस्यास्य शुचिस्मिते ॥ ०१८ ॥

शिखण्डिनि च मा भैस्त्वं विधास्ये तत्र तत्त्वतः ॥ ०१८ ॥

क्रिययाहं वरारोहे वञ्चितः पुत्रधर्मतः ।
मया दाशार्णको राजा वञ्चितश्च महीपतिः ॥ ०१९ ॥

तदाचक्ष्व महाभागे विधास्ये तत्र यद्धितम् ॥ ०१९ ॥

जानतापि नरेन्द्रेण ख्यापनार्थं परस्य वै ।
प्रकाशं चोदिता देवी प्रत्युवाच महीपतिम् ॥ ०२० ॥

---

# अध्याय १९२

भीष्म उवाच ॥

ततः शिखण्डिनो माता यथातत्त्वं नराधिप ।
आचचक्षे महाबाहो भर्त्रे कन्यां शिखण्डिनीम् ॥ ००१ ॥

अपुत्रया मया राजन्सपत्नीनां भयादिदम् ।
कन्या शिखण्डिनी जाता पुरुषो वै निवेदितः ॥ ००२ ॥

त्वया चैव नरश्रेष्ठ तन्मे प्रीत्यानुमोदितम् ।
पुत्रकर्म कृतं चैव कन्यायाः पार्थिवर्षभ ॥ ००३ ॥

भार्या चोढा त्वया राजन्दशार्णाधिपतेः सुता ॥ ००३ ॥

त्वया च प्रागभिहितं देववाक्यार्थदर्शनात् ।
कन्या भूत्वा पुमान्भावीत्येवं चैतदुपेक्षितम् ॥ ००४ ॥

एतच्छ्रुत्वा द्रुपदो यज्ञसेनः ; सर्वं तत्त्वं मन्त्रविद्भ्यो निवेद्य ।

मन्त्रं राजा मन्त्रयामास राज ;न्यद्यद्युक्तं रक्षणे वै प्रजानाम् ॥ ००५ ॥

संबन्धकं चैव समर्थ्य तस्मि ;न्दाशार्णके वै नृपतौ नरेन्द्र ।
स्वयं कृत्वा विप्रलम्भं यथाव ;न्मन्त्रैकाग्रो निश्चयं वै जगाम ॥ ००६ ॥

स्वभावगुप्तं नगरमापत्काले तु भारत ।
गोपयामास राजेन्द्र सर्वतः समलङ्कृतम् ॥ ००७ ॥

आर्तिं च परमां राजा जगाम सह भार्यया ।
दशार्णपतिना सार्धं विरोधे भरतर्षभ ॥ ००८ ॥

कथं संबन्धिना सार्धं न मे स्याद्विग्रहो महान् ।
इति सञ्चिन्त्य मनसा दैवतान्यर्चयत्तदा ॥ ००९ ॥

तं तु दृष्ट्वा तदा राजन्देवी देवपरं तथा ।
अर्चां प्रयुञ्जानमथो भार्या वचनमब्रवीत् ॥ ०१० ॥

देवानां प्रतिपत्तिश्च सत्या साधुमता सदा ।
सा तु दुःखार्णवं प्राप्य नः स्यादर्चयतां भृशम् ॥ ०११ ॥

दैवतानि च सर्वाणि पूज्यन्तां भूरिदक्षिणैः ।
अग्नयश्चापि हूयन्तां दाशार्णप्रतिषेधने ॥ ०१२ ॥

अयुद्धेन निवृत्तिं च मनसा चिन्तयाभिभो ।
देवतानां प्रसादेन सर्वमेतद्भविष्यति ॥ ०१३ ॥

मन्त्रिभिर्मन्त्रितं सार्धं त्वया यत्पृथुलोचन ।
पुरस्यास्याविनाशाय तच्च राजंस्तथा कुरु ॥ ०१४ ॥

दैवं हि मानुषोपेतं भृशं सिध्यति पार्थिव ।
परस्परविरोधात्तु नानयोः सिद्धिरस्ति वै ॥ ०१५ ॥

तस्माद्विधाय नगरे विधानं सचिवैः सह ।
अर्चयस्व यथाकामं दैवतानि विशां पते ॥ ०१६ ॥

एवं संभाषमाणौ तौ दृष्ट्वा शोकपरायणौ ।
शिखण्डिनी तदा कन्या व्रीडितेव मनस्विनी ॥ ०१७ ॥

ततः सा चिन्तयामास मत्कृते दुःखिताावुभौ ।
इमाविति ततश्चक्रे मतिं प्राणविनाशने ॥ ०१८ ॥

एवं सा निश्चयं कृत्वा भृशं शोकपरायणा ।
जगाम भवनं त्यक्त्वा गहनं निर्जनं वनम् ॥ ०१९ ॥

यक्षेणर्द्धिमता राजन्स्थूणाकर्णेन पालितम् ।
तद्भयादेव च जनो विसर्जयति तद्वनम् ॥ ०२० ॥

तत्र स्थूणस्य भवनं सुधामृत्तिकलेपनम् ।
लाजोल्लापिकधूमाढ्यमुच्चप्राकारतोरणम् ॥ ०२१ ॥

तत्प्रविश्य शिखण्डी सा द्रुपदस्यात्मजा नृप ।
अनश्नती बहुतिथं शरीरमुपशोषयत् ॥ ०२२ ॥

दर्शयामास तां यक्षः स्थूणो मध्वक्षसंयुतः ।
किमर्थोऽयं तवारम्भः करिष्ये ब्रूहि माचिरम् ॥ ०२३ ॥

अशक्यमिति सा यक्षं पुनः पुनरुवाच ह ।
करिष्यामीति चैनां स प्रत्युवाचाथ गुह्यकः ॥ ०२४ ॥

धनेश्वरस्यानुचरो वरदोऽस्मि नृपात्मजे ।
अदेयमपि दास्यामि ब्रूहि यत्ते विवक्षितम् ॥ ०२५ ॥

ततः शिखण्डी तत्सर्वमखिलेन न्यवेदयत् ।
तस्मै यक्षप्रधानाय स्थूणाकर्णाय भारत ॥ ०२६ ॥

आपन्नो मे पिता यक्ष नचिराद्विनशिष्यति ।
अभियास्यति सङ्क्रुद्धो दशार्णाधिपतिर्हि तम् ॥ ०२७ ॥

महाबलो महोत्साहः स हेमकवचो नृपः ।
तस्माद्रक्षस्व मां यक्ष पितरं मातरं च मे ॥ ०२८ ॥

प्रतिज्ञातो हि भवता दुःखप्रतिनयो मम ।
भवेयं पुरुषो यक्ष त्वत्प्रसादादनिन्दितः ॥ ०२९ ॥

यावदेव स राजा वै नोपयाति पुरं मम ।
तावदेव महायक्ष प्रसादं कुरु गुह्यक ॥ ०३० ॥

---

# अध्याय १९३

भीष्म उवाच ॥

शिखण्डिवाक्यं श्रुत्वाथ स यक्षो भरतर्षभ ।
प्रोवाच मनसा चिन्त्य दैवेनोपनिपीडितः ॥ ००१ ॥

भवितव्यं तथा तद्धि मम दुःखाय कौरव ॥ ००१ ॥

भद्रे कामं करिष्यामि समयं तु निबोध मे ।
किञ्चित्कालान्तरं दास्ये पुंलिङ्गं स्वमिदं तव ॥ ००२ ॥

आगन्तव्यं त्वया काले सत्यमेतद्ब्रवीमि ते ॥ ००२ ॥

प्रभुः सङ्कल्पसिद्धोऽस्मि कामरूपी विहङ्गमः ।
मत्प्रसादात्पुरं चैव त्राहि बन्धूंश्च केवलान्  ॥ ००३  ॥

स्त्रीलिङ्गं धारयिष्यामि त्वदीयं पार्थिवात्मजे ।
सत्यं मे प्रतिजानीहि करिष्यामि प्रियं तव  ॥ ००४  ॥

शिखण्ड्युवाच  ॥

प्रतिदास्यामि भगव.ण्लिङ्गं पुनरिदं तव ।
किञ्चित्कालान्तरं स्त्रीत्वं धारयस्व निशाचर  ॥ ००५  ॥

प्रतिप्रयाते दाशार्णे पार्थिवे हेमवर्मणि ।
कन्यैवाहं भविष्यामि पुरुषस्त्वं भविष्यसि  ॥ ००६  ॥

भीष्म उवाच  ॥

इत्युक्त्वा समयं तत्र चक्राते तावुभौ नृप ।
अन्योन्यस्यानभिद्रोहे तौ सङ्क्रामयतां ततः  ॥ ००७  ॥

स्त्रीलिङ्गं धारयामास स्थूणो यक्षो नराधिप ।
यक्षरूपं च तद्दीप्तं शिखण्डी प्रत्यपद्यत  ॥ ००८  ॥

ततः शिखण्डी पाञ्चाल्यः पुंस्त्वमासाद्य पार्थिव ।
विवेश नगरं हृष्टः पितरं च समासदत्  ॥ ००९  ॥

यथावृत्तं तु तत्सर्वमाचख्यौ द्रुपदस्य च  ॥ ००९  ॥

द्रुपदस्तस्य तच्छ्रुत्वा हर्षमाहारयत्परम् ।
सभार्यस्तच्च सस्मार महेश्वरवचस्तदा  ॥ ०१०  ॥

ततः संप्रेषयामास दशार्णाधिपतेर्नृप ।
पुरुषोऽयं मम सुतः श्रद्धत्तां मे भवानिति ॥ ०११ ॥

अथ दाशार्णको राजा सहसाभ्यागमत्तदा ।
पाञ्चालराजं द्रुपदं दुःखामर्षसमन्वितः ॥ ०१२ ॥

ततः काम्पिल्यमासाद्य दशार्णाधिपतिस्तदा ।
प्रेषयामास सत्कृत्य दूतं ब्रह्मविदां वरम् ॥ ०१३ ॥

ब्रूहि मद्वचनाद्दूत पाञ्चाल्यं तं नृपाधमम् ।
यद्वै कन्यां स्वकन्यार्थे वृतवानसि दुर्मते ॥ ०१४ ॥

फलं तस्यावलेपस्य द्रक्ष्यस्यद्य न संशयः ॥ ०१४ ॥

एवमुक्तस्तु तेनासौ ब्राह्मणो राजसत्तम ।
दूतः प्रयातो नगरं दाशार्णनृपचोदितः ॥ ०१५ ॥

तत आसादयामास पुरोधा द्रुपदं पुरे ।
तस्मै पाञ्चालको राजा गामर्घ्यं च सुसत्कृतम् ॥ ०१६ ॥

प्रापयामास राजेन्द्र सह तेन शिखण्डिना ॥ ०१६ ॥

तां पूजां नाभ्यनन्दत्स वाक्यं चेदमुवाच ह ।
यदुक्तं तेन वीरेण राज्ञा काञ्चनवर्मणा ॥ ०१७ ॥

यत्तेऽहमधमाचार दुहित्रर्थेऽस्मि वञ्चितः ।
तस्य पापस्य करणात्फलं प्राप्नुहि दुर्मते ॥ ०१८ ॥

देहि युद्धं नरपते ममाद्य रणमूर्धनि ।
उद्धरिष्यामि ते सद्यः सामात्यसुतबान्धवम् ॥ ०१९ ॥

तदुपालम्भसंयुक्तं श्रावितः किल पार्थिवः ।
दशार्णपतिदूतेन मन्त्रिमध्ये पुरोधसा ॥ ०२० ॥

अब्रवीद्भरतश्रेष्ठ द्रुपदः प्रणयानतः ।
यदाह मां भवान्ब्रह्मन्संबन्धिवचनाद्वचः ॥ ०२१ ॥

तस्योत्तरं प्रतिवचो दूत एव वदिष्यति ॥ ०२१ ॥

ततः संप्रेषयामास द्रुपदोऽपि महात्मने ।
हिरण्यवर्मणे दूतं ब्राह्मणं वेदपारगम् ॥ ०२२ ॥

समागम्य तु राज्ञा स दशार्णपतिना तदा ।
तद्वाक्यमाददे राजन्यदुक्तं द्रुपदेन ह ॥ ०२३ ॥

आगमः क्रियतां व्यक्तं कुमारो वै सुतो मम ।
मिथ्यैतदुक्तं केनापि तन्न श्रद्धेयमित्युत ॥ ०२४ ॥

ततः स राजा द्रुपदस्य श्रुत्वा ; विमर्शयुक्तो युवतीर्वरिष्ठाः ।
संप्रेषयामास सुचारुरूपाः ; शिखण्डिनं स्त्री पुमान्वेति वेत्तुम् ॥ ०२५ ॥

ताः प्रेषितास्तत्त्वभावं विदित्वा ; प्रीत्या राज्ञे तच्छशंसुर्हि सर्वम् ।
शिखण्डिनं पुरुषं कौरवेन्द्र ; दशार्णराजाय महानुभावम् ॥ ०२६ ॥

ततः कृत्वा तु राजा स आगमं प्रीतिमानथ ।
संबन्धिना समागम्य हृष्टो वासमुवास ह ॥ ०२७ ॥

शिखण्डिने च मुदितः प्रादाद्वित्तं जनेश्वरः ।
हस्तिनोऽश्वांश्च गाश्चैव दास्यो बहुशतास्तथा ॥ ०२८ ॥

पूजितश्च प्रतिययौ निवर्त्य तनयां किल ॥ ०२८ ॥

विनीतकिल्बिषे प्रीते हेमवर्मणि पार्थिवे ।
प्रतियाते तु दाशार्णे हृष्टरूपा शिखण्डिनी ॥ ०२९ ॥

कस्यचित्त्वथ कालस्य कुबेरो नरवाहनः ।
लोकानुयात्रां कुर्वाणः स्थूणस्यागान्निवेशनम् ॥ ०३० ॥

स तद्गृहस्योपरि वर्तमान ; आलोकयामास धनाधिगोप्ता ।
स्थूणस्य यक्षस्य निशाम्य वेश्म ; स्वलङ्कृतं माल्यगुणैर्विचित्रम् ॥ ०३१ ॥

लाजैश्च गन्धैश्च तथा वितानै ;रभ्यर्चितं धूपनधूपितं च ।
ध्वजैः पताकाभिरलङ्कृतं च ; भक्ष्यान्नपेयामिषदत्तहोमम् ॥ ०३२ ॥

तत्स्थानं तस्य दृष्ट्वा तु सर्वतः समलङ्कृतम् ।
अथाब्रवीद्यक्षपतिस्तान्यक्षाननुगांस्तदा ॥ ०३३ ॥

स्वलङ्कृतमिदं वेश्म स्थूणस्यामितविक्रमाः ।
नोपसर्पति मां चापि कस्मादद्य सुमन्दधीः ॥ ०३४ ॥

यस्माज्जानन्सुमन्दात्मा मामसौ नोपसर्पति ।
तस्मात्तस्मै महादण्डो धार्यः स्यादिति मे मतिः ॥ ०३५ ॥

यक्षा ऊचुः ॥

द्रुपदस्य सुता राजन्राज्ञो जाता शिखण्डिनी ।
तस्यै निमित्ते कस्मिंश्चित्प्रादात्पुरुषलक्षणम् ॥ ०३६ ॥

अग्रहील्लक्षणं स्त्रीणां स्त्रीभूतस्तिष्ठते गृहे ।
नोपसर्पति तेनासौ सव्रीडः स्त्रीस्वरूपवान् ॥ ०३७ ॥

एतस्मात्कारणाद्राजन्स्थूणो न त्वाद्य पश्यति ।

श्रुत्वा कुरु यथान्यायं विमानमिह तिष्ठताम्  ॥ ०३८  ॥

भीष्म उवाच  ॥

आनीयतां स्थूण इति ततो यक्षाधिपोऽब्रवीत् ।
कर्तास्मि निग्रहं तस्येत्युवाच स पुनः पुनः  ॥ ०३९  ॥

सोऽभ्यगच्छत यक्षेन्द्रमाहूतः पृथिवीपते ।
स्त्रीस्वरूपो महाराज तस्थौ व्रीडासमन्वितः  ॥ ०४०  ॥

तं शशाप सुसङ्क्रुद्धो धनदः कुरुनन्दन ।
एवमेव भवत्वस्य स्त्रीत्वं पापस्य गुह्यकाः  ॥ ०४१  ॥

ततोऽब्रवीद्यक्षपतिर्महात्मा ; यस्माददास्त्ववमन्येह यक्षान् ।
शिखण्डिने लक्षणं पापबुद्धे ; स्त्रीलक्षणं चाग्रहीः पापकर्मन्  ॥ ०४२  ॥

अप्रवृत्तं सुदुर्बुद्धे यस्मादेतत्कृतं त्वया ।
तस्मादद्य प्रभृत्येव त्वं स्त्री स पुरुषस्तथा  ॥ ०४३  ॥

ततः प्रसादयामासुर्यक्षा वैश्रवणं किल ।
स्थूणस्यार्थे कुरुष्वान्तं शापस्येति पुनः पुनः  ॥ ०४४  ॥

ततो महात्मा यक्षेन्द्रः प्रत्युवाचानुगामिनः ।
सर्वान्यक्षगणांस्तात शापस्यान्तचिकीर्षया  ॥ ०४५  ॥

हते शिखण्डिनि रणे स्वरूपं प्रतिपत्स्यते ।
स्थूणो यक्षो निरुद्वेगो भवत्विति महामनाः  ॥ ०४६  ॥

इत्युक्त्वा भगवान्देवो यक्षराक्षसपूजितः ।
प्रययौ सह तैः सर्वैर्निमेषान्तरचारिभिः  ॥ ०४७  ॥

स्थूणस्तु शापं संप्राप्य तत्रैव न्यवसत्तदा ।
समये चागमत्तं वै शिखण्डी स क्षपाचरम् ॥ ०४८ ॥

सोऽभिगम्याब्रवीद्वाक्यं प्राप्तोऽस्मि भगवन्निति ।
तमब्रवीत्ततः स्थूणः प्रीतोऽस्मीति पुनः पुनः ॥ ०४९ ॥

आर्जवेनागतं दृष्ट्वा राजपुत्रं शिखण्डिनम् ।
सर्वमेव यथावृत्तमाचचक्षे शिखण्डिने ॥ ०५० ॥

यक्ष उवाच ॥

शप्तो वैश्रवणेनास्मि त्वत्कृते पार्थिवात्मज ।
गच्छेदानीं यथाकामं चर लोकान्यथासुखम् ॥ ०५१ ॥

दिष्टमेतत्पुरा मन्ये न शक्यमतिवर्तितुम् ।
गमनं तव चेतो हि पौलस्त्यस्य च दर्शनम् ॥ ०५२ ॥

भीष्म उवाच ॥

एवमुक्तः शिखण्डी तु स्थूणयक्षेण भारत ।
प्रत्याजगाम नगरं हर्षेण महतान्वितः ॥ ०५३ ॥

पूजयामास विविधैर्गन्धमाल्यैर्महाधनैः ।
द्विजातीन्देवताश्चापि चैत्यानथ चतुष्पथान् ॥ ०५४ ॥

द्रुपदः सह पुत्रेण सिद्धार्थेन शिखण्डिना ।
मुदं च परमां लेभे पाञ्चाल्यः सह बान्धवैः ॥ ०५५ ॥

शिष्यार्थं प्रददौ चापि द्रोणाय कुरुपुङ्गव ।
शिखण्डिनं महाराज पुत्रं स्त्रीपूर्विणं तथा ॥ ०५६ ॥

प्रतिपेदे चतुष्पादं धनुर्वेदं नृपात्मजः ।
शिखण्डी सह युष्माभिर्धृष्टद्युम्नश्च पार्षतः ॥ ०५७ ॥

मम त्वेतच्चरास्तात यथावत्प्रत्यवेदयन् ।
जडान्धबधिराकारा ये युक्ता द्रुपदे मया ॥ ०५८ ॥

एवमेष महाराज स्त्रीपुमान्द्रुपदात्मजः ।
संभूतः कौरवश्रेष्ठ शिखण्डी रथसत्तमः ॥ ०५९ ॥

ज्येष्ठा काशिपतेः कन्या अम्बा नामेति विश्रुता ।
द्रुपदस्य कुले जाता शिखण्डी भरतर्षभ ॥ ०६० ॥

नाहमेनं धनुष्पाणिं युयुत्सुं समुपस्थितम् ।
मुहूर्तमपि पश्येयं प्रहरेयं न चाप्युत ॥ ०६१ ॥

व्रतमेतन्मम सदा पृथिव्यामपि विश्रुतम् ।
स्त्रियां स्त्रीपूर्वके चापि स्त्रीनाम्नि स्त्रीस्वरूपिणि ॥ ०६२ ॥

न मुञ्चेयमहं बाणानिति कौरवनन्दन ।
न हन्यामहमेतेन कारणेन शिखण्डिनम् ॥ ०६३ ॥

एतत्तत्त्वमहं वेद जन्म तात शिखण्डिनः ।
ततो नैनं हनिष्यामि समरेष्वाततायिनम् ॥ ०६४ ॥

यदि भीष्मः स्त्रियं हन्याद्धन्यादात्मानमप्युत ।
नैनं तस्माद्धनिष्यामि दृष्ट्वापि समरे स्थितम् ॥ ०६५ ॥

सञ्जय उवाच ॥

एतच्छ्रुत्वा तु कौरव्यो राजा दुर्योधनस्तदा ।
मुहूर्तमिव स ध्यात्वा भीष्मे युक्तममन्यत ॥ ०६६ ॥

# अध्याय १९४

सञ्जय उवाच ॥

प्रभातायां तु शर्वर्यां पुनरेव सुतस्तव ।
मध्ये सर्वस्य सैन्यस्य पितामहमपृच्छत ॥ ००१ ॥

पाण्डवेयस्य गाङ्गेय यदेतत्सैन्यमुत्तमम् ।
प्रभूतनरनागाश्वं महारथसमाकुलम् ॥ ००२ ॥

भीमार्जुनप्रभृतिभिर्महेष्वासैर्महाबलैः ।
लोकपालोपमैर्गुप्तं धृष्टद्युम्नपुरोगमैः ॥ ००३ ॥

अप्रधृष्यमनावार्यमुद्धृत्तमिव सागरम् ।
सेनासागरमक्षोभ्यमपि देवैर्महाहवे ॥ ००४ ॥

केन कालेन गाङ्गेय क्षपयेथा महाद्युते ।
आचार्यो वा महेष्वासः कृपो वा सुमहाबलः ॥ ००५ ॥

कर्णो वा समरश्लाघी द्रौणिर्वा द्विजसत्तमः ।
दिव्यास्त्रविदुषः सर्वे भवन्तो हि बले मम ॥ ००६ ॥

एतदिच्छाम्यहं ज्ञातुं परं कौतूहलं हि मे ।
हृदि नित्यं महाबाहो वक्तुमर्हसि तन्मम ॥ ००७ ॥

भीष्म उवाच ॥

अनुरूपं कुरुश्रेष्ठ त्वय्येतत्पृथिवीपते ।
बलाबलममित्राणां स्वेषां च यदि पृच्छसि ॥ ००८ ॥

शृणु राजन्मम रणे या शक्तिः परमा भवेत् ।
अस्त्रवीर्यं रणे यच्च भुजयोश्च महाभुज ॥ ००९ ॥

आर्जवेनैव युद्धेन योद्धव्य इतरो जनः ।
मायायुद्धेन मायावी इत्येतद्धर्मनिश्चयः ॥ ०१० ॥

हन्यामहं महाबाहो पाण्डवानामनीकिनीम् ।
दिवसे दिवसे कृत्वा भागं प्रागाह्निकं मम ॥ ०११ ॥

योधानां दशसाहस्रं कृत्वा भागं महाद्युते ।
सहस्रं रथिनामेकमेष भागो मतो मम ॥ ०१२ ॥

अनेनाहं विधानेन संनद्धः सततोत्थितः ।
क्षपयेयं महत्सैन्यं कालेनानेन भारत ॥ ०१३ ॥

यदि त्वस्त्राणि मुञ्चेयं महान्ति समरे स्थितः ।
शतसाहस्रघातीनि हन्यां मासेन भारत ॥ ०१४ ॥

सञ्जय उवाच ॥

श्रुत्वा भीष्मस्य तद्वाक्यं राजा दुर्योधनस्तदा ।
पर्यपृच्छत राजेन्द्र द्रोणमङ्गिरसां वरम् ॥ ०१५ ॥

आचार्य केन कालेन पाण्डुपुत्रस्य सैनिकान् ।
निहन्या इति तं द्रोणः प्रत्युवाच हसन्निव ॥ ०१६ ॥

स्थविरोऽस्मि कुरुश्रेष्ठ मन्दप्राणविचेष्टितः ।

अस्त्राग्निना निर्दहेयं पाण्डवानामनीकिनीम्  ॥ ०१७  ॥

यथा भीष्मः शांतनवो मासेनेति मतिर्मम ।
एषा मे परमा शक्तिरेतन्मे परमं बलम्  ॥ ०१८  ॥

द्वाभ्यामेव तु मासाभ्यां कृपः शारद्वतोऽब्रवीत् ।
द्रौणिस्तु दशरात्रेण प्रतिजज्ञे बलक्षयम्  ॥ ०१९  ॥

कर्णस्तु पञ्चरात्रेण प्रतिजज्ञे महास्त्रवित्  ॥ ०१९  ॥

तच्छ्रुत्वा सूतपुत्रस्य वाक्यं सागरगासुतः ।
जहास सस्वनं हासं वाक्यं चेदमुवाच ह  ॥ ०२०  ॥

न हि तावद्रणे पार्थं बाणखड्गधनुर्धरम् ।
वासुदेवसमायुक्तं रथेनोद्यन्तमच्युतम्  ॥ ०२१  ॥

समागच्छसि राधेय तेनैवमभिमन्यसे ।
शक्यमेवं च भूयश्च त्वया वक्तुं यथेष्टतः  ॥ ०२२  ॥

---

# अध्याय १९५

वैशंपायन उवाच  ॥

एतच्छ्रुत्वा तु कौन्तेयः सर्वान्भ्रातॄनुपह्वरे ।
आहूय भरतश्रेष्ठ इदं वचनमब्रवीत्  ॥ ००१  ॥

धार्तराष्ट्रस्य सैन्येषु ये चारपुरुषा मम ।
ते प्रवृत्तिं प्रयच्छन्ति ममेमां व्युषितां निशाम्  ॥ ००२  ॥

दुर्योधनः किलापृच्छदापगेयं महाव्रतम् ।
केन कालेन पाण्डूनां हन्याः सैन्यमिति प्रभो ॥ ००३ ॥

मासेनेति च तेनोक्तो धार्तराष्ट्रः सुदुर्मतिः ।
तावता चापि कालेन द्रोणोऽपि प्रत्यजानत ॥ ००४ ॥

गौतमो द्विगुणं कालमुक्तवानिति नः श्रुतम् ।
द्रौणिस्तु दशरात्रेण प्रतिजज्ञे महास्त्रवित् ॥ ००५ ॥

तथा दिव्यास्त्रवित्कर्णः संपृष्टः कुरुसंसदि ।
पञ्चभिर्दिवसैर्हन्तुं स सैन्यं प्रतिजज्ञिवान् ॥ ००६ ॥

तस्मादहमपीच्छामि श्रोतुमर्जुन ते वचः ।
कालेन कियता शत्रून्क्षपयेरिति संयुगे ॥ ००७ ॥

एवमुक्तो गुडाकेशः पार्थिवेन धनञ्जयः ।
वासुदेवमवेक्ष्येदं वचनं प्रत्यभाषत ॥ ००८ ॥

सर्व एते महात्मानः कृतास्त्राश्चित्रयोधिनः ।
असंशयं महाराज हन्युरेव बलं तव ॥ ००९ ॥

अपैतु ते मनस्तापो यथासत्यं ब्रवीम्यहम् ।
हन्यामेकरथेनाहं वासुदेवसहायवान् ॥ ०१० ॥

सामरानपि लोकांस्त्रीन्सहस्थावरजङ्गमान् ।
भूतं भव्यं भविष्यच्च निमेषादिति मे मतिः ॥ ०११ ॥

यत्तद्घोरं पशुपतिः प्रादादस्त्रं महन्मम ।
कैराते द्वन्द्वयुद्धे वै तदिदं मयि वर्तते ॥ ०१२ ॥

यद्युगान्ते पशुपतिः सर्वभूतानि संहरन् ।
प्रयुङ्क्ते पुरुषव्याघ्र तदिदं मयि वर्तते ॥ ०१३ ॥

तन्न जानाति गाङ्गेयो न द्रोणो न च गौतमः ।
न च द्रोणसुतो राजन्कुत एव तु सूतजः ॥ ०१४ ॥

न तु युक्तं रणे हन्तुं दिव्यैरस्त्रैः पृथग्जनम् ।
आर्जवेनैव युद्धेन विजेष्यामो वयं परान् ॥ ०१५ ॥

तथेमे पुरुषव्याघ्राः सहायास्तव पार्थिव ।
सर्वे दिव्यास्त्रविदुषः सर्वे युद्धाभिनन्दिनः ॥ ०१६ ॥

वेदान्तावभृथस्नाताः सर्व एतेऽपराजिताः ।
निहन्युः समरे सेनां देवानामपि पाण्डव ॥ ०१७ ॥

शिखण्डी युयुधानश्च धृष्टद्युम्नश्च पार्षतः ।
भीमसेनो यमौ चोभौ युधामन्यूत्तमौजसौ ॥ ०१८ ॥

विराटद्रुपदौ चोभौ भीष्मद्रोणसमौ युधि ।
स्वयं चापि समर्थोऽसि त्रैलोक्योत्सादने अपि ॥ ०१९ ॥

क्रोधाद्यं पुरुषं पश्येस्त्वं वासवसमद्युते ।
क्षिप्रं न स भवेद्व्यक्तमिति त्वां वेद्मि कौरव ॥ ०२० ॥

---

# अध्याय १९६

वैशंपायन उवाच ॥

ततः प्रभाते विमले धार्तराष्ट्रेण चोदिताः ।
दुर्योधनेन राजानः प्रययुः पाण्डवान्प्रति ॥ ००१ ॥

आप्लाव्य शुचयः सर्वे स्रग्विणः शुक्लवाससः ।
गृहीतशस्त्रा ध्वजिनः स्वस्ति वाच्य हुताग्नयः ॥ ००२ ॥

सर्वे वेदविदः शूराः सर्वे सुचरितव्रताः ।
सर्वे कर्मकृतश्चैव सर्वे चाहवलक्षणाः ॥ ००३ ॥

आहवेषु परा.ण्ल्लोकाञ्जिगीषन्तो महाबलाः ।
एकाग्रमनसः सर्वे श्रद्दधानाः परस्य च ॥ ००४ ॥

विन्दानुविन्दावावन्त्यौ केकया बाह्लिकैः सह ।
प्रययुः सर्व एवैते भारद्वाजपुरोगमाः ॥ ००५ ॥

अश्वत्थामा शांतनवः सैन्धवोऽथ जयद्रथः ।
दाक्षिणात्याः प्रतीच्याश्च पार्वतीयाश्च ये रथाः ॥ ००६ ॥

गान्धारराजः शकुनिः प्राच्योदीच्याश्च सर्वशः ।
शकाः किराता यवनाः शिबयोऽथ वसातयः ॥ ००७ ॥

स्वैः स्वैरनीकैः सहिताः परिवार्य महारथम् ।
एते महारथाः सर्वे द्वितीये निर्ययुर्बले ॥ ००८ ॥

कृतवर्मा सहानीकस्त्रिगर्ताश्च महाबलाः ।
दुर्योधनश्च नृपतिर्भ्रातृभिः परिवारितः ॥ ००९ ॥

शलो भूरिश्रवाः शल्यः कौसल्योऽथ बृहद्बलः ।
एते पश्चादवर्तन्त धार्तराष्ट्रपुरोगमाः ॥ ०१० ॥

ते समेन पथा यात्वा योत्स्यमाना महारथाः ।
कुरुक्षेत्रस्य पश्चार्धे व्यवतिष्ठन्त दंशिताः ॥ ०११ ॥

दुर्योधनस्तु शिबिरं कारयामास भारत ।
यथैव हास्तिनपुरं द्वितीयं समलङ्कृतम् ॥ ०१२ ॥

न विशेषं विजानन्ति पुरस्य शिबिरस्य वा ।
कुशला अपि राजेन्द्र नरा नगरवासिनः ॥ ०१३ ॥

तादृशान्येव दुर्गाणि राज्ञामपि महीपतिः ।
कारयामास कौरव्यः शतशोऽथ सहस्रशः ॥ ०१४ ॥

पञ्चयोजनमुत्सृज्य मण्डलं तद्रणाजिरम् ।
सेनानिवेशास्ते राजन्नाविशञ्शतसंघशः ॥ ०१५ ॥

तत्र ते पृथिवीपाला यथोत्साहं यथाबलम् ।
विविशुः शिबिराण्याशु द्रव्यवन्ति सहस्रशः ॥ ०१६ ॥

तेषां दुर्योधनो राजा ससैन्यानां महात्मनाम् ।
व्यादिदेश सबाह्यानां भक्ष्यभोज्यमनुत्तमम् ॥ ०१७ ॥

सगजाश्वमनुष्याणां ये च शिल्पोपजीविनः ।
ये चान्येऽनुगतास्तत्र सूतमागधबन्दिनः ॥ ०१८ ॥

वणिजो गणिका वारा ये चैव प्रेक्षका जनाः ।
सर्वांस्तान्कौरवो राजा विधिवत्प्रत्यवैक्षत ॥ ०१९ ॥

# अध्याय १९७

वैशंपायन उवाच ॥

तथैव राजा कौन्तेयो धर्मपुत्रो युधिष्ठिरः ।
धृष्टद्युम्नमुखान्वीरांश्चोदयामास भारत ॥ ००१ ॥

चेदिकाशिकरूषाणां नेतारं दृढविक्रमम् ।
सेनापतिममित्रघ्नं धृष्टकेतुमथादिशत् ॥ ००२ ॥

विराटं द्रुपदं चैव युयुधानं शिखण्डिनम् ।
पाञ्चाल्यौ च महेष्वासौ युधामन्यूत्तमौजसौ ॥ ००३ ॥

ते शूराश्चित्रवर्माणस्तप्तकुण्डलधारिणः ।
आज्यावसिक्ता ज्वलिता धिष्ण्येष्विव हुताशनाः ॥ ००४ ॥

अशोभन्त महेष्वासा ग्रहाः प्रज्वलिता इव ॥ ००४ ॥

सोऽथ सैन्यं यथायोगं पूजयित्वा नरर्षभः ।
दिदेश तान्यनीकानि प्रयाणाय महीपतिः ॥ ००५ ॥

अभिमन्युं बृहन्तं च द्रौपदेयांश्च सर्वशः ।
धृष्टद्युम्नमुखानेतान्प्राहिणोत्पाण्डुनन्दनः ॥ ००६ ॥

भीमं च युयुधानं च पाण्डवं च धनञ्जयम् ।
द्वितीयं प्रेषयामास बलस्कन्धं युधिष्ठिरः ॥ ००७ ॥

भाण्डं समारोपयतां चरतां संप्रधावताम् ।
हृष्टानां तत्र योधानां शब्दो दिवमिवास्पृशत् ॥ ००८ ॥

स्वयमेव ततः पश्चाद्विराटद्रुपदान्वितः ।

तथान्यैः पृथिवीपालैः सह प्रायान्महीपतिः ॥ ००९ ॥

भीमधन्वायनी सेना धृष्टद्युम्नपुरस्कृता ।
गङ्गेव पूर्णा स्तिमिता स्यन्दमाना व्यदृश्यत ॥ ०१० ॥

ततः पुनरनीकानि व्ययोजयत बुद्धिमान् ।
मोहयन्धृतराष्ट्रस्य पुत्राणां बुद्धिनिस्रवम् ॥ ०११ ॥

द्रौपदेयान्महेष्वासानभिमन्युं च पाण्डवः ।
नकुलं सहदेवं च सर्वांश्चैव प्रभद्रकान् ॥ ०१२ ॥

दश चाश्वसहस्राणि द्विसाहस्रं च दन्तिनः ।
अयुतं च पदातीनां रथाः पञ्चशतास्तथा ॥ ०१३ ॥

भीमसेनं च दुर्धर्षं प्रथमं प्रादिशद्बलम् ।
मध्यमे तु विराटं च जयत्सेनं च मागधम् ॥ ०१४ ॥

महारथौ च पाञ्चाल्यौ युधामन्यूत्तमौजसौ ।
वीर्यवन्तौ महात्मानौ गदाकार्मुकधारिणौ ॥ ०१५ ॥

अन्वयातां ततो मध्ये वासुदेवधनञ्जयौ ॥ ०१५ ॥

बभूवुरतिसंरब्धाः कृतप्रहरणा नराः ।
तेषां विंशतिसाहस्रा ध्वजाः शूरैरधिष्ठिताः ॥ ०१६ ॥

पञ्च नागसहस्राणि रथवंशाश्च सर्वशः ।
पदातयश्च ये शूराः कार्मुकासिगदाधराः ॥ ०१७ ॥

सहस्रशोऽन्वयुः पश्चादग्रतश्च सहस्रशः ॥ ०१७ ॥

युधिष्ठिरो यत्र सैन्ये स्वयमेव बलार्णवे ।

तत्र ते पृथिवीपाला भूयिष्ठं पर्यवस्थिताः ॥ ०१८ ॥

तत्र नागसहस्राणि हयानामयुतानि च ।
तथा रथसहस्राणि पदातीनां च भारत ॥ ०१९ ॥

यदाश्रित्याभियुयुधे धार्तराष्ट्रं सुयोधनम् ॥ ०१९ ॥

ततोऽन्ये शतशः पश्चात्सहस्रायुतशो नराः ।
नदन्तः प्रययुस्तेषामनीकानि सहस्रशः ॥ ०२० ॥

तत्र भेरीसहस्राणि शङ्खानामयुतानि च ।
वादयन्ति स्म संहृष्टाः सहस्रायुतशो नराः ॥ ०२१ ॥

---

Mahabharata
Encoding : ISCII
Electronic text (C) Bhandarkar Oriental Research Institute, Pune, India, 1999
http ://bombay.indology.info/mahabharata/statement.html for further details
Converted for devanagari output using xetex-itrans with sdvn mapping on July 23, 2013